भा.–धारकत्वात् धर्मो भगवान् ।

भगवज्ज्ञानस्य दुःस्साध्यत्वात् तत्रैव नचिकेतसा आग्रहप्रदर्शनम्

उप.– देवैरत्रापि विचिकित्सितं किल
त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो
नान्यो वरस्तुल्य एतस्य कश्चित् ।। २१ ।।

शतायुषः पुत्रपौत्रान् वृणीष्व
बहून् पशून् हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व
स्वयं च जीव शरदो यावदिच्छसि ।। २२ ।।

एतत् तुल्यं यदि मन्यसे वरं
वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि
कामानां त्वा कामभाजं करोमि ।। २३ ।।

ये ये कामा दुर्लभा मर्त्यलोके
सर्वान् कामांश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्या
न हीदृशा लम्भनीया मनुष्यैः ।।
आभिर्मत्प्रत्ताभिः परिचारयस्व
नचिकेतो मरणं माऽनुप्राक्षीः ।। २४ ।।

भा.–मरणे स्थितं भगवन्तं मानुप्राक्षीः ।

उप.– श्वोऽभावा मर्त्यस्य यदन्तकैतत्
सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव
तवैव वाहास्तव नृत्तगीतम् ।। २५ ।।

न वित्तेन तर्पणीयो मनुष्यो
लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वाम् ।
जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव ।। २६ ।।

अजीर्यताममृतानामुपेत्य
जीर्यन् मर्त्यः क्वाधस्थः प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदान्
अतिदीर्घे जीविते को रमेत ।। २७ ।।

यस्मिन्निदं विचिकित्सन्ति मृत्यो
साम्पराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो
नान्यं तस्मान्नचिकेता वृणीते ।। २८ ।।

।। इति काठकोपनिषत्सु प्रथमाध्याये प्रथमावल्ली ।।

भा.–महति साम्पराये मुक्तौ ।।

।। इति काठकोपनिषद्भाष्ये प्रथमाध्याये प्रथमावल्ली ।।

## अथ प्रथमाध्याये द्वितीयावल्ली

### ब्रह्मविद्याभोगपदार्थविवेचनम्

उप.– अन्यच्छ्रेयोऽन्यदुतेव प्रेयः
ते उभे नानार्थे पुरुषं सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद् य उ प्रेयो वृणीते ।। १ ।।

श्रेयश्च प्रेयश्च मनुष्यमेत-
स्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो धीरोऽभिप्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमान् वृणीते ।। २ ।।

स त्वं प्रियान् प्रियरूपांश्च कामान्
अभिध्यायन् नचिकेतोऽत्यस्राक्षीः ।
नैतां सृङ्कां वित्तमयीमवाप्तो
यस्यां मज्जन्ति बहवो मनुष्याः ।। ३ ।।

भा.– शृङ्कां शृङ्कलाम् ।।

### ज्ञानाज्ञानमध्ये आन्तर्यप्रदर्शनम्

उप.– दूरमेते विपरीते विषूची
अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सितं नचिकेतसं मन्ये
न त्वा कामा बहवो लोलुपन्तः ।। ४ ।।

अविद्यायामन्तरे वर्तमानाः
स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ।। ५ ।।

न साम्परायः प्रतिभाति बालं
प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी
पुनः पुनर्वशमापद्यते मे ।। ६ ।।

तत्वज्ञानस्य दुःसाध्यत्वप्रतिपादनम्

उप.– श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा
आश्चर्यो ज्ञाता कुशलानुशिष्टः ।। ७ ।।

सुज्ञानिनैव सम्यग् भगवदुपदेशस्य कथनम्

न नरेणावरः प्रोक्त एष
सुज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरस्य ना-
स्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ।। ८ ।।

भा.–अन्यो भगवानन्योऽहमित्यजानन्ननन्यः । तेन प्रोक्ते गतिर्ज्ञानं नास्ति । 'प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति वाक्यशेषात् ।

जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् ।
तदनुव्रताश्च ये केचित्तेषां ज्ञानं न जायते ।। इति ब्रह्मवैवर्ते ।

उप.– नैषा तर्केण मतिरापनेया
प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापः सत्यधृतिर्बतासि
त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ।। ९ ।।

यमस्य सुज्ञानित्वनिरूपणम्

जानाम्यहं शेवधिरित्यनित्यं
न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नचिकेतश्चितोऽग्नि-
रनित्यद्रव्यैः प्राप्तवानस्मि नित्यम् ।। १० ।।

भा.–आख्यं विष्ण्वाख्यं नित्यं शेवधिरिति जानामि । नित्यमाख्यविष्णुविषयैः द्रव्यैर्मन आदिभिः । आख्यनित्यविषयैर्विष्ण्वाख्यनित्यविषयैः द्रव्यैः । नित्यं भगवन्तं प्राप्तवानस्मि । ध्रुवो भगवान् । अध्रुवैस्तद्भक्तिवर्जितैर्न प्राप्यते ।। १० ।।

उप.– कामस्याप्तिं जगतः प्रतिष्ठां
क्रतोरानन्त्यमभयस्य पारम् ।
स्तोममहदुरुगायं प्रतिष्ठां
दृष्ट्वा धृत्या धीरो नचिकेतोत्यस्राक्षीः ।। ११ ।।

भा.– क्रतोरानन्त्यहेतुम् । स्तोमैरपि सर्वात्मना प्राप्तुमशक्यम् । स्तोमेभ्योऽपि महान्तम् । उरुगायमित्युक्तत्वाच्च न जीवविषयोऽयं प्रश्नः ।

उपनिषदोऽभेदपरत्वनिराकरणम्

'शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । शरवत् तन्मयो भवेत् । अभयं तितीर्षतां पारम् । तादृगेव भवति ।' इत्यादौ सर्वत्र भेदस्यैवोक्तेश्च न जीवाभेदः । नाचिकेतं शकेमसीत्युक्तत्वाच्च नाचिकेताग्निस्थो भगवानेवात्रोच्यत इति सिद्धम् । उरुगायं दृष्ट्वा कामस्याप्तिमत्यस्राक्षीः । न च मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति न वेति संशयो युज्यते ।। ११ ।।

उप.– तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाति ।। १२ ।।

भा.– गह्वरे मुक्तजीवे स्थितम् ।। १२ ।।

महतामुपदेशेन तत्त्वज्ञानलाभः

उप.– एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः
प्रवृह्य धर्म्यमणुमेनमाप्य ।
स मोदते मोदनीयं हि लब्ध्वा
विवृतं सद्म नचिकेतसं मन्ये ।। १३ ।।

भा.– प्रवृह्य जीवात् पृथक्कृत्य ।

मुक्तजीवे स्थितं विष्णुं विदित्वा जीवतः पृथक् ।
मोदते मोदनीयं तं प्राप्य मुक्तस्सदैव च ।। इति महावाराहे ।

उप.– अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद ।। १४ ।।

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण
ब्रवीम्योमित्येतत् ।। १५ ।।

एतद्ध्येवाक्षरं ब्रह्मैतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।। १६ ।।

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ।। १७ ।।

भा.–एतद्ध्येवाक्षरं ब्रह्म विष्णवाख्यं परमव्ययम् ।
सर्वस्यालम्बनं ज्ञात्वा मुच्यते नात्र संशयः ।। इति च ।।१७।।

ब्रह्मज्ञानिनः जननमरणाभावसमर्थनम्

उप.– न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमानेऽपि देहे ।। १८ ।।

भा.–देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ ।
न कुतश्चिद्यतो विष्णुर्जायतेऽतस्तदीक्षणात् ।।

भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ।
जायते म्रियते वापि स्वरूपेण कथञ्चन ।।
अजो नित्योऽविकारश्च जीवः पुरमणन्नपि ।। इति च ।

अयं भगवान् कुतोऽपि न बभूव यस्मादतस्तद्वेत्तापि विपश्चिन्न

जायते न म्रियते च । यतः कश्चिज्जीवः स्वतो न बभूव । देह-सम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावान्न जायते न म्रियते च ।। १८ ।।

जीवानां स्वरूपतो नित्यत्वकथनम्

उप.– हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तै न विजानीतो नायं हन्ति न हन्यते ।। १९ ।।

भा.– जीवस्यापि स्वतो मरणाभावादुभौ तौ न विजानीतः ।

भगवतोऽणुतोऽणीयस्त्वस्य महतो महीयत्वस्य कथनम्

उप.– अणोरणीयान् महतो महीयान्
आत्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको
धातुः प्रसादान्महिमानमात्मनः ।। २० ।।

भा.– एवं नित्यस्य जन्तोर्गुहायां निहितः । ए विष्णौ क्रतुर्यस्य सोऽक्रतुस्तन्निश्चयः । आत्मनः सकाशान्महिमानं महामानम् ।

जीवाद् गुणपरीमाणं यस्माद्विष्णोर्महत्तरम् ।
तस्माज्जीवात् स महिमा विष्णुरित्युच्यते श्रुतौ ।। इति च ।।

भगवान् सर्वशक्तः

उप.– आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ।। २१ ।।

भा.– ऐश्वर्यादेव 'आसीनो दूरं व्रजति' इत्यादि ।

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
ऐश्वर्याद् भगवान् विष्णुर्विरुद्धं घटयत्यसौ ।। इति च ।।२१।।

विनाशिशरीरेषु स्थितस्य भगवतोऽविनाशित्वकथनम्

उप.– अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।। २२ ।।

भगवदनुग्रहस्य साक्षात्कारसाधनत्वकथनम्

नायमात्मा प्रवचेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।। २३ ।।

विना वैराग्यादिकं भगवदनुग्रहानुत्पादप्रतिपादनम्

नाविरतो दुश्चरितात् नाशान्तो नासमाहितः ।
नाशान्तमनसो वापि प्रज्ञानेनैवमाप्नुयात् ।। २४ ।।

भगवज्ज्ञानस्य दुर्लभताप्रतिपादनम्

यस्य ब्रह्म च क्षत्रं च चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।। २५ ।।

इति काठकोपनिषत्सु प्रथमाध्याये द्वितीया वल्ली ।।

## अथ प्रथमाध्याये तृतीयवल्ली

### हृदयस्थमुख्यप्राणप्रतीके भगवद्ध्यानम्

उप.– ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिनाचिकेताः ।। १ ।।

भा.–आत्मान्तरात्मेति विभुरेक एव द्विधा स्थितः ।
स विष्णुः परमे वायौ परेभ्योऽप्यृद्धरूपके ।।

शुभान् पिवति भोगान् स च्छायेव विदुषां प्रभुः ।
आतपः पापिनां नित्यं ....... .......... ।

### अग्निस्थो मुक्तस्थश्च भगवानेक एव

उप.– यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं नाचिकेतं शकेमसि ।। २ ।।

भा.–........ ....... मर्यादा विष्णुयाजिनाम् ।।
संसारस्य च पारस्थस्स विष्णुर्द्विस्वरूपकः ।।

### ध्याने इन्द्रियनिग्रहस्यावश्यकताविचारः

उप.– आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
वुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।। ३ ।।

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।। ४ ।।

इन्द्रियनिग्रहस्य विवेकसाध्यत्वनिरूपणम्

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ।। ५ ।।

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ।। ६ ।।

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ।। ७ ।।

यस्तु विज्ञानवान् भवति समनस्कः सदाशुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ।। ८ ।।

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ।। ९ ।।

देवतातारतम्यप्रतिपादनम्

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ।। १० ।।

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परः किञ्चित् सा काष्ठा सा परा गतिः ।।११।।

भा.– देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः ।।

यमो दक्षश्चेन्द्रियेशास्सुपर्णी वारुणी तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ।।

मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ।।

तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ।।
कश्चित् कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ।।
।। १०-१२ ।।

देवेष्वपि स्वस्वामिभावसम्बन्धकथनम्

उप.– एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।। १२ ।।

यच्छेद् वाङ्मनसि प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि ।। १३ ।।

भा.–तस्माद्वागात्मिका देवीरुमाद्यास्तु शिवादिषु ।
शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः ।।

तौ रमायां परानन्दे तां विष्णौ परमात्मनि ।
तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः ।।

कुतस्तु मानुषो देवान्नियच्छेद्धिनियामकान् ।। इति च ।।

स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तम् ।।१३।।

वेदाध्येतॄणां हितोक्तिः

उप.– उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गं पथस्तत् कवयो वदन्ति ।। १४ ।।

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ।। १५ ।।

नाचिकेतोपाख्यानस्योपसंहारः

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ।। १६ ।।

उप.– य इमं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते
तदानन्त्याय कल्पते इति ।। १७ ।।

।। इति काठकोपनिषत्सु प्रथमाध्याये तृतीयावल्ली ।।

इति प्रथमाध्यायः ।।

## अथ द्वितीयाध्यायः प्रथमावल्ली

मुमुक्षूणां वैराग्यसम्पादनस्यावश्यकतोक्तिः

उप.– पराञ्चि खानि व्यतृणात् स्वयम्भू-
स्तस्मात् पराक् पश्यति नान्तरात्मन् ।
कश्चिद् धीरः प्रत्यगात्मानमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन् ।। १ ।।

भा.–'तृणु कात्करणे' इति धातुः ।। १ ।।

उप.– पराचः कामाननुयन्ति बालाः
ते मृत्योर्यन्ति विततस्य पाशान् ।
अथ धीरा अमृतत्वं विदित्वा
ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ।। २ ।।

नाचिकेतप्रश्नस्य यमप्रत्युक्तिः

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ।।३।।

भा.– इदं गुह्यं ब्रह्म प्रवक्ष्यामि । यथा मरणं प्राप्य जीवो भवति तच्च प्रवक्ष्यामि जीवेश्वरभेदज्ञापनाय । यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः । यः प्रलयादिषु जीवेषु सुप्तेषु जागर्ति स विष्णुः परं ब्रह्मेत्यर्थः । न हि जीवस्य योन्यादिगमनं ब्रह्म । जीवाद्भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवति ।

जागरादिनियामकस्यैव मोक्षे नियामकत्वकथनम्

उप.– स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।। ४ ।।

य इदं मध्वदं वेदात्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ।।५।।

भा.– जीवस्यान्तिके । न हि स्वस्य स्वयं जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्वं वा ।। ५ ।।

उप.– यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वै तत् ।।६।।

भा.–अम्नामभ्यश्च भूतेभ्यस्तपोनाम्नः शिवादपि ।
पूर्वं यो जनयामास पूर्वजातं चतुर्मुखम् ।।

स्वात्मानं च गुहासंस्थं सर्वभूतैः सहाभिभूः ।
यः पश्यति सदा विष्णुस्स एष हृदि संस्थितः ।। इति च ।।

यथा मुखादिन्द्रश्चाग्निश्चेत्यादिना जाता एवेन्द्रादयः कश्यपात् पुनर्जायन्ते न तथा भगवतो ब्रह्मा । किन्त्वजातमेवाद्भ्यः पूर्वमजायत जनयामास । अजायतेति 'जज्ञे बहुज्ञम्' इतिवदन्तर्णीतणिच् ।।६।।

उप.– या प्राणेन सम्भवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत्
।। ७ ।।

भा.–अदनादितिर्विष्णुर्यः प्राणसहितः स्थितः ।
उत्तमो देवताभ्यश्च सोत्मानं विविधात्मना ।।

मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत् ।
भूतैस्सह महाविष्णुः परमात्मा युगे युगे ।। इति च ।

देवतामयी देवतोत्तमा । प्राणेन सह स्थितो भवति । गुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतैस्सह विविधं जनयामास ।। ७ ।।

उप.– अरण्योर्निहितो जातवेदा
गर्भ इव सुभृतो गर्भिणीभिः ।
दिवे दिव ईड्यो जागृवद्भिः
हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ।। ८ ।।

भा.–सर्वज्ञो भगवान् विष्णुररण्योर्गुरुशिष्ययोः ।
सुभृतः स्तूयते नित्यं जानद्भिः पुरुषोत्तमः ।। इति च ।

अर्यते ण आभ्यामित्यरणी ।। ८ ।।

उप.– यतश्चोदेति सूर्योस्तं यत्र च गच्छति ।
तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन ।
एतद्वै तत् ।। ९ ।।

भगवद्रूपाणां भेदाभावोक्तिः

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ।। १० ।।

भा.–यः प्रादुर्भावगो विष्णुर्देहादिषु च संस्थितः ।
स एव मूलरूपश्च साक्षान्नारायणाभिधः ।।

मूलरूपश्च यो विष्णुः प्रादुर्भावादिगश्च यः ।
गुणतस्स्वरूपतो वापि विशेषं योऽत्र पश्यति ।।

अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् ।
भेदाभेदविदश्चात्र तमो यान्ति न संशयः ।। १० ।।

उप.– मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ।। ११ ।।

भा.–तथैवावयवानां च गुणानां च परस्परम् ।
क्रियाणां तेन चैतेषां भेदविच्चोभयं विदः ।।
यान्त्येवान्धन्तमो नात्र कार्या काचिद्विचारणा ।। इति च ।

भवेदेकत्र संयोग इवशब्दोऽविरुद्धयोः ।
धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते ।। इति शब्दनिर्णये ।

अतो नानेव इतीवशब्दोऽत्यल्पविषयो भेदाभेदविषयश्च । प्रथमा 'य इह नानेव पश्यति' इति स्वरूपभेदनिषेधार्थम् । 'नेह नानास्ति किञ्चन' इति किञ्चनशब्दादवयवानां गुणानां क्रियाणां च परस्परं तद्वतां च भेदनिषेधार्थम् ।। ११ ।।

हृत्स्थभगवत्परिमाणोक्तिः

उप.– अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ।
एतद्वै तत् ।। १२ ।।

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ।
एतद्वै तत् ।। १३ ।।

भगवद्गुणेषु भेदचिन्ताया अनर्थत्वकीर्तनम्

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ।। १४ ।।

भा.– भेदाभेद एव निषिध्यते न तु भेद इत्याशङ्कां निवर्तयितुं 'एवं धर्मान् पृथक् पश्यन्' इति भगवद्धर्माणामवयवगुणकर्मणां भेददर्शने पृथग् दोषमाह । पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति । एवं विष्णोर्धर्मान् पृथक् पश्यन्नन्धन्तमो विधावति ।। १२-१४ ।।

मुक्तपरमात्मनोर्भेदोक्तिः

उप.– यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ।। १५ ।।

इति काठकोपनिषत्सु द्वितीयाध्याये प्रथमावल्ली ।।

भा.– विजानतो मुनेरात्मा वायुरपि तादृगेव भवति न तु स एव भवति । किम्वन्ये जीवाः ।

सर्वेषां ज्ञानिनामात्मा देवानां च विशेषतः ।
मुक्तो वायुश्च सादृश्यमेवं विष्णोस्तु गच्छति ।।
न तु तद्रूपतां याति किम्वन्ये देवमानुषाः ।
आभासाभासरूपास्तु वायोर्देवस्य सर्वशः ।।
इति भविष्यत्पर्वणि ।। १५ ।।

।। इति काठकोपनिषद्भाष्ये द्वितीयाध्याये प्रथमावल्ली ।।

## अथ द्वितीयाध्याये द्वितीयावल्ली

### अभिमानत्यागस्य मोक्षसाधनत्वकथनम्

उप.– पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ।
एतद् वै तत् ।। १ ।।

भा.–इदं पुरं भगवदधीनमित्यनुष्ठाय । अजस्येदं पुरमिति स्थितिं कृत्वा ।

विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् ।
मुख्यतो मुच्यते पश्चात् दुःखाद्याभासहानतः ।। इति च ।।१।।

### भगवन्माहात्म्यवर्णनम्

उप.– हंसः शुचिषद्वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत् ।। २ ।।

भा.–नित्यं हीनोऽखिलैर्दोषैस्साररूपो यतो हरिः ।
हंस इत्युच्यते तस्माद्वायुस्थश्शुचिषत्स्मृतः ।।

वरसुर्वसुरित्युक्तस्स एवाप्यन्तरिक्षगः ।
होता सर्वेन्द्रियादिस्थो वेद्यां पूज्यश्च वेदिषत् ।।

अत्यन्नश्चातिथिः प्रोक्तो यस्मादन्नं थमुच्यते ।
स द्रोणकलशे सोमे स्थित उक्तो दुरोणसत् ।।

नृषु स्थितश्च देवेषु वरेष्वपि स एव तु ।
ऋतरूपे तथा वेदे व्योमाख्यप्रकृतावपि ।।

व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता ।
अब्जगोजाद्रिजेष्वेवमास्ते सोऽब्जादिकस्ततः ।।

तथैवर्तेषु मुक्तेषु गतास्ते विष्णुमित्यृताः ।
वेदैर्मुख्यतया प्रोक्तः ऋतमित्येव चोच्यते ।।
बृहत्पूर्णगुणत्वाच्च स एव पुरुषोत्तमः ।। २ ।।

भगवतो मुख्यप्राणनियामकत्वोक्तिः

उप.– ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ।। ३ ।।

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ।
एतद्वै तत् ।। ४ ।।

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ।। ५ ।।

भा.–न केवलं प्राण एव चेतनानां विधारकः ।
किन्तु विष्णुं समाश्रित्य प्राणो जीवान् बिभर्त्ययम् ।
अतो मुख्याश्रयो विष्णुश्चेतनानां स्वतन्त्रतः ।। ३-५ ।।

जीवपरमात्मनोर्वैलक्षण्यप्रतिपादनम्

उप.– हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा मरणं प्राप्यात्मा भवति गौतम ।। ६ ।।

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येनु संयन्ति यथाकर्म यथाश्रुतम् ।। ७ ।।

य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिꣳल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।
एतद्वै तत् ।। ८ ।।

जीवानां परमात्मप्रतिबिम्बत्वोक्तिः

अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ।। ९ ।।

भा.–अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते ।
पाकादिकर्ताऽथाप्यस्य देवस्य प्रतिरूपकाः ।।

रूपं रूपं प्रति ह्येते सन्त्यचेतनवह्नयः ।। ६-९ ।।

उप.– वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च
।। १० ।।

भा.– एवं देवो वायुरपि धारकोऽन्यो न विद्यते ।
रूपं रूपं तथाऽप्यस्य प्रत्यभूत् प्रतिरूपकः ॥
अचेतनः स्पर्शगम्यो योऽयमेवं जनार्दनः ।
एकस्स्वतन्त्रो नान्योऽस्ति सर्वजीवान्तरस्थितः ॥
रूपं रूपं प्रति ह्यस्य प्रतिबिम्बाश्च चेतनाः ॥ १० ॥
बाह्याश्च ते ततो नास्य स्वरूपं ते कथश्चन ।
अनादिप्रतिबिम्बाश्च बभूवुस्ते ह्यनन्तकाः ॥

उप.– सूर्यो यथा सर्वलोकस्य चक्षुः
न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥

भा.–सूर्यो यथाऽऽन्तरं चक्षुः प्रतिबिम्बोऽस्य बाह्यकः ।
बाह्यचक्षुर्गतैर्दोषैरन्तश्चक्षुर्न लिप्यते ॥

अन्तश्चक्षुर्देवता तु बाह्यचक्षुरचेतनम् ।
एवं बाह्यस्स्वतन्त्रत्वाज्जीवेभ्यः पुरुषोत्तमः ॥

अस्वतन्त्रस्य जीवस्य दुःखैर्नैव हि लिप्यते ॥ ११ ॥

उप.– एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

भा.–चेतनाभासको जीवः परमश्चेतनो हरिः ।।

स्वतन्त्रत्वात् स्वतन्त्रो हि नैव दोषेण लिप्यते ।।

इति महाकौर्मे ।।

स एक एव सर्वभूतान्तरात्मा । तस्य रूपं रूपं प्रतिरूपाख्यो जीवो बभूव । बहिश्चासौ परमात्मनो नितरां भिन्नः । परतन्त्रत्वात् ।

उप.– नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ।। १३ ।।

भा.– 'आत्मैवेदमग्र आसीत्' इत्यादिवदनादित्वापेक्षया ।

आत्मनि स्थं हरिं जानन् मुच्यते नात्र संशयः ।
जीवैक्येन तु तं जानन् तमस्यन्धे पतेद् ध्रुवम् ।। इति च

।। १३ ।।

उप.– तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति न भाति वा ।। १४ ।।

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ।। १५ ।।

।। इति काठकोपनिषत्सु द्वितीयाध्याये द्वितीयावल्ली समाप्ता ।।

भा.– एतदेव भगवद्रूपं परमं सुखम् । ज्ञानिसुखं तु तद्विप्रुण्मात्रम् ।

ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु ।
प्रतिबिम्बस्तु विप्रुट्को विष्णोरेव परं सुखम् ।।

सम्यग् भाति न भातीति जानीयां तत्कथं न्वहम् ।
तत्प्रसादमृते दिव्यमनिर्देश्यं परं सुखम् ।। इति च महावराहे ।।१४।।

।। इति काठकोपनिषद्भाष्ये द्वितीयाध्याये द्वितीयावल्ली ।।

## ।। अथ द्वितीयाध्याये तृतीयावल्ली ।।

जगद्वृक्षस्याधारतया भगवतः प्राधान्येनोक्तिः

उप.– ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।
एतद्वै तत् ।। १ ।।

भा.–सर्वोच्चो भगवान् विष्णुर्मूलं भूमिवदस्य तु ।
जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽधमाः ।।

वृक्षमूलं रमादेवी सोऽश्व आशुगतेर्हरिः ।
तद्व्याप्तत्वात् तदन्नत्वादश्वत्थोऽयं प्रकीर्तितः ।।

प्रवाहतस्त्वनादिश्च मुख्यतस्त्वमृतो हरिः ।
मुख्यामृतस्स एवैको जगन्नित्यं प्रवाहतः ।।

उप.– यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ।। २ ।।

भा.–प्राणाख्ये तु हरौ सर्वमेजत्यस्माच्च निस्सृतम् ।
वज्रवद्भयदं चैव स्वधर्मस्यातिलङ्घने ।। २ ।।

उप.– भयादस्याग्निस्तपति भयात् तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ।। ३ ।।

इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते ।। ४ ।।

यथादर्शे तथाऽऽत्मनि
यथा स्वप्ने तथा पितृलोके ।
यथाप्सु परीव दृश्यते तथा गन्धर्वलोके ।
छायातपयोरिव ब्रह्मलोके ।। ५ ।।

जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः ।
आदर्शे मुखवत् सम्यङ् न तथा पितृलोकगः ।।

ततः किञ्चित् स्पष्टतया गान्धर्वे दृश्यते हरिः ।
नात्यातपे न छायायां यथैवाहनि दृश्यते ।।

स्पष्टं तथा ब्रह्मलोके दृश्यते पुरुषोत्तमः ।। इति च ।। ३-५ ।।

मोक्षसाधनदेवतातारतम्यनिरूपणम्

उप.– इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ।। ६ ।।

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादपि महानात्मा महतोऽव्यक्तमुत्तमम् ।। ७ ।।

अव्यक्तात् तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ।। ८ ।।

भा.– पुनः 'इन्द्रियेभ्यः परं मनः' इत्यादि देवतानां तारतम्यज्ञान-पूर्वकं भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् ।

तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेः ।
आधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते ।। इति च ।।६-७।।

श्रवणादिसहकृतमनसा भगवज्ज्ञानोत्पत्तिप्रतिपादनम्

उप.– न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो
य एनं विदुरमृतास्ते भवन्ति ।। ९ ।।

भा.–प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति ।
प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति ।।
तदैव मुच्यते योगी न दुष्टैरिन्द्रियैः क्वचित् ।। इति च ।।९।।

उप.– यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तमाहुः परमां गतिम् ।। १० ।।

योगविवरणम्

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ।। ११ ।।

भा.–प्रभवाप्ययौ प्रति हि योगः । भगवतस्सकाशात् प्रभवाप्ययौ
॥ ९-११ ॥

उप.– नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

भगवदनुग्रहस्यावश्यकत्वनिरूपणम्

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

भा.–अधिकस्सतोऽयं भगवान् सर्वस्मादपि केशवः ।
अस्तीति नामकस्तस्माज्ज्ञातव्यस्स तथैव च ॥

अनाधिक्यं जानतां तु कथं स उपलभ्यते ।
प्रकृतेः पुरुषाणां च तत्त्वं भावयति स्फुटम् ॥

तत्त्वभावस्ततो विष्णुस्तत्प्रसादात् तु तस्य हि ।
आधिक्यं ज्ञायते सत्तः प्रसादश्च तथाविदः ॥

अनादिकालादाधिक्यं सर्वस्माज्जानतो हरेः ।
पुनः पुनर्वृद्धिमेति तज्ज्ञानं हि भवे भवे ॥

येषामाधिक्यविज्ञानं नैव पूर्वं हरेर्भवेत् ।
तेषां पश्चाच्च नैव स्यादभिभूतं तु तत् पुनः ॥

व्यञ्जकाद् व्यक्तिमभ्येति तस्मात् तज्ज्ञानमुत्तमम् ॥ इति च
॥ १२-१३ ॥

भगवद्विषयकविशिष्टज्ञानफलनिरूपणम्

उप.– यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यथ ब्रह्म समश्नुते ।। १४ ।।

भा.–अन्तःकरणकामानां त्यागो व्यक्तिश्चिदात्मानाम् ।
कामानां तु तदा मुक्तो मृतिं नैवाभियास्यति ।।

अविद्याऽहङ्कारकर्मनाशेन आशापाशनाशः

उप.– यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ।। १५ ।।

भा.–मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा ।
तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् ।। १५ ।।

उप.– शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वगन्या उत्क्रमणे भवन्ति ।। १६ ।।

जीवेश्वरज्ञानस्य मोक्षसाधनत्वविचारः

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।
तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ।। १७ ।।

भा.–शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यतः ।
अधिष्ठितश्च तेनैव विजानीयात् पृथक् ततः ।।
स्वाख्याच्छरीराज्जीवात् तु प्रवृहेद् विष्णुमव्ययम् ।। इति च ।।

'यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति' इति च । 'जनानां हृदये' इत्युक्तत्वाच्च जीवात् पृथग् हरिरिति सिद्धम् ।।

देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि ।
जीवस्य स तु विज्ञेयो जीवात् भेदेन मुक्तये ।। इति च ।।

संसारिशरीरेणाभेदो वादिना केनापि नाङ्गीकृतः । न च लोकसिद्धः । जनानामिति भेदात् । न जीवोऽङ्गुष्ठमात्रः । अतो विष्णोर्जीवाद्भेद उक्तः ।

वेदपुरुषवाणी

उप.– मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा
विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्म प्राप्तो विरजोऽभूद् विमृत्युः
अन्योऽप्येवं यो विदध्यात्ममेव ।। १८ ।।

इति काठकोपनिषत्सु द्वितीयाध्याये तृतीयावल्ली ।।

इति काठकोपनिषत् समाप्ता ।।

भा.–अतः सर्वोत्तमो विष्णुरिति सिद्धम् ।।

नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।
यस्याहमाप्त आप्तेभ्यो यो म आप्ततमः सदा ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
काठकोपनिषद्भाष्यं समाप्तम् ।।

# षट्प्रश्नोपनिषद्भाष्यम्

मङ्गलाचरणम्

नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।
अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ।।

# षट्प्रश्नोपनिषत्

उप.– सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कवन्धी कात्यायनः । ते हैते ब्रह्मपराः ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः । एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ।।१।।

तान् ह स ऋषिरुवाच । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ।। २ ।।

सृष्टिकर्ता कः? प्रथमः प्रश्नः

अथ कवन्धी कात्यायनः उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति । तस्मै स होवाच प्रजाकामो ह वै प्रजापतिः। स तपोऽतप्यत ।। ३ ।।

भा.– प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः ।। ३ ।।

भगवत्कृतमुख्यप्राणभारतीसृष्टिः

उप.– स मिथुनमुत्पादयते । रयिं च प्राणं चेति । एतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ।।

भा.–स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम् ।।
सूर्याचन्द्रगतौ देवः ससर्ज पुरुषोत्तमः ।
तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः ।।

मुख्यप्राणस्य दिक्पालान्तर्यामितया निरूपणम्

उप.– रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयिः ।। अथादित्य उदयन् यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते । यद् दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ।। ५ ।।

भा.– अमूर्तस्थः स वायुस्तु मूर्तसंस्था सरस्वती ।।
आदित्यस्थः स वायुस्तु प्राणानात्मनि सन्नयेत् ।
प्राच्याः प्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः ।।
प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः ।
शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ ।।
सभार्याः कोणपैः सार्धं चत्वारो दिशि दिश्यपि ।

भारतीमुख्यप्राणोत्पत्तिकथनम्

उप.– स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्युक्तम् ।।

विश्वरूपं करिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ।। ६ ।।

भारतीमुख्यप्राणाभ्यां कालनियमनप्रकारः

संवत्सरो वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च । तद् ये ह वै तदिष्टापूर्ते । कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष वै रयिर्यः पितृयाणः ।। ७ ।।

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानं अन्विष्यादित्यमभिजयन्ते । एतद् वै प्राणानामायतनमेतदमृतमभयमेतत् परायणम् । एतस्मान्न पुनरावर्तन्त इत्येष निरोधः ।

देवयानपितृयाननिरूपणम्

तदेष श्लोकः ।।

पञ्चपादं पितरं द्वादशाकृतिं
दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उ परे विचक्षणं
सप्तचक्रे षळर आहुरर्पितमिति ।। ८ ।।

भा.–संवत्सरस्थो भगवान् वागीरावयनस्थितौ ।। ८ ।।

उप.– मासो वै प्रजापतिः । तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणः । तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्ति । इतर इतरस्मिन् । अहोरात्रे वै प्रजापतिः । तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते ।। ९ ।।

भा.–मासस्थितः स भगवान् पक्षयोर्वाक् च मारुतः ।
अहोरात्रे तु भगवान् प्राणो ह्यहनि वाङ् निशि ।।

दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती ।
भर्तृस्थः स स्वयं वायुरेवं जानन् विमुच्यते ।।
इति प्रजापतिसंहितायाम् ।। ९ ।।

उप.– अन्नं वै प्रजापतिः । ततो ह वै तद्रेतः । तस्मादिमाः प्रजाः प्रजायन्त इति । तद् ये ह वै तत्प्रजापतिव्रतं चरन्ति ।। ये मिथुन-मुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ।। ११ ।।

इति प्रथमप्रश्नप्रतिवचनं समाप्तम् ।।

## अथ द्वितीयः प्रश्नः

स्थितिकर्तृविषयकः द्वितीयः प्रश्नः

उप.– अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा विधारयन्ते । कतर एतत् प्रकाशयन्ते । कः पुनरेषां वरिष्ठ इति ।। १ ।।

तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च । ते प्राकाश्या अभिवदन्ति । वयमेतद् बाणमवष्टभ्य विधारयाम इति ।। २ ।।

भा.– वायुरग्निरित्यत्र भूतवायुरुच्यते ।

उप.– तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाहमेवैतत् पञ्चधाऽऽत्मानं विभज्यैतद् बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः । सोऽभिमानादूर्ध्वमुत्क्रमत इव । तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते ।। ३ ।।

भा.– प्राणशब्देन प्रधानवायुः ।

उप.– तद्यथा मधुमक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते । तमस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते । एवं वाङ्मनश्चक्षुःश्रोत्रं चेति । ते प्रीताः प्राणं स्तुन्वन्ति । एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ।। ४ ।।

मुख्यप्राणस्य सर्वाश्रयत्वोक्तिः

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ।।

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।
तुभ्यं प्राण प्रजास्त्विमाः यत् प्राणैः प्रतितिष्ठसि ।।

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।
ऋषीणां चरितं सत्यमथर्वाऽङ्गिरसामपि ।। ५ ।।

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।
त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ।।

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ।।

व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।
वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ।। ६ ।।

याते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ।।
प्राणस्यैतद्वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम् ।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ।।७।।

इति द्वितीयप्रश्नप्रतिवचनं समाप्तम् ।।

## अथ तृतीयः प्रश्नः

### मुख्यप्राणस्य प्रभुत्वविचारः

उप.– अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भगवन् कुत एष प्राणो जायते । कथमायात्यस्मिन् शरीरे । आत्मानं वा प्रविभज्य कथं प्रतिष्ठते । केनोत्क्रमते । कथं बाह्यमभिधत्ते । कथमध्यात्म-मिति ।। १ ।।

तस्मै स होवाचातिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति । तस्मात् तेऽहं ब्रवीमि ।। आत्मत एष प्राणो जायते । यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् ।। २ ।।

भा.– आत्मतः परमात्मतः ।। १-२ ।।

उप.– मनोकृतेनायात्यस्मिञ्छरीरे ।। यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ।। ३ ।।

भा.–विष्णोर्वायुः समुत्पन्नो वायोः सर्वाश्च देवताः ।
प्राणाद्यास्तान्नयन् प्राण आज्ञापयति राजवत् ।।
स्वयं च पञ्चरूपस्सन् दद्यान्मोक्षादिकं प्रभुः ।।
इति प्रभञ्जने ।। ३ ।।

उप.– पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति । हृदि ह्येष आत्मा ।। ४ ।।

अत्रैतदेकशतं नाडीनाम् । तासां शतमेकैकस्यां द्वासप्ततिं प्रतिशाखानाडीसहस्राण्यासु व्यानश्चरति ।। अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ।। ५ ।।

आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ।। तेजो ह वा उदानः । तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ।। ६ ।।

यच्चित्तस्तेनैष प्राणमायाति । प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति ।। य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति । तदेष श्लोकः ।।

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा ।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते ।।
विज्ञायामृतमश्नुत इति ।। ७ ।।

।। इति तृतीयप्रश्नप्रतिवचनम् ।।

## अथ चतुर्थः प्रश्नः

स्वप्नसुषुप्त्योः परमात्माधीनत्वोक्तिः

उप.– अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति । कान्यस्मिन् जाग्रति । कतर एष देवः स्वप्नान् पश्यति । कस्यैतत् सुखं भवति । कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ।। १ ।।

तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डले एकीभवन्ति ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवन्ति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ।।२।।

परमात्मनः तत्वाभिमानिदेवताश्रयत्वप्रतिपादनम्

भा.–रश्मीनामविशेषेऽपि ह्यन्यदृष्टिव्यपेक्षया ।
सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात् ।।

एवं विष्णोस्तु सामीप्याद्देवानां सुप्तिगस्य तु ।
व्यवहाराकरत्वाच्च एकीभाव इतीर्यते ।। इति च ।। १-२ ।।

### प्राणाग्निविद्यानिरूपणम्

उप.– प्राणाग्नयः एवैतस्मिन् पुरे जाग्रति । गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते । प्रणयनादाहवनीयः प्राणः ।। यदुच्छ्वासनिःश्वासवेतावाहुती समं नयति स समानो मनो ह वाव यजमान इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ।। ३ ।।

### स्वप्नसुषुप्त्यनुभवनिरूपणम्

अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरे च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति । दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ।। स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान् न पश्यति । अथ यदेतस्मिन् शरीरे सुखं भवति ।।४।।

### शरीरशब्दार्थनिरूपणम्

भा.– भगवतः शरीरवत् सादृश्ययुक्ते जीवे सुखं भवति । कस्यैतत्सुखं भवतीति पृष्टत्वात् । न ह्यचेतनस्य शरीरस्य सुखं भवति । यस्यात्मा शरीरमिति च श्रुतिः ।

सादृश्याद्देहवज्जीवो विष्णोस्तस्य सुखं भवेत् ।
सुप्तौ तस्य सुखार्थं हि भगवान् सुप्तिमानयेत् ।। इति च ।।५।।

उप.– स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते ।
एवं ह वैतत्सर्वं परे आत्मनि सम्प्रतिष्ठते ।।

पृथिवी च पृथिवीमात्रा च आपश्च आपोमात्रा च तेजश्च तेजो-मात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च । चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसनं च रसयि-तव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ च दातव्यं च पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं चोपस्थश्चा-नन्दयितव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं च अहङ्कार-श्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ।। ८ ।।

एष हि द्रष्टा स्प्रष्टा घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स यो ह वैतदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वं भवति ।

तदेष श्लोकः–

विज्ञानात्मा सह देवैश्च सर्वैः<br>
प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।<br>
तदेतदक्षरं वेदयते यस्तु सोम्य<br>
स सर्वज्ञः सर्वमेवाविवेशेति ।। ९ ।।

।। इति चतुर्थप्रश्नप्रतिवचनं समाप्तम् ।।

## अथ पञ्चमप्रश्नः

### प्रणवोपास्तितत्फलविषयकपञ्चमप्रश्नः

उप.– अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति ।। तस्मै स होवाच । एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः । तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति ।। १ ।।

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते । स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ।। अथ यदि द्वितीयमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते ।। यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ।। २ ।।

तदैतौ श्लोकौ भवतः ।।

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ।।
ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत् तत् कवयो वेदयन्ते ।
तमोङ्कारेणैवायनेनान्वेति विद्वान् यत् तच्छान्तमजरममृतमभयं परं च ।। इति ।।

भा.–प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च ।
ज्ञानं चतुर्मुखात् प्राप्य मुच्यते नात्र संशयः ।।

।। इति पञ्चमप्रश्नप्रतिवचनम् समाप्तम् ।।

## अथ षष्ठः प्रश्नः

### षोडशकलाविषयकषष्ठप्रश्नः

उप.– अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ । तं मह्यं ब्रवीहीति । तमहं कुमारमब्रुवं नाहमिमं वेद । यद्यहमिममवेदिष्यं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति । तस्मान्नार्हाम्यहमनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ।। १ ।।

तस्मै स होवाच । इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ।। स ईक्षाश्चक्रे । कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ।। स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ।।२।।

### षोडशकलाभिमानिनां निरूपणम्

भा.–कर्मेति पुष्करः प्रोक्त उषा नामाभिमानिनी ।
लोकाभिमानी पर्जन्यः स्वाहा वै मन्त्रदेवता ।।

तपोभिमानी वह्निश्च वरुणो वीर्यदेवता ।
अन्नस्य देवता सोमो मनो नामानिरुद्धकः ॥

इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः ।
रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः ॥

श्रद्धेति वायोः पत्नी स्यात् सर्वेषां प्रभवाप्यया ।
तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः ॥

तस्यापीशः कारणं च वासुदेवः परोऽव्ययः ।
न तस्य सदृशः कश्चित् कुत एवोत्तमो भवेत् ॥
तं ज्ञात्वा मुच्यते जन्तुर्विदित्वैवं परात्परम् ॥

इति तत्त्वविवेके ।

कलोत्पत्तिक्रमविचारः

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥

इति मन्त्रोक्त एव क्रमः । न हीन्द्रियेभ्यो मनः पश्चात् । 'तत्प्राक् श्रुतेश्च' इति च भगवद्वचनम् ॥

विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोभिधः ।
तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ॥

ततश्च वरुणस्सृष्टस्तस्मादग्निस्ततोऽवरः ।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ॥

तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।
ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ॥

उदात्मको बुधस्तस्या उषा नामात्मिका ततः ।
ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।।

क्रमात् प्रत्यवरा ह्येते मुक्ताः सर्वगुणैरपि ।
नित्यमुक्तस्ततो विष्णुः प्राणादप्युत्तमोत्तमः ।। इति च ।। २ ।।

मुक्तौ कलानामवस्थाविचारः

**उप.– स यथेमाः नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्येते चासां नामरूपे । पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो भवति ।। ३ ।।**

नामरूपाणामविनाशित्वोक्तिः

भा.– 'समुद्रे इत्येव प्रोच्यते । पुरुषे इत्येवं प्रोच्यते । भिद्येते तासां नामरूपे । भिद्येते चासां नामरूपे' इत्युक्तत्वात् । अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीनां विष्णौ स्थितानां मुक्तानां च भिन्नान्येव नामरूपाणि सन्त्येवेत्यर्थः ।

न च भेदशब्दो नाशे प्रयुज्यमानः क्वापि दृष्टः । घटादावपि बहुभाव एव भेदशब्दः प्रयुज्यते । नाशस्त्वर्थतः एवावगम्यते । न चात्रार्थतोऽपि नाशोऽवगम्यते । न हि नामानि रूपाणि च कपालवद् बहुधा भूतानि तिष्ठन्ति । अतो भिद्येते इति पृथक्त्वमेवोच्यते । 'अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः' इति वाक्यशेषाच्च । अतः पुरुषे भिन्नानि नामरूपाणि प्रतिष्ठितानीत्येवार्थः ।

नामरूपाणि नित्यान्येव

अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेव ।

प्राणादयः कला यस्मिन् मुक्ता नित्यं प्रतिष्ठिताः ।
पृथक् पृथक् नामरूपैर्नमस्तस्मै पराय ते ।। इति सत्तत्त्वे ।।

'नामरूपाद्विमुक्तः' इत्यनेनापि नामरूपामुक्तत्वमुच्यते । विप्रिय इत्यादिवत् । नामरूपे अविहायेति च पूर्वत्र । 'अनन्तं वै नामानन्ता विश्वेदेवाः' इति नामरूपयोरनन्तत्वं हि श्रुतिर्वक्ति । 'यत्र पूर्वे साध्या सन्ति देवाः' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' । 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु' इत्यादेश्च । अतः सर्वमुक्तेभ्योऽप्युत्त-मोत्तमः परिपूर्णो नारायण इति सिद्धम् ।। ३ ।।

तदेष श्लोकः

उप.– अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ।
तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथाः इति ।।

उपसंहारः

तान् होवाच । एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति ते हि तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।। ४ ।।

।। इति षष्ठप्रश्नप्रतिवचनम् ।।

।। इति षट्प्रश्नोपनिषत् समाप्ता ।।

भा.–नमो नमोस्तु हरये प्रेष्ठप्रेष्ठतमाय मे ।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं षट्प्रश्नोपनिषद्भाष्यं सम्पूर्णम् ।।

# आथर्वणोपनिषद्भाष्यम्

मङ्गलाचरणम्

आनन्दमजरं नित्यमजमक्षयमच्युतम् ।
अनन्तशक्तिं सर्वज्ञं नमस्ये पुरुषोत्तमम् ।।

## आथर्वणोपनिषत्

### अथ प्रथमः खण्डः

आथर्वणोपनिषदध्ययनपरम्परा

उप.– ब्रह्मा देवानां प्रथमः सम्बभूव
विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-
मथर्वाय ज्येष्ठपुत्राय प्राह ।। १ ।।

भा.–मनोर्वैवस्वतस्यादावथर्वा ब्रह्मणोऽजनि ।
मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च ।।
ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः ।
सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः ।।
इति ब्रह्माण्डे ।

उप.– अथर्वणे यां प्रवदेत ब्रह्मा-
ऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवहाय प्राह
भारद्वाजोऽङ्गिरसे परावराम् ।। २ ।।

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ।
कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ।। ३ ।।

परापरविद्यानिरूपणम्

तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति । परा चैवापरा च ।। ४ ।।

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।। ५ ।।

भा.–ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।।
इति परमसंहितायाम् ।

विष्णोः सकलशास्त्रप्रतिपाद्यत्ववर्णनम्

ऋग्भिर्हौत्रेण शंसन्ति तथौद्गात्रैः स्तुवन्ति ये ।
विष्णुमेव तथा तस्मै यजुर्भिरपि जुह्वति ।।

स्तुवन्त्यथर्वणैश्चैनं सेतिहासपुराणकैः ।
न विष्णुसदृशं किञ्चित् परमं वाऽपि मन्वते ।।
सर्वोत्तमं तं जानन्तस्ते हि भागवतोत्तमाः ।।

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।।

एतदन्ते च मध्ये च ब्रह्मैवोक्त्वा विजानताम् ।
ऋगादि पञ्चधा संस्थं शब्दब्रह्म प्रशाम्यति ॥

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
स्तुवन्ति सत्यकर्माणं सत्यं सत्येन सामसु ॥

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥

वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् । इति च भारते ।

चतुर्दश महाविद्यास्थानानि वेदितव्यानि भवन्ति इति च मूलश्रुतिः ।

वेदपञ्चरात्राणां कृतयुगे केवलं विष्णुबोधकत्ववर्णनम्

पञ्चरात्रमृगाद्याश्च सर्वमेकं पुराऽऽभवत् ।
मूलवेद इति ह्याख्या काले कृतयुगे तदा ॥

नैवर्क्सामादिनामानि तदा वेदस्य चाभवन् ।
नैव चेन्द्रादिनामानि विष्णोरन्यत्र कुत्रचित् ॥
ब्रह्मरुद्रेन्द्रपूर्वैस्तु नामभिः प्रोच्यते हरिः ।

युगचतुष्टये उपासनाचातुर्विध्यनिरूपणम्

देवतात्वेन चेज्यस्स ब्रह्माद्या मनुनामकाः ॥
वक्तृत्वेन पितृत्वेन कारित्वेनैव चादरात् ।
इज्यन्ते देवताः सर्वा न तु देवतया क्वचित् ॥

अनन्ययाजिनस्ते तु तस्मात् कार्तयुगा जनाः ।
प्राप्नुवन्ति हरिं तं च तस्माद्वेदे न किञ्चन ॥

पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात् ।
ऋगाद्या अनुव्याख्यान्तास्तस्मात् सर्वैर्हरिं यजेत् ।।

तस्माद् ब्रह्मादयः सर्वे मनवो मानवास्तथा ।
यजन्ति सर्ववेदैस्तं जानन्ति च विनिश्चयात् ।।

अशक्तः पञ्चरात्रेण ऋगाद्यैर्वाथ तं यजेत् ।
ऋगाद्यैरेव स त्रैतैर्भिन्नैरिष्टो जनैर्हरिः ।।

द्वापरीयैर्जनैर्विष्णुः पञ्चरात्रैस्तु केवलैः ।
कलौ तु नाममात्रेण पूज्यते भगवान् हरिः ।।

कृतयुगमुख्यधर्मस्य कलियुगेऽप्यावश्यकतानिरूपणम्

एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत् ।
स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् ।।

उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः ।
मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि ।।

त्रेतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रकीर्तितः ।
कृते भागवताः सर्वे वेदाश्च पुरुषास्तथा ।।

त्रेतायां भिन्नविषयास्ततस्त्रैविद्यतां गताः ।
तस्मादेकः सर्ववेदैर्ज्ञेयो विष्णुः सनातनः ।।
पूज्यो यज्ञैः सोपचारैर्ध्येयो वन्द्यश्च सर्वदा ।।

इत्यादि नारायणसंहितायाम् ।

कलियुगे युगानुगुणं वेदशैथिल्यकथनम्

वेदवादाश्चानुयुगं ह्रसन्तीति हि नः श्रुतिः ।। इति भारते ।

वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च ।
दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि ।। इत्यादि वाराहे ।

वेदस्यापि परविद्यात्वेऽथर्वसम्मतिकथनम्

अत्रापि 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इत्यादिना कर्मविषयामपरविद्यामुक्त्वा 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यारभ्याथर्वणानेव मन्त्रान् परविद्यात्वेनाह । चतुर्वेदसंस्कारवतामेव च विद्यायामधिकार उक्तः 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति । शिरोव्रतमित्युपलक्षणम् ।

स्ववेदव्रतयुक्तस्य सर्ववेदगतास्वपि ।
अधिकारोऽस्ति विद्यासु नावेदव्रतिनः क्वचित् ।।
इति व्यासस्मृतौ ।। १-५ ।।

उप.– यत् तदद्रेश्यमग्राह्यमगोत्रमवर्ण-
मचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं
यद्भूतयोनिं परिपश्यन्ति धीराः ।। ६ ।।

भगवतः सृष्टिकर्तृत्वनिरूपणम्

यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।

यथा सतः पुरुषात् केशलोमानि
तथाऽक्षरात् सम्भवतीह विश्वम् ।। ७ ।।

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ।। ८ ।।

यस्सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ।। ९ ।।

भा.– एतद्ब्रह्म चतुर्मुखः ।। ६-९ ।।

इति प्रथमः खण्डः

## अथ द्वितीयः खण्डः

### कृतयुगस्थितकर्मानुष्ठानपद्धतिः

उप.– तदेतत् सत्यम् ।
मन्त्रेषु कर्माणि कवयो यान्यपश्यन्
तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरथ नियतं सत्यकामा
एष वः पन्थाः सुकृतस्य लोके ।। १ ।।

भा.– तदेतत्सत्यं भगवान् । तत्कामाः कर्माण्याचरथ । तदा साऽपि परविद्या । अन्यथा 'प्लवा ह्येते अदृढा यज्ञरूपाः' ।

भगवद्विषयत्वेन कृत एष वः पुण्यः सुकृतो ब्रह्मलोकः । परब्रह्मलोकः ।

निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।। इति व्यासस्मृतिः ।

'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति च श्रुतिः ।

कर्मवर्जनस्य शास्त्रासम्मतिकथनम्

'सहयज्ञाः प्रजाः सृष्ट्वा' इत्युक्त्वा

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।। इति च ।

'यान्ति मद्याजिनोऽपि माम्' इति च ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। इति च ।

'यस्त्वात्मरतिः' इत्युक्त्वाऽपि 'कुर्याद्विद्वांस्तथा सक्तः' इत्येवोक्तत्वाच्च ।

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।। इति च ।

'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ' इत्युक्तत्वाच्च नाश्रमान्तरविरोधः । त्रेतायां बहुधा सन्ततानि कृते त्वेकप्रकारेणैव सन्ततानि ।

अग्निष्टोमादिभिर्यज्ञैः सर्वदेवस्थितं हरिम् ।
यजन्ति तांश्च कारित्वाद्वसुस्तस्मात् तथाऽयजत् ।।

पृथक् पृथक् च त्रेतायां यजन्ते देवतागणान् ।
यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः ।। इति पाद्मे ।

'यमिन्द्रमाहुर्वरुणं यमाहु र्यं मित्रमाहुर्यमु सत्यमाहुः ।
यो देवानां देवतमो जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमि' ।।

एवं वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः ।
एवं त्रेतायां केचिदन्ये पृथक् तानिष्ट्वा विष्णावर्पयन्ते न चान्यैः ।।
इति च ब्रह्माण्डे ।

यथाविधि होमाचरणम्

उप.– यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।
तदाऽऽज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ।। २ ।।

यस्याग्निहोत्रमदर्शमपौर्णमास-
मनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिना हुत-
मासप्तमांस्तस्य लोकान् हिनस्ति ।। ३ ।।

काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्त जिह्वाः ।। ४ ।।

एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन् ।
तं नयन्त्येताः सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ।। ५ ।।

एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ।। ६ ।।

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापियन्ति ।। ७ ।।

अविद्यायामन्तरे वेष्टयमानाः
स्वयं धीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ।। ८ ।।

अविद्यायां बहुधाः वर्तमाना
स्वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत् कर्मिणो न प्रवेदयन्ति रागात्
तेनातुराः क्षीणलोकाश्च्यवन्ते ।। ९ ।।

इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृते तेऽनुभूत्वा
इमं लोकं हीनतरं वा विशन्ति ।। १० ।।

भा.– विष्णोः सर्वेभ्यः किञ्चिदुत्तमत्वं जानन्त इमं लोकमाविशन्ति ।
साम्यं हीनत्वं वा जानन्तो हीनतरं तम एवाविशन्ति ।।

देवेभ्यः उत्तमं विष्णुं राजवद्यस्तु मन्यते ।
याजी स मानुषं याति साम्यहीनत्ववित्तमः ।। इति च ।

त्रैविद्यानां भगवदभिज्ञतानिरूपणम्

'त्रैविद्या माम्' इति तु 'येप्यन्यदेवता भक्ताः' 'तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्' 'अहं हि सर्वयज्ञानां भोक्ता' इत्युक्तत्वा-दज्ञानपूर्वयाजिनस्त्रैविद्याः ।।

ब्रह्मलोकसाधननिरूपणम्

उप.– तपःश्रद्धे येऽभ्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा ।। ११ ।।

भगवज्ज्ञानार्थं गुसमाश्रयणकथनम्

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो
निर्वेदमायात् नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।। १२ ।।

शमान्विताय उपदेशकरणम्

तस्मै स विद्वानुपसन्नाय सम्यक्
प्रशान्तचित्ताय शमान्विताय ।

येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।। १३ ।।

इति द्वितीयः खण्डः ।।

## अथ तृतीयः खण्डः

उप.– तदेतत् सत्यम् ।

यथा सुदीप्तात् पावकात् विष्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद् विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति ।। १ ।।

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ।। २ ।।

त्रिविधाक्षरनिरूपणम्

भा.–अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
अक्षरं परमं श्रीस्तु परतः परमक्षरम् ।।
वासुदेवः परानन्दः इति त्रिविधमक्षरम् ।। इति च ।। २ ।।

परमात्मना स्वशरीरकृतसृष्टिवर्णनम्

उप.– एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।। ३ ।।

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग् विवृताश्च वेदाः ।

वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ।। ४ ।।

भा.–विष्ण्वङ्गानां हि नामानि द्युम्वादीनि तु सर्वशः ।
क्रीडादिशक्तिरूपत्वात् तज्जत्वादन्यवस्तुषु ।। इति च ।।४।।

यज्ञादिसृष्टेस्तथाऽऽदिकालीनसूक्ष्मसृष्टेश्च वर्णनम्

उप.– तस्मादग्निः समिधो यश्च सूर्यः
सोमात् पर्जन्यौषधयः पृथिव्याम् ।
पुमान् रेतः सिञ्चति योषितायां
बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ।। ५ ।।

भा.–वासुदेवः पुमान्नामा पूर्णत्वात् स स्वयोषिति ।
रमायां गर्भमदधात् प्रजास्तस्मात् प्रजज्ञिरे ।। इति च ।।

उप.– तस्मादृचः साम यजूंषि दीक्षा
यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकाः
सोमो यत्र पवते यत्र सूर्यः ।। ६ ।।

तस्माच्च देवा बहुधा सम्प्रसूताः
साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च
श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ।। ७ ।।

सप्त प्राणाः प्रभवन्ति तस्मात्
सप्तार्चिषः समिधः सप्त होमाः ।

इमे लोका येषु चरन्ति प्राणा
गुहाशयां निहिताः सप्त सप्त ।। ८ ।।

भा.– सप्तार्चिषो वृत्तयः । होमाः सम्बन्धाः । लोकाः गोलकाः । गुहाशयां बुद्धौ । 'लोपः समाने' इति सूत्रादेकयकारलोपः । प्रतिपुरुषं सप्त सप्त ।। ८ ।।

परमात्मनः सर्वकारणत्वं वर्णनम्

उप.– अतः समुद्राः गिरयश्च सर्वेऽ-
स्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसाश्च
येनैव भूतैस्तिष्ठते ह्यन्तरात्मा ।। ९ ।।

परमात्मनः गुणक्रियादीनां तदभिन्नत्ववर्णनम्

पुरुष एवेदं विश्वं कर्म
तपो ब्रह्म परामृतम् ।
एतद् यो वेद निहितं गुहायां
सोऽविद्याग्रन्थिं विकिरति ह सोम्य ।। १० ।।

भा.– भगवतः कर्म चेष्टा तपो ज्ञानं च परामृतब्रह्माख्यः पुरुषो भगवानेव ।

यैषा चेष्टा भगवतो यच्च ज्ञानं परात्मनः ।
तत्सर्वं भगवानेव ये च धर्मा बलादयः ।। इति च ।

'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिः ।

इति तृतीयः खण्डः

## अथ चतुर्थः खण्डः

परमात्मनोऽगम्यमाहात्म्यवर्णनम्

उप.– आविः सन्निहितं गुहाचरं नाम महत् पदम् ।
अत्रैतत् सर्वमर्पितमेजत् प्राणन्निमिषच्च यत् ।। १ ।।

एतज्जानथ सदसद्वरेण्यं
परं विज्ञानाद् यद्वरिष्ठं प्रजानाम् ।
यदर्चिमद् यदणुभ्योऽणु च
यस्मिंल्लोका निहिता लोकिनश्च ।। २ ।।

भा.– विज्ञानाद् ब्रह्मणः परम् । 'नाभिहृदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः' इति भागवते ।

साधकस्य मनः शर इव नियमेन लक्ष्यानुसारी भवेत्

उप.– तदेतक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।
तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि ।। ३ ।।

भा.–प्राणः प्रणयनाद्विष्णुर्वक्तृत्वाद्वागुदीरितः ।
मनो मन्तृत्वतो विष्णुः सर्वजीवनियामकः ।।
इति शब्दनिर्णये ।।

उप.– धनुर्गृहीत्वौपनिषदं महास्त्रं
शरं ह्युपासानिशितं सन्दधीत ।
आयम्य तद्भावगतेन चेतसा
लक्ष्यं तदेवाक्षरं सोम्य विद्धि ।। ४ ।।

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ।। ५ ।।

यस्मिन् द्यौः पृथिवी चान्तरिक्ष-
मोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या
वाचो विमुञ्चथामृतस्यैष सेतुः ।। ६ ।।

भा.–अमृतस्य मुक्तस्य सेतुः । 'मुक्तोपसृप्यव्यपदेशात्' 'मुक्तानां परमा गतिः' इत्यादेः ।। ६ ।।

जीवानां सकलव्यापारनिर्वाहको भगवानेवेति निरूपणम्

उप.– अरा इव रथनाभौ संहता यत्र नाड्यः ।
स एषोऽन्तश्चरते बहुधा जायमानः ।। ७ ।।

भा.–हृदयस्थः सदा विष्णुर्बहुधा चैकधा भवेत् ।
चरति स्वेच्छयैवान्तः सर्वजीवान्नियामयन् ।। इति प्रवृत्ते ।। ७।।

उप.– ओमित्येवं ध्यायत आत्मानं
स्वस्ति वः पराय तमसः परस्तात् ।। ८ ।।

यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा संप्रतिष्ठितः ।। ९ ।।

यथार्थध्यानं भगवत्साक्षात्कारसाधनम्

मनोमयः प्राणशरीरनेता
प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।

तद् विज्ञानेन परिपश्यन्ति धीरा
आनन्दरूपममृतं यद् विभाति ।। १० ।।

भगवत्साक्षात्कारस्य संसारमारकत्ववर्णनम्

उप.– भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।। ११ ।।

भा.– परा अप्यवरा यस्मात् स हि विष्णुः परावरः ।। ११ ।।

उप.– हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।। १२ ।।

भा.–ब्रह्माण्डमध्यगो नित्यं तपत्येष रवौ स्थितः ।। इति च ।।१२।।

भगवतः ज्योतिषां ज्योतिष्ट्ववर्णनम्

उप.– न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ।। १३ ।।

भा.–सूर्यादयस्तं न भासयन्ति ।। १३ ।।

उप.– ब्रह्मैवेदममृतं पुरस्तात् पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ।। १४ ।।

भा.– इदं ब्रह्मैव विश्वं पूर्णम् । इदमेव वरिष्ठं सर्वोत्तमम् । इदंशब्दानां बहुत्वाद् ब्रह्मविषय एवेदंशब्दः ।। १४ ।।

इति चतुर्थः खण्डः ।।

## अथ पञ्चमः खण्डः

### जीवपरमात्मनोः भेदसाधनम्

उप.– द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्नन्यो अभिचाकशीति ।। १ ।।

भा.– स्वादुवत्सर्वदाऽत्ति । न तु स्वाद्वेव । 'तस्येदमाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' इत्यज्ञानां स्वादुनिषेधात् । जीवाद्य-मेव नाश्नाति भगवान् । न तु नाश्नात्येव । 'तस्येदमाहुः पिप्पलं स्वादु' इत्युक्तत्वात् ।

### श्रुतीनां परस्परमविरोधवर्णनम्

स्वातन्त्र्येणैव भोक्तृत्वाद् दुःखाभोगाच्च सर्वदा ।
अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः ।।
इति तत्त्वसारे ।। १ ।।

उप.– समाने वृक्षे पुरुषो निमग्नो-
ऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीश-
मस्य महिमानमिति वीतशोकः ।। २ ।।

भा.–नास्तीशोऽस्या यतोऽन्यो हि ततोऽनीशा हरेर्मतिः ।
तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते ।।
जीवादन्यः स्वतन्त्रोऽयं यतोऽतः पुरुषोत्तमः ।। इति ब्रह्मसारे ।

उप.– यदा पश्यः पश्यते रुग्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ।। ३ ।।

भा.– पुण्यं चानिष्टं विधूय ।। ३ ।।

उप.– प्राणो ह्येष सर्वभूतैर्विभाति
विजानन् विद्वान् भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावा
नेष ब्रह्मविदां वरिष्ठः ।। ४ ।।

भक्तेः भगवत्प्राप्तिमुख्यसाधनत्ववर्णनम्

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः ।। ५ ।।

सत्यमेव जयति नानृतं
सत्येन विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत् सत्यस्य परमं निधानम् ।। ६ ।।

भा.– सत्यो हि भगवान् विष्णुः सद्गुणत्वात् प्रकीर्तितः ।

आसुरास्तद्विरुद्धत्वादनृताः परिकीर्तिताः ।
तस्य विष्णोर्निधानं तु वैकुण्ठो लोक उत्तमः ।। इति च ।। ६ ।।

उप.– बृहच्च तद् दिव्यमचिन्त्यरूपं
सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।
दूरात् सुदूरे तदिहान्तिके च
पश्यत्स्विहैव निहितं गुहायाम् ।। ७ ।।

भा.–सर्वगत्वात् दूरेऽन्तिके च ।

उप.– न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।। ८ ।।

मुख्यप्राणप्रसादस्यैव भगवत्कृपासाधनत्वम्

भा.–नान्यैर्देवैर्हरिं पश्येत् ज्ञानरूपेण वायुना ।
ब्रह्मणा परमज्ञानरूपेण हरिणा तथा ।।
प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिनः ।। इति च ।

षोडशकलाशरीरो न भवतीति निष्कलः । 'यदा पश्यः पश्यते रुग्मवर्णम्' 'आनन्दरूपममृतं यद्विभाति' इत्युक्तत्वात् ।। ५ ।।

उप.– एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन् प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां
यस्मिन् विशुद्धे विभवत्येष आत्मा ।। ९ ।।

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामां-
स्तस्मादात्मज्ञं ह्यर्चयेत् भूतिकामः ।। १० ।।

इति पञ्चमः खण्डः ।।

## अथ षष्ठः खण्डः

मुख्यप्राण एव हरेः प्रियमधिष्ठानम्

उप.– स वेदैतत् परमं ब्रह्मधाम
यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामा-
स्ते शुक्रमेतदतिवर्तन्ति धीराः ।। १ ।।

भा.– स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद । यत्र विश्वं पूर्णं ब्रह्म निहितम् ।

प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः ।
उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम् ।
तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम् ।।

नित्यं प्राणस्थितस्यैव विष्णोरावेश एव हि ।
प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा ।।

सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि ।
तत्र स्थित्वाऽपि भुञ्जन्त आविशेयुः पुनश्च ते ।।

मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् ।
ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु ।। इति च ।।

एतच्छुक्रं प्रत्यन्यदतिवर्तन्ते ।।

सर्वं तीर्त्वा हरिं शुक्रं प्रतिवृत्तिर्भवेत्पुनः ।
ज्ञानिनः सा हि मुक्तिः स्यात्तन्नैवात्येति कश्चन ।। इति महावाराहे ।

पर्याप्तकामस्य साधकस्य कामाभाववर्णनम्

उप.– कामान् यः कामयते मन्यमानः
स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनश्च
इहैव सर्वे प्रविलीयन्ति कामाः ।। २ ।।

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।। ३ ।।

नायमात्मा बलहीनेन लभ्यो
न च प्रमादात् तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वां-
स्तस्यैष आत्मा विशते ब्रह्मधाम ।। ४ ।।

जीवन्मुक्तस्य चेष्टावर्णनम्

सम्प्राप्यैनमृषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीराः
मुक्तात्मानः सर्वमेवापियन्ति ।। ५ ।।

भा.–सर्वतो देहादेर्मुक्ताः सन्तः । सर्वगं भगवन्तं प्राप्य तमेवापियन्ति ।

देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमम् ।
प्राप्य तस्मिन् प्रविश्याथ मोदन्तेऽन्तर्बहिस्तथा ।। इति च ।।

जीवन्मुक्तानां चतुर्मुखेन सहैव मुक्तिनिरूपणम्

उप.– वेदान्तविज्ञानसुनिश्चितार्थाः
सन्यासयोगात् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृतात् परिमुच्यन्ति सर्वे ।। ६ ।।

भा.–ब्रह्मलोकेषु स्थित्वा परान्तकाले परिमुच्यन्ति ।। ६ ।।

कलाभिमानिभिः सह भगवत्सान्निध्यनिरूपणम्

उप.– गताः कलाः पञ्चदश प्रतिष्ठा
देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकीभवन्ति ।। ७ ।।

एकीभावशब्दार्थनिरूपणम्

भा.–अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।
एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः ।।

एकीभावस्य स्वरूपैक्यतानिरासः

कुतोऽभूतस्य भवनं स्वरूपस्यैक्यमेव हि ।।

अतो नदीनां जीवानां विरुद्धानां नृणामपि ।
अब्धिना हरिणा चैव तथैव च नरान्तरैः ।।

एकीभावस्तु संश्लेषो विरोधस्य च वर्जनम् ।
स्वरूपैक्यं कुतस्तेषां नित्यभिन्नस्वरूपिणाम् ।।

हरेरपि स्वरूपाणामेकीभावो यदोच्यते ।
संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः ।। इति च ।

मुक्तानां स्वोत्तमदेवतानियम्यत्वनिरूणम्

गताः मुक्ताः । प्राणादिपञ्चदशकलारूपा देवताः अन्ये च प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः कर्माणि विज्ञानमयो जीवश्च परमात्मनि प्रविशन्ति ।

प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात् ।
कलानां देवता अन्या देवतानां नरा अपि ।।

तस्मात् सर्वेषु मुक्तेषु नरेष्वपि नियामकाः ।
तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः ।।

इति मुक्तिविवेके ।।

कर्माभिमानिनः पृथग्वर्णने कारणनिरूपणम्

कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।
कलाभ्यः पृथगुक्तं तत् पुष्करः कर्म चोच्यते ।। इति च ।

परव्याख्यानस्यासाङ्गत्यप्रदर्शनम्

अन्यथा गता भविष्यन्तीत्यध्याहारो दोषः । न च मूलरूपाणि प्रतिदेवता इत्युच्यन्ते देवानाम् । प्रतिरूपशब्दवद्धि प्रतिदेवताशब्दः । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' 'इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति 'यथा सोम्येमाः समुद्रायणाः' इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनाच्च मुक्ता देवता एवोच्यन्ते । 'स प्राणमसृजत' इत्यादेश्च पुरुषो भगवान् ।। ७ ।।

उप.– यथा नद्यः स्यन्दमानाः समुद्रेऽ
स्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद् विमुक्तः
परात् परं पुरुषमुपैति दिव्यम् ।। ८ ।।

भा.–अगम्यनामरूपत्वादमुक्तैर्मुक्तिगा नराः ।
विहीननामरूपास्तु न हि तद्रहितत्वतः ।।

अशरीरो यथा वायुः सामान्यागम्यदेहतः ।
एवं नद्यः समुद्रस्थाः सामान्यागम्यरूपतः ।। इति च ।

स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत्पृथग्ज्ञात्वा मेघे कृत्वा प्रवर्षति ।। इति च ।

नामरूपयोर्नाशाभावोक्तिः

विमुक्त इत्यमुक्त इत्यर्थः । विप्रिय इतिवत् । अविहायेति च । 'अनन्तं वै नाम' इति श्रुतिः ।। ८ ।।

उप.– स यो ह वै तत्परमं ब्रह्म वेद
ब्रह्मैव भवति नास्याब्रह्मवित् कुले भवति ।
तरति शोकं तरति पाप्मानं
गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ।। ९ ।।

भा.–परं ब्रह्म विदित्वा तु बृंहितः स्यात् स्वयोग्यतः ।
नायोग्यं किञ्चिदाप्नोति कुत एव हरेर्गुणान् ।। इति च ।

ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता ।
अस्वतन्त्रस्य जीवस्य कुतो नित्यस्वतन्त्रता ।। इति स्कान्दे ।

एतदुपनिषदः मुक्तपरमात्मभेदपरत्वकथनम्

'यत्रामृतः स पुरुषो ह्यव्ययात्मा' 'यत्र तत्सत्यस्य परमं निधानम्' 'अमृतस्यैष सेतुः' 'शरवत् तन्मयो भवेत्' 'ब्रह्म तल्लक्ष्यमुच्यते' 'निरञ्जनः परमं साम्यमुपैति' इत्यादिना मुक्तस्य सर्वत्र भगवत्सकाशाद्भेदस्यैवोक्तत्वाच्च । 'मुक्तोपसृप्यव्यपदेशात्' 'जगद्व्यापारवर्जम्' 'प्रकरणादसन्निहितत्वाच्च' इत्यादिना भगवताऽपि सर्वत्र भेदस्यैव सूचितत्वात् ।

सकलश्रुतीनां मुक्तपरमात्मभेदपरत्ववर्णनम्

न ते महित्वमन्वश्नुवन्ति । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'

ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ।। इत्यादेश्च ।

मुक्तेभ्योऽपि मनुष्येभ्यो देवा एव गुणाधिकाः ।
तेभ्यो वायुस्ततो विष्णुः परिपूर्णगुणः सदा ।।

ये त्वेतदन्यथा विद्युस्ते हि यान्त्यधरं तमः ।
ये त्वेतदेवं जानन्ति ते यान्ति परमं हरिम् ।। इति च ।

ब्रह्मज्ञानिकुलस्य श्रैष्ठ्यवर्णनम्

देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते ।
बलवद्धेतुतश्चान्ये यस्माद् ब्रह्मविदः सुराः ।।

न सन्ततौ ब्रह्मविदो नराणां ज्ञानिनामपि ।
प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे ।।

तस्मात् स भगवान् विष्णुर्ज्ञेयः सर्वोत्तमोत्तमः ।
सदा सर्वगुणैः पूर्णो योऽनन्तः पुरुषोत्तमः ।। इति च ।

ब्रह्मविद्याधिकारनिरूपणम्

उप.– तदेष श्लोकः ।

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः
स्वयं जुह्वत एकर्षीन् श्रद्धयन्तः ।
तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं विधिवद् यैस्तु चीर्णम् ।। १० ।।

तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।
ॐ नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।। ११ ।।

।। इति आथर्वणोपनिषत् समाप्ता ।।

भा.–प्रीयतां भगवान् मह्यं प्रेष्ठप्रेष्ठतमः सदा ।
मम नित्यं नमाम्येनं परमोदारसद्गुणम् ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
आथर्वणोपनिषद्भाष्यं समाप्तम् ।।

# माण्डूकोपनिषद्भाष्यम्

मङ्गलाचरणम्

भा.–पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ।।

# माण्डूकोपनिषत्

## अथ प्रथमः खण्डः

उप.– ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानं भूतं भवद् भविष्यदिति ।। सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ।। १ ।।

भा.–मण्डूकरूपिणा वरुणेन चतूरूपो नारायणः स्तूयते ।

ध्यायन् नारायणं देवं प्रणवेन समाहितः ।
मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम् ।। इति पाद्मे ।

हरेः प्रणववाच्यत्वसमर्थनम्

ओमित्युक्तं तु यद्ब्रह्म तदक्षरमुदाहृतम् ।
औतमत्र जगद्यस्मादों तस्मात् भगवान् हरिः ।।

तदिदं गुणपूर्त्यैव सर्वमित्येव शब्दितम् ।
भाविभूतभवत्कालेष्वेकरूपतया हरिः ।।

सर्वदा नित्य इत्येषा व्याख्योङ्कारस्य कीर्तिता ।।
इति बृहत्संहितायाम् ।

ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः ।
सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेः क्वचित् ।। इति नैर्गुण्ये ।

सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम् । त्रिकालातीतत्वं च तस्यैव । प्रकृतेरपि त्रिकालातीतत्वं विद्यत इत्यन्यदिति विशेषणम् ।। १ ।।

उप.– सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म । सोयमात्मा चतुष्पात् ।। २ ।।

भा.– 'परमं यो महद्ब्रह्म' 'तदेव ब्रह्म परमं कवीनाम्' 'पूर्णमदः पूर्णमिदम्' इत्यादिषु प्रसिद्धं च ब्रह्मणः पूर्णत्वमित्याह– सर्वं ह्येतत् ब्रह्मेति ।। श्रीब्रह्मादिसकलदेहेषु स्थित्वाऽऽदानादिकर्ता योऽयं कश्चित् प्रतीयते । जीवानामस्वातन्त्र्यदर्शनात् । सोऽपि स एवेति दर्शयति– अयमात्मा ब्रह्मेति ।

पूर्णस्तु हरिरेवैको नान्यत् पूर्णं कदाचन ।
विना च प्रकृतिं नान्यत् कालातीतं परात्मनः ।।

कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः ।
अभिमानात्तु जीवानां न कालातीतता भवेत् ।।

मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः ।
पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः ।।

सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा ।
आदानादनकर्तृत्वादात्मा तेषामगोचरः ।।
इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम् ।।

इति हरिवंशेषु ।। २ ।।

## देहस्थितविश्वादिनिरूपणम्

उप.– जागरितस्थानो बहिःप्रज्ञः । सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः ।। ३ ।।

भा.–चतुर्धाऽवस्थितो देहे परमात्मा सनातनः ।
वैश्वानरो जागरितस्थानगो गजवक्त्रकः ।।

निर्माता बाह्यसंवित्तेर्जीवानां तदगोचरः ।
अष्टादशमुखान्यस्य पुमाकाराणि सर्वशः ।।

मध्यमं तु गजाकारं चतुर्बाहुः परः पुमान् ।
पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः ।।

स्थूलान् भोगानिन्द्रियैः स शुभान् भुङ्क्ते न चाशुभान् ।
विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुतः ।।

तत्सम्बन्धी नरोऽनाशाद् वैश्वानर उदाहृतः ।
विनायकस्तु विश्वस्य ध्यानादैद् गजवक्त्रताम् ।।

तथैव तैजसध्यानात् त्रिध्यानादिन्द्र इन्द्रताम् ।
चतुर्ध्यानाच्च रुद्रत्वं रुद्र आप जनार्दनात् ।।
एवम्भूतगुणो विष्णुश्चतुरात्मा परात् परः ।। इति महायोगे ।। ३ ।।

उप.– स्वप्नस्थानोऽन्तप्रज्ञः । सप्ताङ्गः एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ।। ४ ।।

भा.–जाग्रद्दर्शनसंस्काररूपत्वात् स्वप्नगं तु यत् ।
प्रविविक्तं तु तज्ज्ञानकारणोऽन्तर्ज्ञ उच्यते ।। इति वाराहे ।।४।।

विश्वादिरूपाणां कार्यस्य तथा स्थानस्य च वर्णनम्

उप.– यत्र सुप्तो न कश्चन कामं कामयते न कश्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ।। ५ ।।

भा.–सुषुप्तं तु तमो ज्ञेयं हरिं प्राप्य तदावृतः ।
न कामयेन्नैव पश्येज्जीवः स्वात्मतमो विना ।।

कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम् ।
चित्तस्थो दर्शयेद् यस्मात् तैजसः स्वप्नकृद्धरिः ।।

न बाह्यं ज्ञापयेद्यस्माद् प्राज्ञस्तेन जनार्दनः ।
एकीभावं व्रजेतां च तेन विश्वश्च तैजसः ।।

एकीभूतस्त्वतः प्राज्ञो घनो जीवस्तमोवृतः ।
तन्मात्रस्य सकालस्य घनप्रज्ञः प्रदर्शनात् ।।

इति प्रकाशिकायाम् ।

आनन्दमयः पूर्णानन्दः । चेतोमुखः ज्ञानस्वरूपमुखः । प्रज्ञानघन इति विपरीतसमासः । घनप्रज्ञ इति वक्ष्यमाणत्वात् । विषयभोगं विनाऽऽनन्दमात्रभुक्त्वादानन्दभुगिति विशेषः । आनन्दमयत्व चेतो-मुखत्वसर्वज्ञत्वसर्वेश्वरत्वादिचतुष्टयेऽपि समम् । अन्यत्रातिदेशार्थ-मेकत्रानन्दमयत्वं चेतोमुखत्वं चोक्तम् ।। ५ ।।

उप.– एष सर्वेश्वरः एष सर्वज्ञः एषोऽन्तर्यामी ।
एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ।। ६ ।।

भा.– एष चतूरूप आत्मा सर्वज्ञत्वसर्वेश्वरत्वादिलक्षणः ।।

परमात्मा चतूरूपः सर्वप्राणिशरीरगः ।
विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ।।

तानि रूपाणि सर्वाणि पूर्णानन्दमयानि तु ।
चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपतः ।।

मुखशब्दस्तु सर्वस्य देहस्याप्युपलक्षणः ।
तथाऽपि मुखशब्दोऽयं पूर्णत्वं सूचयेद् विभोः ।।
ज्ञानस्य मुख्यवाचित्वान्मुखवाच्यपि सन् स्वतः ।।
इति मार्कण्डेये ।।

पूर्णानन्दस्वरूपस्य क्रीडा भोगो न चान्यथा ।
यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन ।।
इति ब्रह्मतर्के ।। ६ ।।

उप.– अत्रैते श्लोका भवन्ति ।

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ।। ७ ।।

भा.– प्रमाणस्य प्रमाणं च बलवद् विद्यते मुने ।
ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ।।
अत्र श्लोका भवन्तीति चकारैव पृथक् पृथक् ।। इति गारुडे ।

खण्डचतुष्टयेऽपि पृथक् पृथक् ।। ७ ।।

उप.– दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ।। ८ ।।

विश्वो हि स्थूलभुक् नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ।। ९ ।।

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।
आनन्दं च तथा प्राज्ञं त्रिधा तृप्तिं विजानथ ।। १० ।।

त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ।। ११ ।।

सृष्टेः स्वरूपकथनम्

प्रभवः सर्वभावानां सतामिति विनिश्चयः ।
सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ।। १२ ।।

भा.– प्रभवः सर्वभावानां विष्णुरेव न संशयः ।
इत्थं सतां निश्चयः स्यादन्यथा त्वसतां भवेत् ।।
सर्वस्य हि प्रणेतृत्वात् प्राणो नारायणः परः ।। १२ ।।

उप.– विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ।। १३ ।।

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ।।१४।।

भा.– तां सृष्टिं बहुधा प्राहुर्ज्ञानिनोऽज्ञानिनस्तथा ।
विष्णुर्विकृतिमायाति महदादिस्वरूपिणीम् ।।

तत्तद्विविधभूतिस्तु सृष्टिः प्रोक्ता ह्यपण्डितैः ।
स्वप्नमायासरूपां च केचिदज्ञा जना विदुः ।।

अविकारस्य चिन्मात्रस्वेच्छयैवाखिलं जगत् ।
उत्पद्यत इति प्राज्ञाः प्राहुर्ब्रह्मादयोऽखिलाः ।।

पूर्णशक्तेः कुतो माया सार्वज्ञात् स्वप्नवत् कुतः ।
सर्वदोषव्यतीतस्य विकारः कुत इष्यते ।।

तस्मादेवाविकारस्य विष्णोरिच्छावशादिदम् ।
यथार्थमेव सम्भूतमिति वेदवचोऽखिलम् ।।

केचित् कालत एवैतां सृष्टिमाहुरकोविदाः ।
केचिद्रुद्राद् ब्रह्मणश्च प्रधानादिति चापरे ।।

विमूढाः सर्व एवैते यतो नारायणः परः ।
सर्वकर्ता सर्वशक्तिरेक एव न चापरः ।।
प्रधानकालब्रह्मेशमुखाः सर्वेऽपि तद्वशाः ।

सृष्टिप्रयोजननिरूपणम्

उप.– भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहेति ।। १९ ।।

भा.– तस्यापि विष्णोः सृष्टिं तु केचिदाहुरनैपुणाः ।।
अतृप्तस्यैव भोगार्थं क्रीडार्थं तु विपश्चितः ।
सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः ।।
इति हरिवंशेषु ।।

इति प्रथमखण्डः ।।

## अथ द्वितीयः खण्डः

हरेः तुरीयरूपनिरूपणं तथा तत्कार्यवर्णनञ्च

**उप.– नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं नप्रज्ञं नाप्रज्ञमदृष्टं अव्यवहार्यं अलक्षणं अचिन्त्यं अव्यपदेश्यं ऐकात्म्य-प्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः ।। १ ।।**

भा.– विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।
मुक्तानां प्राप्यरूपोऽसौ व्यवहारे न दृश्यते ।।

सम्यक् समाहितानां तु प्राप्तानां षोडशीं कलाम् ।
अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम् ।।

अन्तर्बहिश्च सौप्तं च समाधिज्ञानमेव च ।
बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च ।।

यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता ।
एतत्सर्वं तुरीयेण रूपेण न करोत्यजः ।।
सर्वज्ञानप्रदश्चापि मुक्तस्यैव तुरीयकः ।। इति ब्रह्माण्डे ।

अमुक्तस्य त्वदृश्यत्वात् षोडशीं वा कलामृते ।
तुरीयोऽदृष्ट इत्युक्तो ग्रहणादेरगोचरः ।।

विना मुक्तिं ततस्तेनाव्यवहार्य इतीरितः ।
जाग्रदादिप्रवृत्तिस्तु लक्षणं ह्यनुमापकम् ।।

अलक्षणस्तद्राहित्यादचिन्त्यस्तत एव च ।
तत एव ह्यनिर्देश्यश्चिदानन्दैकलक्षणः ।।

मुक्तस्य सर्वव्यापारहेतुरेव तुरीयकः ।
एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः ।।

तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितः ।
प्रत्ययो ज्ञानरूपत्वात् सार आनन्दरूपतः ।।

प्रपञ्चो विस्तृतेर्विष्णुः शम आनन्दरूपतः ।
उत्कृष्टानन्दरूपत्वादुपशब्दः प्रकीर्तितः ।।

प्रपञ्चं देहबन्धाख्यं तुरीयः शमयेद्यतः ।
प्रपञ्चोपशमस्तेनाप्युक्तः स भगवान् प्रभुः ।।

निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः ।
अन्यथाप्रत्ययो द्वैतं शमयेत् तं यतो हरिः ।।

अद्वैतस्तेन चोद्दिष्टस्तुरीयः पुरुषोत्तमः ।। इति माहात्म्ये ।।

अपेक्ष्य वस्तुयाथार्थ्यं द्वित्वमन्यस्वरूपया ।
इण् गताविति धातोश्च तज्ज्ञानं द्वैतमुच्यते ।। इति सङ्कल्पे ।

'स आत्मा स विज्ञेयः' इति सोऽयमात्मा चतुष्पादिति चतुर्धा विभक्त उच्यते उपसंहारार्थम् । 'सोऽयमात्माऽध्यक्षरम्' इति पृथगारम्भात् ।

विश्वादिरूपो यस्त्वात्मा स विज्ञेयो मुमुक्षुभिः ।
निर्विशेषोऽपि भगवांश्चतुर्धा समुदीरितः ।। इति प्रत्यये ।

उप.– अत्रैते श्लोकाः भवन्ति ।

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ।। २ ।।

भा.– सर्वदुःखानां निवृत्तेः कारणभूतस्तुरीयो देवः ।
हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः ।
देवः स सर्वजीवानां गम्यत्वात् समुदीरितः ।
भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः ।।

ईशानामपि मुक्तानां ईशानः सोऽननाच्छ्रुतः ।। इति प्रत्याहारे ।

उप.– कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ।। ३ ।।

भा.– कार्यकारणबन्धस्य तदधीनत्वतो विभुः ।
विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ ।

बद्धदुःख्यादिशब्दानां भगवति समन्वयप्रदर्शनम्

कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मनः ।। इति च ।

'स बद्धः स दुःखी स बन्धयति स दुःखयतीति । स जीवः स प्रकृतिः स जीवयति स प्रकरोतीति । सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इति कौषारवश्रुतिः ।

विष्णोर्गुणोक्तिपरता मम नित्यं सुरेश्वराः ।
तदर्थमन्यद्वचनमतस्तस्य विरोधि यत् ।।

तन्ममार्थो न हि क्वापि साऽहं तत्सरणात् सदा ।
सरस्वतीति सम्प्रोक्ता तस्माज्ज्ञेया गुणा हरेः ।। इति महोपनिषदि ।।

उप.– नात्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ।। ४ ।।

भा.– नात्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः संवेदयेत् किञ्चिज्जीवकालतमो विना ।।

सुप्त्यवस्थां सुखं चापि विना नान्यत् प्रदर्शयेत् ।
सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः ।। इति प्रत्यये ।

स्वतन्त्रे कर्तृशब्दः स्यात् प्राज्ञस्यावेदनं यथा ।
सर्वप्रदर्शके चैव तुरीये सर्वदर्शनम् ।। इति ब्रह्मतर्के ।

उप.– द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ।। ५ ।।

भा.– निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा ।
यथा भृत्ययुतः स्वामी न ह्यज्ञानं परात्मनः ।। इति च ।

अभेदमपि तद्ब्रह्म बहुरूपं विशेषतः ।
करोति न करोतीति व्यवहार्यं स्वशक्तितः ।। इति च ।

न संवेदयतीत्यस्वीकारे । 'तुर्यं तत्सर्वदृक् सदा' 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति च विरुद्धम् । द्वैतग्रहणाकारणत्वं तुल्यमित्यर्थः ।

द्वैतं न ग्राहयेत् तुर्यो न च प्राज्ञः कथञ्चन ।
द्वैतग्रहणबीजं तु निद्रा प्राज्ञं समाश्रिता ।। इति प्रकटश्रुतिः ।

उप.– स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ।। ६ ।।

उप.– अन्यथागृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ।। ७ ।।

भा.– विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते ।

उप.– अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ।। ८ ।।

भा.– अनादिमायया विष्णोरिच्छया स्वापितो यदा ।
तया प्रबोधमायाति तदा विष्णुं प्रपश्यति ।।
इति प्रकाशिकायाम् ।।

''अनादिमायया सुप्तो जीवः'' इत्यस्यार्थवर्णनम्

उप.– प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।। ९ ।।

भा.– तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः ।
वस्तुतोऽसौ न चैवास्ति परमस्य वशे यतः ।।

तन्वादिकस्तथाऽप्येष ह्यभिमानात् प्रदृश्यते ।
अतः स विद्यत इति ह्यङ्गीकारो भवेद्यदि ।।
तथापि भगवज्ज्ञानात् स निवर्तेदसंशयम् ।। इति ब्रह्मतर्के ।

अद्वैतमनन्यथा ज्ञातम् । परब्रह्मादिवस्तु तत् । द्वैतं द्विधा ज्ञातमन्यथाज्ञातमज्ञैः । परमार्थतः परमेश्वरात् । तस्यैव मायामात्रं तदिच्छया निर्मितम् । तदन्यथाज्ञानं तस्मात् तदिच्छयैव निवर्तते ।

परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा ।
तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा ।।

जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च ।
परमार्थात् पराद् विष्णोर्जातमिच्छावशादनु ।।

मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम् ।
उत्तमत्वात् परार्थोऽसौ भगवान् विष्णुरव्ययः ।। इति च ।

''प्रपञ्चो यदि विद्येत'' इति श्रुत्यर्थवर्णनम्

उप.– विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।। १० ।।

''विकल्पो विनिवर्तेत'' इति श्रुत्यर्थकथनम्

भा.– अनन्यथा इतमवगतमद्वैतम् । द्वैतं वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथा ज्ञातमित्यर्थः । अतो विकल्पः शरीरादिसम्बन्धः केनचिद-ज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्तते । अयं सतां वादः । ज्ञाते सति ब्रह्मणि द्वैतमन्यथाज्ञानं निवर्तते इति ।।

विकल्पो देहबन्धादिः केनचित् कारणेन तु ।
कल्पितो विनिवर्तेत गुरुवाक्यादसंशयः ।।

एष एव सतां वादो ज्ञाते ब्रह्मणि तत्त्वतः ।
निवर्ततेऽन्यथाज्ञानं तत आनन्दमेत्यसौ ।। इति च ।। १० ।।

इति द्वितीयखण्डः ।।

## अथ तृतीयः खण्डः

विश्वादिरूपाणां तथोङ्कारस्य च निरूपणम्

उप.– सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति ।। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा । आप्तेरादिमत्त्वाद् वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति । य एवं वेद ।। १ ।।

भा.– अधिकं सर्वतोऽविनाशि चेत्यध्यक्षरम् । अधिका एव मात्रा अंशा यस्य तदधिमात्रम् । अ इत्यनेनाभिधानेनाक्रियत इत्यकारः । तत्र पूर्वोक्तो वैश्वानरः प्रथमा मात्रेत्याद्यनुवादः । अकार इत्यादिकं विधेयम् । प्राज्ञस्तैजसश्चादिरस्येत्यादिमात्रम् । सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति विश्वः । स्वप्नादुत्थाने तैजसात् । आदिश्चास्योपासकस्य भवति ।।१।।

उप.– स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वात् वा । उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति । य एवं वेद ।। २ ।।

भा.– शरीराभिमानादुत्थाप्य कर्षतीत्युत्कर्षः । निद्रा विषयानुभवश्चानेन क्रियत इत्युभयत्वम् । समानः सर्वेषां मध्यस्थो भवति ।। २ ।।

उप.– सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति । य एवं वेद ।। ३ ।।

भा.– मितेरन्तर्गमनात् ।

अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतः ।
येंऽशास्तस्य तु सर्वेऽपि पूर्णाः प्रत्येकशो विभोः ।।

अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः ।
श्रुतः स विष्णुरोङ्कार ओमित्याक्रियते यतः ।।

आद्यस्तदंशो ह्याप्तिः स्याद् विषयानापयेद्यतः ।
जीवस्य तु यतः प्राज्ञात् तैजसाद्वा समुत्थितः ।।

अविभागोऽपि भगवानादिमांस्तेन कीर्तितः ।
तस्मादुत्पद्यते मुक्तस्तज्ज्ञानानन्दलक्षणः ।।

आप्नोति विषयान् सर्वान् निद्राया विषयस्य च ।
उभयोः कारणत्वेन ह्युभयस्तैजसः श्रुतः ।।

देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले ।
उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् ।।

आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् ।
मध्यस्थश्च भवेत् स्नेहाद्दोषाभावाच्च सर्वशः ।।

स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता ।
जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद् यतः ।।

प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगः ।
व्याप्याऽन्तर्गमयेत् सर्वं दुःखाद्यं तु विलापयेत् ।।

अणूनामपि जीवानां प्रकाशो व्यापको भवेत् ।
अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् ।।
अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत् ।।
इति ब्रह्मतर्के ।। ३ ।।

उप.– अत्रैते श्लोकाः भवन्ति ।

विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ।। ४ ।।

भा.– मात्रासम्प्रतिपत्तौ अंशध्याने । आदिमत्वं विश्वस्य विद्यते । तदुपासकस्यापि भवतीत्यादिसामान्यम् ।

उप.– तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम् ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ।। ५ ।।

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ।। ६ ।।

त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितम् ।
स पूज्यस्सर्वभूतानां वन्द्यश्चैव महामुनिः ।। ७ ।।

अकारो नयते विश्वमुकारश्चापि तैजसम् ।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिरिति ।। ८ ।।

भा.– अमात्रेऽप्यगतिर्न विद्यते । प्रतिदिवसं विभाग एकीभावश्च विद्यते विश्वादीनाम् । तुरीयस्य तन्न विद्यत इत्यमात्रः । विश्वादीनां व्यवहारकारणत्वं विद्यते । तुरीयस्य तन्न विद्यत इत्यतो गम्यत्वमपि

नास्तीत्याशङ्कां निवर्तयति– 'अगतिर्न विद्यते' इति । 'आत्मानं संविशति' इति गतिवचनात् ।

आदिमत्त्वेन सामान्यमुपास्येन भवेदिति ।
उपासकस्य सज्ञानन् सर्ववन्द्यो भवेत् पुमान् ।।

सामान्यत्रयमप्येतत् तुल्यं मुक्तिगतत्वतः ।
अमात्रत्वं तुरीयस्याप्यविभागाद् दिने दिने ।।
जाग्रदादेरकर्ताऽपि गम्योऽसौ ज्ञानिनां भवेत् ।। इति च ।

आदिमत्त्वादिसामान्यं तुल्यं मोक्षोपभोग्यतः ।
अमात्रत्वं तुरीयस्याप्यविभागाद्दिने दिने ।।

इत्यात्मसंहितायाम् ।।

इति तृतीयखण्डः ।।

## अथ चतुर्थः खण्डः

उप.– अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः ओङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद ।। १ ।।

भा.– आत्मैव भूत्वाऽन्याभिमानं त्यक्त्वा परमात्मनैव परमात्मानं प्रविशत्युपासकः । अव्यवहार्यत्वादिकमत्र साम्यमिति दर्शयितुं पुनरप्युक्तमव्यवहार्यत्वादिकम् ।। १ ।।

उप.– अत्रैते श्लोकाः भवन्ति ।

ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ।
ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ।। २ ।।

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ।। ३ ।।

प्रणवो ह्यपरं ब्रह्म प्रणवस्य परं स्मृतम् ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ।। ४ ।।

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ।। ५ ।।

प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ।। ६ ।।

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ।
स मुनिर्नेतरो जन इति ।। ७ ।।

इति चतुर्थः खण्डः ।।

इति श्रीमाण्डूक्योपनिषत् ।।

भा.– तुरीयं नादनामानं हरिं ज्ञात्वा परं पदम् ।
तमेव प्रविशेच्छुद्धरूपी तत्सदृशात्मवान् ।।

ज्ञानानन्दौ च शक्तिश्च तथापि न समाः क्वचित् ।
विमुक्तस्यापि जीवस्य पारतन्त्र्यं च नित्यदा ।।

चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि ।
जाग्रदादिप्रणयनात् स एव ब्रह्म बृंहणात् ।।

ओमित्याक्रियमाणत्वादोङ्कारः सम्प्रकीर्तितः ।
आदिमत्वादयो ह्यर्था ओमित्यस्य श्रुतौ श्रुताः ।।

अपूर्वः कारणाभावान्नाशाभावादनन्तरः ।
पराधीनस्थित्यभावादनपर उदाहृतः ।।
सर्वगत्वादवाह्यश्च तं ज्ञात्वा प्रविमुच्यते ।। इति च ।।

परत्वमपरत्वं च विष्णोरेकस्य वै यदा ।
श्रूयते न तु सामर्थ्यभेदस्तत्र कथञ्चन ।।
अवतारस्य पूर्वत्वात् पौर्वापर्यमुदाहृतम् ।। इति ब्रह्मतर्के ।

पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एवेति प्रणवो ह्यपरं ब्रह्मेत्यादेरर्थः ।।

एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।
यस्तं वन्दे चिदात्मानं विष्णुं विश्वादिरूपिणम् ।।

इति चतुर्थखण्डः ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
माण्डूक्योपनिषद्भाष्यं समाप्तम् ।।

# तैत्तिरीयोपनिषत्

उप.– ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

# तैत्तिरीयोपनिषद्भाष्यम्

## शिक्षावल्ली

### मङ्गलाचरणम्

भा.– सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् ।
सर्वैर्देवैरीड्यं विष्ण्वाख्यं सर्वदैमि सुप्रेष्ठम् ॥

### एतदुपनिषद ऋषिदेवतानां निरूपणम्

आदित्यसंस्थितात् विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् ।
तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः ॥

विष्णुमस्तौत् तथा प्राह शन्नो मित्रादिका श्रुतिः ।
यदुवाच हरिस्सूर्यमण्डलस्थः परः पुमान् ॥

ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु ।
शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् ॥

भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् ।
मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः ।।
सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीम् ।।
इत्यादि यजुःसंहितायाम् ।।

शान्तिमन्त्रस्य भृगुवाक्यानुवादत्वनिरूपणम्

भृगुवाक्यतया वायुनमस्कारादिकं हरिः ।
प्रोवाच ब्रह्मणे चैवं वचस्सुबहुदर्शिषु ।। इति च ।। १ ।।

उप.– ॐ शिक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ।। २ ।।

भा.– वरणीयो वर्णः । स्वरतेस्तु स्वरः । मानात् त्राता मात्रा । बलरूपः । समश्च सर्वरूपेषु । सन्ततश्च ।

वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम् ।
विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम् ।। २ ।।

उप.– सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते ।। ३ ।।

भा.– नारायणादिरूपाणि लोकादिषु च पञ्चसु ।
अनिरुद्धावसानानि ध्येयानि चतुरात्मना ।।

वासुदेवादिकान्येव तानि पूर्वोत्तरार्णयोः ।
संहितायास्तथा सन्धौ सन्धाने चापि कृत्स्नशः ।।

यो वेदैतानि रूपणि सर्वभोगसमन्वितः ।
प्राप्नोति वैष्णवं स्थानं मुक्तस्स्वर्गाभिधं परम् ।। ३ ।।

उप.– अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ।। ४ ।।

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् ।। ५ ।।

अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् । इत्यधिविद्यम् ।। ६ ।।

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धानम् । इत्यधिप्रजम् ।। ७ ।।

अथाध्यात्मम् । अधराहनुः पूर्वरूपम् । उत्तराहनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ।। ८ ।।

मेधाशक्तिप्रार्थना

उप.– यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात् सम्बभूव । समेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयाऽपिहितः । श्रुतं मे गोपाय ।। ९ ।।

सम्पत्प्रार्थना

आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासा॑ऽसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ।। १० ।।

विद्याभिवृद्ध्यै शिष्यसम्पत्प्रार्थना

आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि मा यन्तु ब्रह्मचारिणः स्वाहा । प्र मा यन्तु ब्रह्मचारिणः स्वाहा । दमा यन्तु ब्रह्मचारिणः स्वाहा । शमा यन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन् सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा ।। ११ ।।

यथापः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु ब्रह्मचारिणः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ।। १२ ।।

भा.–यो विश्वरूपो भगवांश्च्छन्दसामधिपो हरिः ।
छन्दोभ्योऽमृतरूपेभ्यस्सुव्यक्तस्तदुपासनात् ।।
मेधावी तत्त्वविज्ञानी भूत्वा क्षिप्रं विमुच्यते ।। इति च ।

वेदावासत्वतो विष्णुर्ब्रह्मकोश इति स्मृतः ।
भगः षड्गुणपूर्णत्वाद् वहुरूपत्वतो विभुः ।।

सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम् ।
मुच्यते नात्र सन्देहस्सर्वभोगैश्च युज्यते ।। इति प्रक्रमे ।

आवहन्ती चिरं सर्वभोगान् या श्रीस्सनातनी ।
तां मय्यावह गोविन्द सुशिखण्डोपशोभिताम् ।। इति च
।। १२ ।।

उप.– भूर्भुवः स्वरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मै तां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद् ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः ।। १३ ।।

व्याहृतिप्रतिपाद्यभगवद्रूपाणां निरूपणम्

भा.–भूरादिव्याहृतीभिस्तु वाच्यं मूर्तिचतुष्टयम् ।
अनिरुद्धादिकं वासुदेवान्तं देहमध्यगः ।।

वासुदेवो महोनामा त्वनिरुद्धश्शिरो मतः ।
भूर्नामाथ भुवोनामा बाहू प्रद्युम्न ईरितः ।।

सङ्कर्षणस्सुवर्नामा पादौ तस्य महात्मनः ।
अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते ।।
निर्विशेषोऽपि भगवान् सङ्ख्यामात्रविशेषतः ।। १३ ।।

व्याहृतिप्रतिपाद्यभगवद्रूपाणां स्थाननिरूपणम्

उप.– भूरिति वा अयं लोकः । भुवः इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वा व सर्वे लोका महीयन्ते ।

भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते ।

भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते ।

भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ।। १४ ।।

भा.–लोकज्योतिःप्राणवेदेष्वेकस्स पुरुषोत्तमः ।
प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः ।।

महीयते महति च स्वयं स भगवान् हरिः ।
पूज्यपूजकभेदोऽत्र नैव कश्चिदपीष्यते ।।

नामप्रवृत्तिहेतुत्वान्नाम लोकादिकं हरेः ।
अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः ।।

ईक्षणादन्तरिक्षं चाथादित्यस्थोऽदितेस्सुतः ।
अग्निरग्नौ स्थितत्वाच्च वायुर्वयति यज्जगत् ।।

चन्द्र आह्लादरूपत्वादृगर्च्यत्वाज्जनार्दनः ।
यजुर्याज्यस्वरूपत्वात् साम चासौ समत्वतः ।।

बृहत्वात् ब्रह्म वेदानां समुदायेऽखिले स्थितः ।
तत्सम्बन्धाद्वेदराशिर्ब्रह्मशब्देन कीर्तितः ।।

प्रकृष्टनयनात् प्राणोऽपानोऽवाङ्नयनाद्धरिः ।
विविधं नयनाद् व्यानस्सोऽन्नं सर्वोपजीव्यतः ।।

एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः ।
महाचमसनामासौ यस्मादतिचमत्कृतिः ।।

माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः ।
एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः ।।

स एव ब्रह्मवित् तस्मात् पूज्यते मुक्तिगोऽपि सन् ।
सर्वदेवैरतितरां यस्सम्यक् षोडशात्मवित् ।। इति व्याहृतितत्त्वे ।

### अनिरुद्धादीनां वासुदेवाङ्गत्वकथनम्

'तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे । सुवरिति प्रतिष्ठा । द्वे प्रतिष्ठे । द्वे एते अक्षरे' इत्यादिश्रुतेः । सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यश्चतुर्थीत्वेनेतां प्रवेदयत इति विशेषः ।

### व्याहृत्यर्थकथनम्

भूर्नामा स्फूर्तिरूपत्वात् भूरिवीर्यत्वतो भुवः ।
सुवस्सुबलरूपत्वात् महः पूर्णत्वतो विभुः ।।

तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् ।
स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः ।।
तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः ।

### भगवतः सर्ववेदप्रतिपाद्यत्वकथनम्

वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः ।।

स एव सर्ववेदोक्तस्सर्वविद्यासु चेश्वरः ।
प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः ।।

इतिहासपुराणं च पञ्चरात्रं च सर्वशः ।
सम्यग्व्याहरणात् विष्णोः श्रुता व्याहृतयस्त्विति ।।

सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु ।
विशेषेणाहरन्तीमं विष्णुमित्यथवा स्मृताः ।।
इति व्याहृतिसारे ।। १४ ।।

देहस्थव्याहृतिप्रतिपाद्यभगवद्रूपस्थाननिरूपणम्

उप.– स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एषस्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो वि वर्तते । व्यपोह्य शीर्षकपाले ।। १५ ।।

मनोमयेन्द्रयोनिव्यपाशब्दा भगवन्मूर्तिपराः

भा.–य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः ।
प्रद्युम्नस्तालुमध्यस्थो लम्बिन्यामिन्द्रनामकः ।।
व्याख्यस्सुपर्णरूपत्वात् केशान्ते वर्तते तु यः ।
सङ्कर्षणस्सुपर्णात्मा वासुदेवो व्यपस्स्मृतः ।।
यस्माद्व्यपगतस्थाता जगति प्रलये विभुः ।
अशीर्षककपालोसौ कपालादुपरि स्थितः ।। १५ ।।

देवतान्तर्गतव्याहृतिप्रतिपाद्यभगवद्रूपस्थाननिरूपणम्

उप.– भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत् ततो भवति ।। १६ ।।

आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्ति समृद्धममृतम् । इति प्राचीनयोग्योपास्व ।। १७ ।।

भा.–अनिरुद्धस्तु भूर्नामा हुताशे संव्यवस्थितः ।
प्रद्युम्नो भगवान् वायौ भुव इत्येव कीर्तितः ।।

सङ्कर्षणस्सुवर्नामा सूर्ये तिष्ठति केशवः ।
महोनामा वासुदेवो ब्रह्मणिस्थश्चतुर्मुखे ।।

स वासुदेवस्स्वाराज्यं व्याप्यास्मिन् मनसस्पतौ ।
अनिरुद्धे च संव्याप्तः ततो वागादिनां पतिः ।।
वागादिषु स्थितो नित्यं भवत्येष जनार्दनः ।।

स्वव्यापी च जगद्व्यापी नित्यैश्वर्यात् स ईश्वरः ।
आकाशवद्व्याप्तदेहस्सत्यात्मा गुणपूर्तितः ।।

वायोर्विशेषरमको बलानन्दस्वरूपवान् ।
ज्ञानानन्दस्वरूपोऽसौ शान्तिनामा सुखोन्नतेः ।।

अन्तगत्वात् स्वतः पूर्तेस्समृद्धं तत् प्रकीर्तितम् ।
इत्युपास्व प्राथमिको योग्यस्त्वं मदुपासने ।।
प्राधान्यादिति पूर्वं हि प्राह विष्णुश्चतुर्मुखम् ।।

इति ब्रह्मसारे ।। १६-१७ ।।

अधिभूताध्यात्मस्थितानां नारायणादिपञ्चरूपाणां प्रतिपादनम्

उप.– पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा ।

इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म मा॑ऽसऽ॑स्नावास्थिमज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदऽ॑ सर्वम् । पाङ्क्तेनैव पाङ्क्तऽ॑ स्पृणोतीति ।। १८ ।।

भा.–पृथिव्यायं पाङ्क्तषट्कं पाङ्क्तेनैव स्वयं हरिः ।
नारायणादिरूपेण बलयत्यञ्जसा प्रभुः ।।
इत्युवाच स्वयं विष्णुर्वेदद्रष्टा गुणाधिकः ।।
इति तत्त्वसंहितायाम् ।।

आत्मा अहङ्कारतत्त्वम् ।। १८ ।।

### प्रणवमन्त्रस्य महिमा

उप.– ॐ इति ब्रह्म । ॐ इतीदऽ॑ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओऽ॑शोमिति शस्त्राणि शऽ॑सन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्नि-होत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ।। १९ ।।

भा.–ॐनामा भगवान् विष्णुरधिकोच्चगुणत्वतः ।
यद्यद्रूपं भगवतस्तत्तदिदं सर्वमेव च ।।

ओमेवाधिकपूर्णत्वात् तस्माद्यज्ञेषु चर्त्विजः ।
ओमित्येव स्वकर्माणि कुर्वन्त्युद्दिश्य केशवम् ।।

अधिकोच्च शृणुष्वेति हरिमध्वर्युराह हि ।
अधिकोच्च महाधाम सूच्च देवेति चादरात् ।।

प्रति प्रति गृणात्येनं शंरूपात्युच्चशावन ।
इत्याह होता शस्त्रेषु तथैवान्येऽपि चर्त्विजः ।।

एवं स्वाध्यायकृच्चाह ब्रह्मप्राप्त्यर्थमञ्जसा ।
एवं जानन्त एते तु प्राप्नुवन्त्येव तत्परम् ।। इति च ।।१९।।

स्वाध्यायप्रवचनयोर्महत्वम्

उप.– ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च च स्वाध्यायप्रवचने च । दमश्च च स्वाध्यायप्रवचने च । शमश्च च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्याय-प्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्याय-प्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्याय-प्रवचने च ।। २० ।।

भा.– ऋतं च स्वाध्यायप्रवचने च कर्तव्यानि । प्रवचनं व्याख्यानम् । यथार्थज्ञानं ऋतम् । तत्पूर्वकं यथार्थवचनं करणं च सत्यम् ।

ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः ।
ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते ।। इति शब्दनिर्णये ।।

सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वात् तयोः सर्वत्र अनुषङ्गः ।

मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ ततः ।। इति कर्मतत्त्वे ।

आत्मनश्चेन्मनसैवार्थवचनम् ।

मानुषं मानुषो धर्मो देवा अपि हि मानुषे ।
मनुष्यवत् प्रवर्तन्ते नैवैश्वर्यप्रकाशिनः ।। इति च ।

प्रजाया रक्षणं चैव पुनः प्रजननं तथा ।
प्रकृष्टजातिकरणं कर्मभिस्तनये पितुः ।। इति च ।

उप.– सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ।। २१ ।।

भा.–सत्ये तपसि वा चीर्णे सर्वकर्म कृतं भवेत् ।
स्वाध्याये च प्रवचने ह्यन्तर्भावो विशेषतः ।। इति च ।।
यं यं क्रतुमधीते तेन तेनास्येष्टं भवति इति च श्रुतिः ।

जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ।। इति भारते ।।

सम्यग्ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च ।
न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः ।। इति कर्मतत्त्वे ।

उप.– अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविण॒ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ।। २२ ।।

भा.–संसारवृक्षच्छेत्ताऽहं मत्कीर्तिः पर्वतोपमा ।
अत्युत्कृष्टेन हरिणा पावितोऽस्मि यतः स्फुटम् ।।

वाजिरूपश्च नेता च वाजिनी सूर्य उच्यते ।
तत्रस्थो भगवान् विष्णुस्सम्प्रोक्तो वाजिनीवसुः ।।

तेनामृतोऽस्मि द्रविणं नित्यानन्दस्वरूपतः ।
तेनामृतेन सिक्तोहं तेन व्याप्तो यतस्सदा ।।
इत्याह मन्त्रदृक् पूर्वं त्रिशङ्कुर्मानवो नृपः ।। इति यजुर्विवेके ।।

गुरूणा शिष्याय करणीया उपदेशाः

उप.– वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्याय-प्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयासने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ।। २३ ।।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः

स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्या-तेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ताः अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ।। २४ ।।

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋत-मवादिषम् । सत्यमवादिषम् । तन्मामवीत् । तद्वक्तारमवीत् । अवीन्माम् । अवीद्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।।

वायोरपि एतदुपनित्प्रतिपाद्यतासमर्थनम्

भा.– संहितायाः पञ्चाधिकरणाभिमानित्वं प्राणादिरूपस्य वायोरपि भवति । पृथिव्यन्तरिक्षमित्युक्तपाङ्क्तत्वं च । अत उपक्रमोपसंहारयोः 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम्' इति युज्यते ।।

।। इति तैत्तिरीयोपनिषद्भाष्ये शिक्षावल्ली समाप्ता ।। १ ।।

## अथ ब्रह्मवल्ली

उप.– ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।। १ ।।

परब्रह्मणो लक्षणम् तत्प्राप्तिक्रमश्च

ॐ ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चितेति ।। २ ।।

भा.–स्वयोग्यं ब्रह्मवित् भुङ्क्ते विरिञ्चेन परेण च ।
ब्रह्मणा सह तद्वश्यः सुखमेव न दुष्कृतम् ।। इति च ।।२।।

आकाशादीनामुत्पत्तिप्रकारः

उप.– तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ।। ३ ।।

अन्नमयप्रकरणम्

स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ।।४।।

तदप्येष श्लोको भवति ।

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपियन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ।। ५ ।।

भा.–स एष भगवान् विष्णुर्भूतस्रष्टा गुणाधिकः ।
स एवान्नात् पुनर्जातो ह्यजातोऽपि यतो विभुः ।।

अन्नात्मनि शरीरेऽसौ व्यज्यते सुविवेकिभिः ।
अन्नस्य सारभूतोऽयं शरीरस्य च केशवः ।।

अन्ननामा चान्नसंस्थः शरीरेषु च संस्थितः ।
अत्तृत्वात् सर्वलोकानामन्नमित्युच्यते हरिः ।।
उपजीव्यश्च भूतानामिति चान्नं जनार्दनः ।।

स ज्यायान् सर्वभूतेभ्यस्तस्मात् सर्वौषधं स्मृतः ।
संसारे दह्यमानानामाश्रयत्वात् स औषधम् ।।

प्रचुरं मय इत्युक्तं प्रचुरात्ता यतो हरिः ।
प्रचुरैस्सेव्यते नित्यमतोऽन्नमय ईरितः ।।

देहस्यैव शिरस्यस्य शिरो विष्णोः प्रतिष्ठितम् ।
बाह्वोः पक्षौ तथा मध्ये मध्यं पश्चात्तनौ तथा ।।
पुच्छमित्येष भगवाननिरुद्धः स्वयं हरिः ।। ५ ।।

प्राणमयप्रकरणम्

उप.– तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा ।। ६ ।।

तदप्येष श्लोको भवति ।

प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते ।। सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुष-मुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। ७ ।।

भा.–तस्यान्तरं परं रूपमभिन्नमपि भिन्नवत् ।
प्रद्युम्नाख्यं प्राणमयं प्रणेतृत्वात् प्रकीर्तितम् ।।

शिरस्तस्य प्राणगतं प्राण इत्येव नामतः ।
व्यानाख्यो दक्षिणः पक्षो व्यानगश्चोत्तरस्तथा ।।

अपानाख्योऽपानगत आकाशस्थं च मध्यमम् ।
आकाशाख्यं तथा पुच्छं पृथिव्यां पृथिविनामकम् ।।

उदान आकाशनामा समानः पृथिवीति च ।
प्रणेतृत्वात् प्राणनाम शिरो विष्णोः प्रकीर्तितम् ।।

विशेषाच्चेष्टयेद्यस्माद् व्यानाख्यो दक्षिणः करः ।
यस्मादपनयेद्दोषानपानः सव्य उच्यते ।।

आकाशस्त्ववकाशत्वान्मध्यदेहो महात्मनः ।
पृथिवी पुच्छमस्योक्तं सर्वस्यापि प्रधारणात् ।।

स एष जगतामायुः ......... ...........

## मनोमयप्रकरणम्

उप.– तस्माद्वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ।। ८ ।।

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति ।। तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। ९ ।।

भा.–....... ......... तस्मिन् सङ्कर्षणः स्थितः ।।
शिरस्तस्य यजुर्नाम यज्ञानां हरणात् स्मृतम् ।
यजुःसंस्थं च बाहू तु ऋक्सामान्तःस्थितौ सदा ।।

ऋगर्चनायाः स्वीकारात् साम दोषात् समीकृतेः ।
पञ्चरात्रगतं मध्यमादेशाख्यं सुविस्तृतेः ।।

अथर्वाख्यं तथा पुच्छमधरं चाङ्गिनां रसः ।
मनोवाचामगम्यं तं ज्ञात्वाऽऽनन्दस्वरूपिणम् ।।

कुतश्चिन्न विभेत्येव ........ .......... ......

## विज्ञानमयप्रकरणम्

उप.– तस्माद्वा एतस्मात् मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य

पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा ।। १० ।।

तदप्येष श्लोको भवति । विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।।११।।

भा.–......... ........वासुदेवोऽन्तरस्ततः ।। ९ ।।

श्रद्धाख्यं श्रुतिधर्तृत्वाच्छ्रद्धायां तच्छिरः स्मृतम् ।
ऋतं ज्ञानततेर्दाता चर्तस्थो दक्षिणः करः ।।

वामः सत्यस्थितः सत्यं सतां यस्मान्नियामकः ।
योगाख्यं सर्वलोकस्य योगादत्रैव योगगम् ।।
मध्यं पुच्छं महोनाम महनीयत्वतस्सदा ।। ११ ।।

आनन्दमयप्रकरणम्

उप.– तस्माद्वा एतस्मात् विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।।

तदप्येष श्लोको भवति । असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। १२ ।।

भा.–तस्मिन्नानन्दरूपोऽसौ स्थितो नारायणस्सदा ।
शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् ।
मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् ।।

मोदप्रमोदनामानावानन्दस्त्वाततत्वतः ।
मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्या तु बृंहयेत् ।।

पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा ।
अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः ।।

देहदेहिवदेवासौ पञ्चधाऽवस्थितो हरिः ।
वहिःस्थो देहवद्विष्णुरन्तस्थो देहिवत् स्मृतः ।।

अन्तर्व्याप्तिविशेषेण न त्वशक्तत्वतो वहिः ।
सर्वेऽपि पुरुषाकाराः उत्तरात् पूर्वसम्भवाः ।।

उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः ।
अत्तृत्वं च प्रणेतृत्वं बोधो विविधवेत्तृता ।।

आनन्दश्च यतः पूर्णस्ततोऽन्नादिमयास्स्मृताः ।
अत्त्यादिदास्ते प्रत्येकं सर्वे सर्वगुणा अपि ।।

नामभेदस्ततस्तूक्तः सर्वनामवतामपि ।
पञ्चरूपं च तद् ब्रह्म जीवादन्यन्न विद्यते ।।

इति ये तु विजानन्ति तेऽसन्तस्तमआलयाः ।
जीवादन्यत् परं ब्रह्म पञ्चरूपं च ये विदुः ।।
सन्तस्त इति विज्ञेया मोक्षयोग्या हि ते ध्रुवम् ।। १२ ।।

उप.– अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित् समश्नुता३ उ ।। १३ ।।

भा.–इत्युक्ते ब्रह्मणा पूर्वं पप्रच्छ वरुणो विभुम् ।
अविद्वानपि यः कश्चिद् ब्रह्माप्नोति कथञ्चन ।।

विद्वानेवोत तत्रापि सर्वे वाऽथैव केचन ।
यदि सर्वेऽथ तत्रापि सर्वे सम्यक् समाप्नुयुः ।।

केचिदेवोत सम्यक् तदसम्यगपरे जनाः ।
ज्ञानिनोऽपीति पृष्टः सन् ब्रह्मा प्राह चतुर्मुखः ।।

अज्ञा न प्राप्नुयुर्ब्रह्म प्राप्नुयुर्ज्ञानिनोऽखिलाः ।
तत्रापि सम्यक् प्राप्तिस्तु विरिञ्चस्यैव सर्वदा ।।

अन्येषां तारतम्येन प्राप्तिः सुखविशेषतः ।
इत्यभिप्रायवान् ब्रह्मा ह्युकारेण समासतः ।।

उक्त्वा प्रश्नोत्तरं पश्चाद्विस्तरेण जगाद ह ।
कश्चिदेवोत सम्यक् तदाप्नुयादिति वाक्यतः ।।
अनन्तरं तथैवेति ब्रह्मोङ्कारमुवाच ह ।। १३ ।।

## जगत्सृष्टिप्रक्रिया

उप.– सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानु प्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं

चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ।। १४ ।।

भा.–अज्ञो नैव तदाप्नोति ज्ञान्येवैतदवाप्नुते ।
इति ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय तु ।।

आह सृष्टिं प्रवेशं च माहात्म्यज्ञानतो यतः ।
प्रीतिं यान्ति महान्तस्तु तद्वशा एव चेश्वराः ।।

अग्न्यादयोऽपि किमुत तदन्ये मुक्तिदस्ततः ।
स एवैकस्स विज्ञेयः पूर्णैश्वर्यादिरूपवान् ।।

इति तस्य महैश्वर्यमुच्यते स त्वकामयत् ।
सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु ।।

वहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत् ।
स्यादित्यालोचनान्नान्यत् तपो विष्णोः कदाचन ।।

अवतारेष्वनुकृतिर्बाह्यवृत्या तपस्विनाम् ।
सृष्टिर्नाम स्वरूपात्तु वहिर्निष्क्रमणं स्मृतम् ।।

यद्यपीदं जगत्सर्वं स्वोदरस्थं महात्मनः ।
तथाऽप्येष द्वितीयेन रूपेण वहिराक्षिपेत् ।।

रूपान्तरेणाविशच्च जगत्सर्वं जनार्दनः ।
त्यच्चानिरुक्तं विज्ञानं तथा निलयनं महान् ।।

सत्यं प्राणस्तथा श्रीश्च सन्निरुक्तं तथाऽनृतम् ।
अविज्ञानं चानिलयनं प्रकृतिप्राणयोः परम् ।।

तद्वविष्णोस्तु सम्बन्धात् स्वतस्तन्नामको हरिः ।
ततो नियामकश्चेति त्यदानन्त्यादवाच्यतः ।।

अनिरुक्तं निलयनं सर्वाधारत्वतो हरिः ।
विज्ञानं सर्वविज्ञानात् सत्यं साधुस्वरूपतः ।।

अवसादसुवाच्यत्वदौर्बल्याज्ञस्यसाधुताः ।
प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः ।।

अतः साधुस्वरूपः सन् सत्यनामाऽनृतादिकम् ।
नामानेन गतत्वादेर्यदिदं किञ्च भाषितम् ।।

सन्निरुक्तादिशब्देन तत् सर्वं साधुतैव हि ।
अवसादनादिहेतुत्वं साधुतैव हि सर्वशः ।।
असाधुताऽवसादादिस्तत्कर्तृत्वं हि भाषितम् ।। १४ ।।

उप.– तदप्येष श्लोको भवति । असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान९ स्वयमकुरुत । तस्मात् तत् सुकृत-मुच्यत इति ।। यद्वै तत् सुकृतम् । रसो वै सः । रस९ ह्येवायं लब्ध्वाऽऽनन्दीभवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ।। १५ ।।

भा.–अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः ।
स आसाद्यश्च सन्नामा वासुदेवोऽभवत् प्रभुः ।।

स वासुदेवः स्वात्मानं चक्रे सङ्कर्षणादिकम् ।
तस्मात् तत् सुकृतं नाम स आनन्दो रसस्ततः ।।

आनन्दमेनं सम्प्राप्य मुक्तो मोदेन्न चान्यथा ।
आदीप्तस्त्वेष भगवान् यद्यानन्दो भवेन्न च ।।

सामान्यचेष्टा धर्म्याश्च कस्य स्युस्तमृते प्रभुम् ।
सुखं लब्ध्वा हि कुरुते लोकचेष्टां जनार्दनः ।।

अल्पात् सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत् ।
न ह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः ।।

तस्माद् यादृक् सुखं तादृक् कर्म पूर्णसुखत्वतः ।
सर्वकृत्त्वात् परो विष्णुराह तस्मात् सनातनी ।।

सुखं लब्ध्वा करोतीति च्छन्दोगानां श्रुतिः परा ।
अलब्ध्वा तु सुखं नैव करोतीत्यपि सादरम् ।।

तत् पूर्णानन्ददेवेन कारितः प्राणिति स्फुटम् ।
सर्वलोकः स एवैक आनन्दयति चाखिलम् ।। १५ ।।

उप.– यदा ह्येवैष एतस्मिन्नदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । भीषास्माद् वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ।। १६ ।।

भा.–तस्माददृश्ये जैवानां गुणानामप्यसङ्गतेः ।
अनात्म्येऽथ गुणानन्त्यादनिरुक्ते निराश्रयात् ।।

अनिलयनेऽभयत्वेन यदा ज्ञानेन तिष्ठति ।
तदाऽभयं हरिं गच्छेन्नैवाज्ञानी कथञ्चन ।।

यदैतस्मिन् परे विष्णावुदरं जीवगत्वतः ।
भेदं करोति तेनैव भयमस्य महद् भवेत् ।।

अ इत्युक्तः परो विष्णुरेभ्य उच्च स एव तु ।
त उदा जीवसङ्घाः स्युरुदरं तद्गतान्तरम् ।।

तदेव ब्रह्म भयकृद् विदुषोऽविदुषस्तथा ।
विदुषोऽल्पभयं कुर्याद् यावन्मुक्तिं व्रजत्यसौ ।।

अथाभयं भवेद् ब्रह्म तस्य मुक्तस्य सर्वदा ।
तस्माद् वाय्वादयो देवा विद्वांसोऽपि विशेषतः ।।

भीताः स्वकर्म कुर्वन्ति विष्णोः प्रीत्यर्थमञ्जसा ।
अमन्वानस्य नुर्विष्णुः कुर्यान्नित्यं महद्भयम् ।।

तमआख्यमनुत्थानम् ....... ....... ।। १६ ।।

मुक्तावानन्दतारतम्यनिरूपणम्

उप.– सैषानन्दस्य मीमाꣳसा भवति । युवा स्यात् साधु युवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ।। १७ ।।

भा.–........ ............. विदुषां नियमेन तु ।
स्यादेव मोक्षस्तत्रापि ह्यानन्दस्य विचित्रता ।।

यस्तु साधुगुणैर्युक्तस्तस्यैवाप्यखिला मही ।
त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संसृतेः ।।

अधीतिफलपूर्णत्वादाध्यायक इतीरितः ।
स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः ।।

एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।
तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः ।।
मुक्ताः श्रुतिफलं प्राप्तास्ततः कामाहतास्तथा ।। १७ ।।

उप.– ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ।। १८ ।।

ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य ।। १९ ।।

ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य ।। २० ।।

ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानामानन्दः ।। ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य ।। २१ ।।

ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य ।। २२ ।।

ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य ।। २३ ।।

ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य ।। २४ ।।

ते ये शतं बृहस्पतेरानन्दाः ।। स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य ।। २५ ।।

ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ।। २६ ।।

भा.–तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ।
ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव च ।।

शताधिका हि पितरस्तेभ्य आजानदेवताः ।
अनाख्याता देवतास्तु जाता देवकुले च याः ।।

आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः ।
वल्याद्या अन्तराप्राप्तदेवताः कर्मदेवताः ।।

ताभ्यश्च तात्त्विका देवाः सृष्ट्यादौ देवतां गताः ।
तेभ्यो दक्षश्चेन्द्रनामा स हीन्दुं रारयत् पुरा ।।

तस्मात् बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दरः ।
तस्मात् प्रजापतिर्मुक्तो रुद्रः प्रजननेशिता ।।

तस्माद् ब्रह्मा शतगुणो मुक्त इत्येष निर्णयः ।
यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ वलाधिके ।।

सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।
अथवा सहस्रगुणिता अनन्तगुणितास्तथा ॥

परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।
यथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत् ॥

स्फुटीभवेद् यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।
यथैव सूर्याद् द्विगुणश्चन्द्रो नैव स्फुटीभवेत् ॥

उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।
प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः ॥

अतोऽस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तराः ॥ १८-२६ ॥

उप.– स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामति ॥ २७ ॥

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति ॥ एतꣳह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳ स्पृणुते । य एवं वेद । इत्युपनिषत् ॥ २८ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

इति ब्रह्मवल्ली ॥ २ ॥

भा.–यत्प्रसादात् स्वरूपाप्तिर्ब्रह्मादीनां समन्ततः ।
स विष्णुः सर्वजीवेषु नृषु देवेषु च स्थितः ।
एक एव महायोगी निर्विशेषोऽखिलैर्गुणैः ।।

सर्वोत्तमः स पूर्णश्च तमेवं वेद यः पुमान् ।
जीवांश्च तारतम्यस्थान् स गच्छेत् पञ्चरूपिणम् ।।

विष्णुं न पुण्यपापे च तस्यानिष्टे कदाचन ।
प्रियाप्रियेषु तज्ज्ञानी ह्यास्तृणोति यतो नृषु ।।

अगोचरं वाङ्मनसोरानन्त्यात् पुरुषोत्तमम् ।
ज्ञात्वा मुक्तस्य भीर्नैव कुतश्चन भविष्यति ।।

इत्यादि यजुःसंहितायाम् ।

न च 'सह ब्रह्मणा' इत्यादेरन्योऽर्थः कल्प्यः । अप्रामाणिकत्वात् । अनाश्वासाच्च । न चौषधीभ्योऽन्नमन्नरसमय इत्यत्रोभयार्थत्वेन विरोधः । 'अन्नस्यान्नम्' 'मध्यमः प्राणः' 'प्राणः स्थूणा' इत्यादिवद् विशेषितत्वादुपपत्तेः ।

अन्नमयादीनां कोशत्वनिराकरणम्

न चान्नमयदीनामब्रह्मत्वे किञ्चिन्मानम् । 'येऽन्नं ब्रह्मोपासते' 'ये प्राणं ब्रह्मोपासते' 'आनन्दं ब्रह्मणो विद्वान्' 'विज्ञानं ब्रह्म चेद् वेद' 'अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इत्यादिना ब्रह्मशब्देनोक्तत्वाच्च । न च लौकिकान्नस्यात्तृत्वमस्ति । 'येऽन्यथा विदुस्तेऽन्यराजानस्ते क्षय्यलोका भवन्ति' इति श्रुतेरविद्यमानोपासनाद् दोषावगतेश्च । न च रमन्त्यहो असदुपासनयाऽऽत्महनः' इति च भागवते ।

नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः ।
अविद्यमानं ध्यायन्तो यान्ति सर्वेऽधरं तमः ।।

तस्मात् सत्यार्थतां ब्रूयात् वेदानामपि सर्वशः ।
य एवं वेद स ज्ञानी ज्ञानवान् नान्यथा भवेत् ।।

इति वेदार्थविवेके ।

## जीवब्रह्मणोरभेदनिरासः

'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यधिकरणत्वेन भेद एव जीवस्य परमादुक्तः । 'एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' 'एतमानन्दमयमात्मानमुपसङ्क्रामति' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'एतमानन्दमयमात्मानमुसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिना मुक्तस्यापि भेद एवाभ्यस्यते ।

## आनन्दमीमांसायाः मुक्तामुक्तविषयत्वसमर्थनम्

'अथ सोऽभयं गतो भवति' इति मुक्तिप्रस्तावात् । 'सैषानन्दस्य मीमांसा' इति मुक्तानन्दो मीमांस्यते । श्रोत्रियस्य चाकामाहतस्येति सर्वत्र विशेषणाच्च । न ह्यमुक्तस्याकामहतत्वं मुख्यं भवति । न च मुख्या श्रोत्रियता ।

यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः ।
स हि मुक्तोऽकामहतः स हि कामैर्न हन्यते ।।

यस्य कामास्तु सत्याः स्युस्सहि कामैर्न हन्यते ।
न ह्यकामः क्वचित् कश्चित् दृश्यते श्रूयतेऽपि च ।। इति ब्रह्माण्डे ।

न च देवपदाकामस्य सकाशादिन्द्रपदाकामस्य शतगुणानन्दो दृश्यते सति च प्राजापत्यादिकामे । न च मानुषाः प्रायस्तदिच्छवः । चक्रवर्तिनस्तु युवशब्देनैव मुक्तत्वमुक्तम् । तस्मान्मुक्तविषयेयं मीमांसा । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः' इत्यत्राप्यन्तः-करणस्थानामेव कामानां विमोक्ष उक्तः । न तु स्वरूपभूतानाम् । 'यं यमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव भवति' इति मुक्तानामपि स्वरूपभूतः कामः प्रतीयते ।

> कामाः सङ्कल्प आनन्दो मुक्तानां तारतम्यतः ।
> स्वरूपभूतास्ते सर्वे निर्दोषा गुणरूपकाः ।। इति पाद्मे ।

'सङ्कल्पादेव च तच्छ्रुतेः' इति सूत्रम् ।

### जीवब्रह्मभेदस्य प्रमाणप्रमितत्वनिरूपणम्

'भेदव्यपदेशात्' इति जीवेशयोर्भेदश्चोक्तो भगवता । न च भेददर्शनमसुकरम् । स्वरूपत्वात् भेदस्य । सर्वव्यावृत्तं हि सर्वस्य स्वरूपं सर्वैरनुभूयते । अन्यथाऽहं वा दृष्टोऽन्यो वा दृष्ट इत्यपि संशयः स्यात् । न च पश्चात् भेदो ज्ञायत इत्यत्र किञ्चिन्मानम् । न हि दृष्टवस्तुनः पुरुषस्य तस्य वस्त्वन्तराद् भेदे संशयः क्वचिद् दृष्टः । न च सर्वतो व्यावृत्यनुभवे सर्वज्ञताऽपेक्षितेति दोषः । सामान्यतः सर्वस्य सर्वैरपि ज्ञातत्वात् । यावत्तु सर्वतो भेदो विशेषतो न ज्ञायते तावत् स्वरूपमेव विशेषतो न ज्ञातम् । न हि ज्ञाताद्वस्तुनोऽव्यावृत्तिः केनचित् शङ्क्यते । यदा तु संशीयते तदापि कुतश्चिद् व्यावृत्तमेव ज्ञायते । न हि सर्वमिदं भवति वा न वेति कस्यचित् संशयः । अतो व्यावृत्तिरेव स्वरूपम् । अस्य भेद इति विशेष्यत्वमस्य स्वरूपमितिवत् । यथाऽ-स्तीति वर्तमानः कालो वस्तुना सहैवानुभूयते एवमन्यस्मात् व्यावृत्त-

मित्यत्रान्यदपि सामान्यतः सहैवानुभूयते । न ह्यस्तीति वर्तमानकाला-पेक्षयानुभूयत इत्येतावता विद्यमानता नाम वस्तुनोऽन्या । सदित्यपि शत्रन्तत्वात् कालसम्बन्ध्येवाऽनुभूयते तिष्ठन्नितिवत् । एवमन्यस्मात् व्यावृत्तमित्यन्येन सह प्रतीयमानमपि न स्वरूपादन्यत् । अस्माद् व्यावृत्तिरन्यस्य स्वरूपमन्यस्माद् व्यावृत्तिरस्य स्वरूपमिति नैक-स्वरूपता । ज्ञानानन्दादिवत् स्वरूपत्वेऽपि व्यवहारविशेषो भवति । न च स्वरूपत्वेन भेदस्याभावो भवति । ज्ञानानन्दादिवदेव । अन्य-प्रतियोगिकत्वाद् भेदस्य न स्वस्मादपि भवति ।

भेदस्य धर्मिस्वरूपत्वसमर्थनम्

भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम् ।
नष्टानामपि वस्तूनां भेदो नैव विनश्यति ।।

अवस्तुनोऽपि रूपं स्वं भेद एव न चान्यथा ।
विशेषरूपनाशेन भेदमात्रावसायिता ।।

नाश इत्युच्यते सद्भिर्भेदो न हि विनश्यति ।
इत्याहुः केचिदज्ञानात् तत्राहुः सूक्ष्मदर्शिनः ।।

सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः ।
तस्माद् वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचित् ।।

अविनष्टस्य तस्मात्तु भेदोऽस्त्येव स्वरूपतः ।
एवंभावादभावस्य न भेदो भावरूपवान् ।।

अभावाद् भावरूपस्य स्वरूपं भाव इष्यते ।
नष्टभेदोऽप्यभावात्मा विद्यते च विनाशतः ।।

स्वरूपत्वात्तु भेदस्य भेदे शङ्का न कस्यचित् ।
सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते ॥

तस्माद् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते ।
प्रतियोगिता त्वभावस्याप्यस्त्यभावतया स्फुटम् ॥

न ह्यभावोऽप्यधर्मा स्यान्न तु स्याद् भावधर्मयुक् ।
अभावस्यास्तिता नाम स्यादेवाभावरूपिणी ॥

अभावतापि सैव स्यान्न तु स्याद् भावरूपिणी ।
अतः स सर्वव्यावृत्तस्वरूपो भगवान् परः ॥
येन ज्ञातः स तु ज्ञानी मुच्यते नात्र संशयः ॥
इति तत्त्वनिर्णये ॥

॥ इति द्वितीया ब्रह्मवल्ली समाप्ता ॥ २ ॥

## अथ भृगुवल्ली

भगवतः त्यागो न कार्यः

उप.– ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ॥ १ ॥

स तपोऽतप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।। २ ।।

स तपोऽतप्यत । स तपस्तप्त्वा । प्राणं ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।। ३ ।।

स तपोऽतप्यत । स तपस्तप्त्वा । मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।। ४ ।।

स तपोऽतप्यत । स तपस्तप्त्वा । विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।। ५ ।।

स तपोऽतप्यत । स तपस्तप्त्वा । आनन्दो ब्रह्मेति व्यजानात् ।

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।। ६ ।।

सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ७ ।।

अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवान-न्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ८ ।।

भा.–चक्षुः स चष्टे यद् विष्णुः श्रोत्रं श्रोतृत्वतो विभुः ।
वाक् च वक्तृत्वतो नित्यं मनो मन्तृत्वतस्तथा ।।

तपो ज्ञानस्वरूपत्वाद् विज्ञानं तु विवेचनात् ।
ज्ञानानुसन्धानरूपतपसा तं जनार्दनम् ।।

क्रमाद् भृगुर्व्यजानात् तमन्नादिबहुरूपिणम् ।
एवं विजानंस्तं विष्णुं तस्मिंस्तु प्रतितिष्ठति ।।

मुक्तो भूत्वाऽन्नवांश्च स्यादन्नादश्च सदैव तु ।
अन्ननामा तु भगवान् विद्वांस्तमुपजीवति ।।
तद्वांश्च तेन गुप्तत्वाद् ..... ...... ।। १-८ ।।

उप.– अन्नं न परिचक्षीत । तद् व्रतम् । आपो वा अन्नम् ।

ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ९ ।।

अन्नं बहु कुर्वीत । तद् व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। १० ।।

न कं चन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोन्न९ राद्धम् । मुखतोऽस्मा अन्न९ राध्यते । एतद्वै मध्यतोऽन्न९ राद्धम् । मध्यतोऽस्मा अन्न९ राध्यते । एतद्वा अन्ततोन्न९ राद्धम् । अन्ततोऽस्मा अन्न९ राध्यते । य एवं वेद ।। ११ ।।

भा.–...... ...... विद्यार्थे वसतीच्छया ।
आगतं नेति न ब्रूयात् तदेतद् विदुषो व्रतम् ।।

स विष्णुः पृथिवीनामा पृथुत्वात् प्राणनामकः ।
प्रकृष्टानन्दवलत आकाशः सर्ववेत्तृतः ।।

शराख्यदेहिनश्चैव शरीरं प्रेरणात् स्मृतः ।
एतैश्चतुर्भिर्भगवान् रूपैश्च चतुरात्मभिः ।।

भोग्यभोक्तृस्वरूपेण तिष्ठति क्रीडया स्वयम् ।
न च भोग्यत्वमात्रेण हीनत्वं तस्य कुत्रचित् ।।

न हि भार्योपभोग्यस्तु भर्ता हीनत्वमाप्नुयात् ।
एवं स भगवान् विष्णुरविशेषोऽखिलेष्वपि ।।

रूपेषु क्रीडते नित्यं भोक्ता भोग्य इतीच्छया ।
अन्नाख्यं तं नैव निन्द्यात् बहु मन्येत तं सदा ।।

इति व्रतद्वयं ह्येतद् भाव्यं यदि सुखे स्पृहा ।
येन केनापि विधिना बह्वित्येव जनार्दनम् ।।

मत्वैव प्राप्नुयान्नित्यं मनोवाक्कायवृत्तिभिः ।
य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् ।।

सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः ।
यस्य तद् ब्रह्म संसिद्धं पूर्वं तेनाप्यतेऽग्रतः ।।

मध्ये वयसि चेत् सिद्धं मुक्तो मध्यं प्रपश्यति ।
वार्धके चेद् विजानाति मुक्तः पादौ प्रपश्यति ।।

तेजोमण्डलमेवान्यत् अङ्गं विष्णोः प्रपश्यति ।
पूर्वे वयसि बोद्धव्यमामुखात् सर्वदृष्टये ।। ११ ।।

उप.– क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे ।। १२ ।।

भा.–क्षेमकृत्वात् क्षेमनामा वाचिस्थः स परो हरिः ।
योगनामा तथा प्राणे सर्वकामनियोजनात् ।।

क्षेमनामा क्षेमकृत्त्वादपानेऽपि हरिः स्वयम् ।
कर्मनामा हस्तगतः कर्मकृत्त्वाज्जनार्दनः ।।

गतिदत्वात् गतिर्नाम पादस्थः पुरुषोत्तमः ।
विसर्गकृद् विमुक्त्याख्यः पायुस्थः परमो विभुः ।।

अध्यात्मस्थ इति प्रोक्तोऽथाधिदैवगतं शृणु ।
पर्जन्ये तृप्तिनामासौ तृप्तिदत्वाज्जनार्दनः ।।

वायौ तु बलनामा च बलदत्वात् सदैव हि ।
यशःप्रदत्वात् दक्षे तु यशः पश्वभिमानिनि ।।

नक्षत्रेषु ज्योतिराख्यो ज्योतिर्दातृत्वतो हरिः ।
उपस्थमानिनि शिवे प्रजात्यानन्दसन्ततेः ।।

दातृत्वात् तत्तदाख्योऽसौ सन्ततिस्त्वमृतं स्मृतम् ।
सर्वः सर्वप्रदत्वात् तु प्रकृतौ पुरुषोत्तमः ।। १२ ।।

उप.– तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः ।। १३ ।।

भा.–स प्रतिष्ठा स्थापकत्वात् मनो मान्यत्वतो हरिः ।

नमो नम्यत्वतो नित्यं महश्चापि महत्त्वतः ।।
विरिञ्चमारकश्चासौ ब्रह्म पूर्णगुणत्वतः ।। १३ ।।

उप.– स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नादः । अहऽ३श्लोककृदहऽ३श्लोककृदहऽ३श्लोककृत् ।। १४ ।।

अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ।। १५ ।।

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।।

।। इति तृतीया भृगुवल्ली समाप्ता ।। ३ ।।

।। इति तैत्तिरीयोपनिषत् समाप्ता ।।

भा.–वेदैनं तत्त्वतो ब्रह्मा स एनं पञ्चरूपिणम् ।।
प्राप्य गायति मुक्तः सन्नन्ननामाऽस्मि भोग्यतः ।
यथेष्टमन्नभोक्ता च कीर्तिकर्ता हरेस्तथा ।।

ऋतरूपस्य विष्णोस्तु पुत्रः प्रथमजो ह्यहम् ।
देवेभ्यः पूर्वजश्चाहं मुक्तानामाश्रयः सदा ।।

यो ददाति च मां सम्यग् विष्णुतत्त्वप्रकाशकः ।
स इत्थमेव मां याति विष्णोरन्नमहं सदा ।।

ममान्नं सर्वजीवास्तु भोग्या मम यतः सदा ।
सर्वमभ्यभवं चाहं गुणैः सर्वैश्च नित्यकैः ।।

सुवर्णो भगवान् विष्णुर्ज्योतिः स मम (रे)रोचकः ।
योऽहमेवंविदभवं तस्य मे माधवः पतिः ।।
इति ब्रह्मा गायमानो मुक्तश्चरति सर्वदा ।।

इति यजुःसंहितायाम् ।।

अन्नं भगवन्तं न परिचक्षीत । न निराकुर्यात् । तद्गुणांस्तत्कर्माणि वा कुत्रापि बहु कुर्वीत । बहुगुणत्वेन प्रतिपादयेत् भगवन्तम् । यया कया च विधया बह्वन्नं प्राप्नुयात् । अतिप्रयत्नेनापि विहितप्रकारेण वहुतरां भगवद्धियां प्राप्नुयात् । 'प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभिसम्बभूव' । 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव' इत्यादिना विरिञ्चस्यैवैतद् गानम् । अन्यो न परि बभूवेति निषेधात् ।

वियुद्वन्मानुषा विद्युः सूर्यमण्डलवत् सुराः ।
प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ।।

ब्रह्मा हि स्थिरचिद्रूपो बहुलात्मा विशेषतः ।
अन्ये क्रमादबहुलास्तथा चञ्चलचेतसः ।।

तस्मात् सम्यङ् न पश्यन्ति हरिं ब्रह्मा तु पश्यति ।।

इति हरिवंशवचनाच्च ब्रह्मैवैनं सम्यग् वेद ।

यस्योच्चोथ समो वा कश्चिन्नैवास्त्यनन्तसच्छक्तेः ।
तं वन्दे परमेशं प्रेयांसं प्रेयसश्च मे विष्णुम् ।।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ।।

हनुशब्दो ज्ञानवाची हनूमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।।

भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्याः इतिहासश्च पुराणं पञ्चरात्रकम् ।।

प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।।

मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः ।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ।। इति च ।

साधको रामवाक्यानां तत्समीपगतः सदा ।
हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।।

पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ।।

दशेति पूर्णमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।।

आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ।।

वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।
येन विष्णोस्तु वर्पाख्यान् गुणानज्ञासिषुः परान् ।।

ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः ।
त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।।

एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयम्भुब्रह्मसञ्ज्ञोऽसौ परस्मै ब्रह्मणे नमः ।। इति च ।

पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
तैत्तिरीयोपनिषद्भाष्यम् ।।

# अथ ऐतरेयोपनिषत्

## ऐतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके प्रथमाध्यायः

उप.– एष पन्था एतत्कर्म एतद्ब्रह्मैतत्सत्यम् । तस्मान्न प्रमाद्येत्तन्नातीयान्न ह्यत्यायन् पूर्वे येऽत्यायंस्ते परा बभूवुः ।

# अथ ऐतरेयोपनिषद्भाष्यम्

मङ्गलाचरणम्

भा.– नारायणं निखिलपूर्णगुणैकदेहं
सर्वज्ञमच्युतमपेतसमस्तदोषम् ।
प्राणस्य सर्वचिदचित्परमेश्वरस्य
साक्षादधीश्वरमियां शरणं रमेशम् ।।

प्रादुबर्भूव भगवांस्तपसेतराया
नारायणोऽब्जजसुतस्य विशालनाम्नः ।
तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो
निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ।।

तेन स्तुतः स भगवान् गिरिशेन्द्रमुख्यान्
सर्वानबोधयदजेन सहैव तेऽथ ।
दासत्वमापुरत एव महत्सुराणां
दासत्वतः स महिदास इति प्रसिद्धः ।।

शृण्वत्सु तेषु भगवानवदद्रमायै
दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।

सा बह्वृचैः प्रपठिता चतुराननास्या-
यस्यां रहस्यमुदितं परमं हि विष्णोः ।।

महाभूतिः श्रुतिः सैषा महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः ।।

इति ऋक्संहितायाम् ।

एष एव सदा पन्था भगवान् पुरुषोत्तमः ।
नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ।।

ब्रह्मैव गुणपूर्णत्वात् सत्यं साधुस्वरूपतः ।
क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत् ।।

पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः ।
मुक्ता श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका ।।

ऋषिवाणीसंवादः

उप.– तदुक्तमृषिणा प्रजा ह तिस्रो अत्यायमीयुर्न्य१न्या अर्क-मभितो विविश्रे । बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति । प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः । न्य १ न्या अर्कमभितो विविश्र इति । ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव वृहद्भुवनेष्वन्तरसावादित्यः पवमानो हरित आ विविशेति । वायुरेव पवमानो दिशो हरित आविष्टः ।। प्रथमः खण्डः ।।

तमोयोग्यानां त्रैविध्यकथनम्

भा.– विहायस्ययनात् प्रोक्ता वयांसीति पिशाचकाः ।
वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा ।।

अन्नरूपैर्गृध्नवो हि वङ्गावगधनामकाः ।
राक्षसा असुरा ईरपादा इति समीरिताः ।।

धर्मो ज्ञानं च वैराग्यमैश्वर्यं चतुरात्मकः ।
वायुर्देवोऽत्रासुराणामैश्वर्यं गुण एव हि ।।

ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् ।
पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ।।

मुक्तियोग्यानां त्रैविध्यकथनम्

देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः ।
आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ।।

अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ।
आजनैरर्चितत्वात् स ह्यर्क इत्युच्यते हरिः ।।

अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः ।
कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ।।

आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ।
तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ।।

आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ।
मुच्यन्ते ऋषयो नित्यं नान्यथा तु कथञ्चन ।।

सा बह्वृचैः प्रपठिता चतुराननास्या-
यस्यां रहस्यमुदितं परमं हि विष्णोः ॥

महाभूतिः श्रुतिः सैषा महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः ॥

इति ऋक्संहितायाम् ।

एष एव सदा पन्था भगवान् पुरुषोत्तमः ।
नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ॥

ब्रह्मैव गुणपूर्णत्वात् सत्यं साधुस्वरूपतः ।
क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत् ॥

पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः ।
मुक्ता श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका ॥

ऋषिवाणीसंवादः

उप.– तदुक्तमृषिणा प्रजा ह तिस्रो अत्यायमीयुर्न्य१न्या अर्कमभितो विविश्रे । बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति । प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः । न्य १ न्या अर्कमभितो विविश्र इति । ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद्भुवनेष्वन्तरसावादित्यः पवमानो हरित आ विविशेति । वायुरेव पवमानो दिशो हरित आविष्टः ॥ प्रथमः खण्डः ॥

### तमोयोग्यानां त्रैविध्यकथनम्

भा.– विहायस्ययनात् प्रोक्ता वयांसीति पिशाचकाः ।
वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा ।।

अन्नरूपैर्गृध्नवो हि वङ्गावगधनामकाः ।
राक्षसा असुरा ईरपादा इति समीरिताः ।।

धर्मो ज्ञानं च वैराग्यमैश्वर्यं चतुरात्मकः ।
वायुर्देवोऽत्रासुराणामैश्वर्यं गुण एव हि ।।

ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् ।
पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ।।

### मुक्तियोग्यानां त्रैविध्यकथनम्

देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः ।
आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ।।

अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ।
आजनैरर्चितत्वात् स ह्यर्क इत्युच्यते हरिः ।।

अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः ।
कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ।।

आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ।
तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ।।

आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ।
मुच्यन्ते ऋषयो नित्यं नान्यथा तु कथञ्चन ।।

वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम् ।
संसारात् पावयित्वा यन्महानन्दे मिनोत्ययम् ।।

पवमानस्ततो विष्णुर्व्याप्तः सर्वासु दिक्षु च ।
आश्रितो भगवान् सर्वैः सर्वत्रापि विशेषतः ।।
आश्रयात् पृथगुक्तोऽयं नित्यानन्दो रमापतिः ।। १ ।।

अधिदेवाध्यात्मस्थितभगवद्रूपत्रयनिरूपणम्

उप.– उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी इतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावयन्ति । तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते ।

असावेव द्यौरुक्थममुतःप्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । इत्यधिदैवतम् ।

अथाध्यात्मम् । पुरुष एवोक्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात् । तस्य मुखमेवोक्थं यथा पृथिवी तथा । तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । नासिके एवोक्थं यथाऽन्तरिक्षं तथा । तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । तदेतद् व्रध्नस्य विष्टपं यदेतन्नासिकाग्रे विनतमिव । ललाटमेवोक्थं यथा द्यौस्तथा । तस्य चक्षुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । समानमशीतयोऽध्यात्मं चैवाधिदैवतं चान्नमेव ।

अन्नेन हीमानि सर्वाणि भूतानि समनन्ती९३ । अन्नेनेमं लोकं जयत्यन्नेनामुम् । तस्मात् समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव । तदिदमन्नमन्नादमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । यद्ध किञ्चेदं प्रेता३ इ तदसौ सर्वमत्ति । यदु किञ्चातः प्रैती३ तदियं सर्वमत्ति । सेयमित्याद्याऽत्री । अत्ता ह वा आद्यो भवति । न तस्येशे यं नाद्याद्यद्वैनं नाद्युः ।। २ ।।

किं नाम उक्थम्?

भा.– उत्थापनादुक्थनामा स एव पृथिवीस्थितः ।
प्रथितः पृथिवीनामा सोऽन्तरिक्षाभिधोऽत्रगः ।।

अन्तरीक्ष्यो यतो द्युस्थो द्युनामाऽतिप्रकाशनात् ।
अध्यात्मे च निविष्टोऽसौ पुरुषाख्यो जनार्दनः ।।

पूर्षु स्थितत्वात् स महान् प्रजानां पतिरेव च ।
अहमुक्थमिति ह्येतां विद्यामनुभवत्यसौ ।।

पृथक्पृथक्च तस्याङ्गान्युक्थानि जगदीशितुः ।
अग्निवातदिनेशानामुत्थानानि पृथक् पृथक् ।।
वदनं नासिका नेत्रमित्येतानि परात्मनः ।

शस्त्रमन्त्राणामिव अन्नस्यापि तृप्तिप्रदत्वं

तृचाऽशीतिविभिन्नस्य शस्त्रस्यान्नत्वहेतुतः ।।

विष्णोस्तृचाशीतिवत् स्यात् प्रसिद्धान्नमिति स्फुटम् ।
अन्नाभिमानिदेवश्च तृचाशीत्याश्च देवता ।।

सोम एव ततश्चान्नमशीतय इतीरितम् ।
अदनाऽऽघ्राणदृष्ट्याख्यभोगत्रयविभागतः ।।
मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् ।

अर्कशब्दार्थनिरूपणम्

अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः ।।

श्येन एव तदाकारा चितिरर्कपदोदिता ।
सुपर्णप्रतिमा सा यत्तदारूढो जनार्दनः ।।

तस्मात् तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः ।
योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि ।।

तथा वाक्प्राणचक्षुष्षु तस्मात् तेऽर्काः प्रकीर्तिताः ।
तेषु स्थिते सुपर्णे च रूपभेदैः पृथक् पृथक् ।।
स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः ।

अध्यात्मे उक्थनिरूपणम्

व्याप्तत्वाज्जीवदेहेषु मुखे विष्णोर्मुखं स्मृतम् ।।

नासयोर्नासिका विष्णोरक्ष्णोरेव तदक्षिणी ।
जीववाक्प्राणचक्षुष्षु तद्वागाद्यास्ततः स्थिताः ।।

विष्णोर्वाग्भार्गवो रामो प्राणोऽस्य नरकेसरी ।
चक्षुस्तु कपिलो विष्णुरग्न्यादीनां च कारणम् ।।

जीववागादिसंस्थं च सुपर्णमधिसंस्थिताः ।
अविशेषोऽपि भगवान् पूर्णैश्वर्यस्वरूपतः ।।

अङ्गाङ्गित्वेनैक एव स्वानन्दानुभवे स्थितः ।
स एव व्यूह्य चात्मानं पृथग्रूप इव स्थितः ।।

सुपर्णनामा भगवान् सुपर्णे च व्यवस्थितः ।
अग्न्यादिषु च तन्नामा वासुदेवः स संस्थितः ।।

अन्ननामा स एवान्ने चेष्टयन् सर्वमास्थितः ।
अन्ने स्थितः स एवेशो ह्यन्नदातृगतिप्रदः ।।

भगवतोऽत्तृत्वाद्यत्वनिरूपणम्

तस्यान्तरिक्षगस्यैव नियमादनुपक्षिणः ।
पतन्ति धावयन्त्यश्वान् नरार्दीश्च नरादयः ।।

परस्य विष्णोर्धामत्वात् सूर्यो ब्रध्न इतीरितः ।
निहितश्चैव तल्लोको नासिकायां नतस्थले ।।

पृथिव्यां संस्थितो विष्णुः स्त्रीरूपेण द्युलोकतः ।
पतितं सर्वमेवात्ति तथा दिवि च संस्थितः ।।

इतो गतं सर्वमत्ति द्युनामा भगवान् परः ।
भोग्यत्वादाद्य इत्युक्तः एवमाद्यात्तृरूपवान् ।।

एक एव परो विष्णुरत्ताऽन्यैरुपजीव्यतः ।
आद्यो भवति चान्येषां नोपजीव्यो भवेद्यथा ।।

हरिः स सर्वजीवानां न भुज्यन्ते यथाऽमुना ।
सर्वे लोकास्तथा कर्तुं नैवेष्टे कश्चन क्वचित् ।। २ ।।

भगवतः सृष्टिकर्तृत्वनिरूपणम्

उप.– अथातो रेतसः सृष्टिः । प्रजापते रेतो देवाः । देवानां रेतो वर्षम् । वर्षस्य रेत ओषधयः । ओषधीनां रेतोऽन्नं अन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाक् वाचो रेतः कर्म । तदिदं कर्म कृतम् । अयं पुरुषो ब्रह्मणो लोकः । स इरामयो यद्धीरामयस्तस्मात् हिरण्मयः । हिरण्मयो ह वा अमुष्मिँल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ।। ३ ।।

भा.– स एष भगवान् विष्णुः प्रजापतिरितीरितः ।
तस्माज्जाताः सर्वदेवा ब्रह्माद्यास्तेभ्य एव च ।।

वृष्टिः सञ्जायते तस्याः सर्वा ओषधयोऽभवन् ।
ओषधीभ्योऽन्नमन्नाच्च रेतो रेतस एव च ।।

सर्वाः प्रजाः प्रजायन्ते सङ्कल्पो हृदयाभिधः ।
प्रजाभ्यो जायते तस्माद् विकल्पाख्यं मनस्तथा ।।

विकल्पाद्वाक्प्रचारश्च वाचा नामादिवेदनात् ।
कर्म सञ्जायते तस्मात् कर्मणश्च जगत्पुनः ।।

कर्माभिमान्ययं जीवः परस्य ब्रह्मणो हरेः ।
आवासस्थानमुद्दिष्टो विशेषात् स इरामयः ।।

इच्छानुरूपं तु सुखमिरेत्येव प्रकीर्तितम् ।
इच्छानन्दप्रभूतत्वात् स एव च हिरण्मयः ।।

हिरुक्सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग्यतः ।
आधिक्यार्थे मयड् यस्मादधिकानन्दरूपकः ।।

उत्सृज्य कर्मजं रूपं निजानन्दैकरूपकः ।
एवं नारायणं जानन् सर्वलोकैककारणम् ।।
तल्लोके दृश्यते भूतैर्मुक्तैरानन्दरूपकः ।। ३ ।।

प्रपदोरूदरेत्यादिशब्दानां इतिहासकथनम्

उप.– तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम् । यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते । शफाः खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत् । ता ऊरू अभवताम् । उरु गृणीहीत्यब्रवीत् । तदुदरमभवत् । उर्वेव मे कुर्वित्यब्रवीत् । तदुरोऽभवत् । उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता ३ ई । ऊर्ध्वं त्वेवोदसर्पत् । तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत् । तच्छिरसः शिरस्त्वम् । ता एताः शीर्षच्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः । श्रयन्तेऽस्मिंच्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद ।

भा.– तमिमं प्रथमज्ञानिपुरुषं चतुराननम् ।
वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ।।

यस्मात् प्रपेदे भगवान् प्रपदाच्चतुराननम् ।
तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ।।

चतुर्मुखाकारवतां नृणां पादतलोपरि ।
प्रपदाख्या वर्ततेऽतो न तु पश्वादिनां क्वचित् ।।

अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च ।
स्थित ऊरू च तावास्तामूरूर्ध्वगमनाद्धरेः ।।

किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः ।
वायुमाहोरुगरणं कुर्वत्र स्थित इत्यपि ।।

उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा ।
तत्स्थानमुदरं नाम पुनराह जनार्दनः ।।

उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् ।
तथाऽकरोत् स वायुश्च तदुरोऽभूदुरुत्वतः ।।

उरोमध्ये च हृदयं तत्रावासो हरेः सदा ।
सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः ।।

उदरे ते परं ब्रह्म वासुदेवमुपासते ।
हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ।।

उदरस्थं च हृद्रं च ते उभे ब्रह्म तत्परम् ।
एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ।।

तत ऊर्ध्वं गतो विष्णुर्वायुना सह दैवतैः ।
स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः ।।

तत्र प्राणात्मना वायुर्मनोरूपेण शङ्करः ।
शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक् पृथक् ।।

अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रकम् ।
वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः ।।

श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।
एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः ।।
उपासते महाविष्णुं परमात्मानमच्युतम् ।

अहमुक्थमहमुक्थमिति देवानां विवादः

उप.– ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन् । हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन् न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति ।। वागुदक्रामदवदन् अश्नन् पिबन्नास्तैव । चक्षुरुदक्रामदपश्यन्नश्नन् पिबन्नास्तैव । श्रोत्रमुदक्रामत् अशृण्वन् अश्नन् पिबन्नास्तैव । मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्तैव । प्राण उदक्रामत् प्राण उत्क्रान्तेऽपद्यत तदशीर्यताशारीतीं३ । तच्छरीरमभवत् । तच्छरीरस्य शरीरत्वम् । शीर्यते ह वा अस्य द्विषन् पाप्मा भ्रातृव्यः पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ।

भा.– वाचा हिंसामकुर्वंस्ते विनिन्दन्तः परस्परम् ।।
ते विष्णोराज्ञयाऽवोचन्नुत्क्रमाम पृथक् पृथक् ।
देहादब्जभवस्यास्माद्यस्मिन्नुत्क्रान्त एव हि ।।

शरीरं पद्यते श्रेयान् स न इत्यवधार्यताम् ।
ततः क्रमेण चाग्र्याद्या निष्क्रान्तास्तेषु सर्वशः ।
निष्क्रान्तेषु न वै पातः शरीरस्याभवत् क्वचित् ।।

वायावुत्क्रान्त एवैतच्छरीरमपतत् क्षितौ ।
उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः ।।
तेषां बलपरीक्षार्थं वाय्वादीनां च सर्वशः ।

द्वितीयवारं देवानां स्पर्धा – प्राणस्य देवोत्तमत्वम्

उप.– ता अहिंसन्तैवाहमुक्थमस्महमुक्थमस्मीति । ता अब्रुवन् हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति । वाक्प्राविशदशयदेव । चक्षुः प्राविशदशयदेव । श्रोत्रं प्राविशदशयदेव । मनः प्राविशदशयदेव ।। प्राणः प्राविशत् । तत्प्राणे प्रपन्न उदतिष्ठत् । तदुक्थमभवत् । तदेतदुक्थं प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति । तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति ।। ४ ।।

भा.– पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः ।।

नोत्थानमभवत् तेषु प्रविष्टेष्वपि सर्वशः ।
वायौ प्रविष्टे तूत्थानं कायस्यासीत् तदैव च ।।

उच्चैः स्थितत्वादुक्थोऽभूद् वायुरेव ततः प्रभुः ।
उच्चत्वं च गुणाधिक्यं त्वमुच्चोऽसीति तेऽब्रुवन् ।।

भृत्या वयं तवैव स्मः त्वमस्माकं पतिः सदा ।
स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् ।।

इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् ।
वायुः स संस्तुतस्तैश्च प्रसन्नोभूद् दिवौकसाम् ।। ४ ।।

प्रातःसायंशब्दयोरितिहासनिरूपणम्

उप.– तं देवाः प्राणयन्त । स प्रणीतः प्रातायत । प्रातायीती३

तत्प्रातरभवत् । समागादिती३ तत्सायमभवत् । अहरेव प्राणो रात्रिरपानः ।

भा.– तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम् ।।

वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः ।
ये ये गुणान् विजानन्ति वायोस्तानाविशन् मरुत् ।।

तत्र तत्र प्रविष्टत्वात् प्रततोऽसौ बभूव ह ।
प्रततत्वात् प्रातरिति तस्य नामाऽभवद्विभोः ।।

सङ्गतश्चाभवज्जीवचिता रूपान्तरेण सः ।
सङ्गतत्वात् सायमिति तद्रूपं नामतोऽभवत् ।।
वायोस्तत्पुनरध्यात्मं प्राणापानाभिधं द्वयम् ।

इन्द्रियाभिमानिनां निरूपणम्

उप.– वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत् तदुक्तं भवति ।

भा.– अध्यात्ममग्निर्वागाख्यश्चक्षुः सूर्यः प्रकीर्तितः ।।

यज्ञादिसाधने यत्तु मनश्चन्द्रः प्रकीर्तितः ।
मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः ।।

श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम् ।
श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम् ।।

यम एव षडङ्गानां विषयश्रवणोचितम् ।
श्रोत्रं तु वरुणः काम्यशास्त्रार्थं मित्र एव च ।।

श्रोत्रं यन्नीतिशास्त्रार्थं कुबेरश्च प्रकीर्तितः ।
विष्णुना प्रहितानां हि संयोगोऽध्यात्ममेष हि ।।

शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरा ।
एतास्सर्वा देवता हि ब्रह्मवायुसुपर्णकाः ।।

शेषशङ्करशक्राश्च चन्द्रसूर्ययमा अपि ।
अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः ।।

अधिदैवं स एवैक आधिक्यात् पुरुषोत्तमः ।
देवमात्रास्तदन्ये तु स आविः पुरुषोत्तमः ।।

पूर्णज्ञानस्वरूपत्वादेतावत् कथितं भवेत् ।
तात्पर्यात् सर्ववेदैश्च ..................

ज्ञानिनां निश्चितो मोक्षः

उप.– एतद्धस्म वै तद्विद्वानाह हिरण्यदन् वैदो न तस्येशेऽयं मह्यं न दद्युरिति ।। प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध । तदनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद ।।

भा.– .................... तज्ज्ञानन्नवदन् मुनिः ।।

हिरण्यदन्नाम वैदो भूतेषु हि सुरानृते ।
मदभीष्टं ममादातुं नैवेष्टे कश्चनाञ्जसा ।।

विष्णुना प्रहितानां हि देवानामहमुत्तमम् ।
वेद संयोगमाध्यात्मं ततो मुक्तो यथेष्टभुक् ।।

स्यान्नैवात्रास्ति सन्देहः स्वेच्छाविहृतिरेव च ।
मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा ।।

अधिदैवेन सहिता विष्णुना प्रभविष्णुना ।
एतद्धि तेन कथितं मुनिना तत्त्ववेदिना ।।

विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा ।
वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् ।।

एतादृशोपासनाया योग्यः सन् सततं सुधीः ।
स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि ।।

मुक्तस्य वैष्णवे लोके मुक्तानि च न संशयः ।
इत्येतद्ध्यानयोगाश्च मुनयो देवतास्तथा ।।

मानुषा ज्ञानमात्रेण स्वावरैः पूज्यतामियुः ।
मुक्तामुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः ।।

सत्यशब्दनिर्वचनम्

उप.– तत्सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत् त्रिवृत् । त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति । स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत् सत्यस्य सत्यत्वं वेद ।। ५ ।।

भा.– स एष भगवान् विष्णुः सत्यमित्यभिधीयते ।
सर्वोत्तमत्वात् पूर्णत्वात् सर्वज्ञत्वात् तथैव च ।।

देवतात्रयमन्यच्च पृथक् सत्यमितीर्यते ।
शेषवीन्द्रशिवादिभ्य उत्तमत्वात् सदैव हि ।।

वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः ।
तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् ।।

अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत ।
अतिनादात् सदा वेदैरप्यन्नं स चतुर्मुखः ।।

यमित्यादित्य उद्दिष्टो यमयेद् यत्प्रकाशनात् ।
देवतात्त्रयमेतत्तु सहितं सत्यमुच्यते ।।

शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः ।
एवं सत्यपदार्थं हि विज्ञायोपास्त आदरात् ।।

योग्यस्तस्या उपासाया नैवासत्येन दुष्यति ।
देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् ।।
मनुष्याणां ज्ञानमात्राद्दोषो नातितरां भवेत् ।। ५ ।।

श्रुतिस्मृती हरेराज्ञे

उप.– तस्य वाक् तन्तिर्नामानि दामानि । तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् । सर्वं हीदं नामानी ३ । सर्वं वाचाऽभिवदति । वहन्ति ह वा एनं तन्तिसम्बद्धा य एवं वेद ।

भा.– तस्य नारायणस्यैव सर्ववेदात्मिका हि वाक् ।
तन्तिरूपा जगद्बन्धे नाम ब्रह्मादिकं च यत् ।।

विप्रक्षत्रियवैश्यादिरूपं चाखिलमेव तु ।
दाम तेनैव बध्नाति सकलं जगदच्युतः ।।

सर्वे हि नामवन्तोऽत्र सर्वे वेदोदिता अपि ।
वेदात्मिक्या यतो वाचा विष्णुर्वदति सोऽखिलम् ।।

य एतद्विष्णुवाचैव बद्धं नामाख्यदामभिः ।
ज्ञात्वा जगदुपास्ते तु योग्यः संस्तदुपासने ।।

तं प्रत्येवाखिलान्येव भूतानि सह दैवतैः ।
बलिं हरन्ति पश्चाथ भूतान्येनं वहन्ति च ।।

योग्यश्चास्या उपासाया योग्यो ब्रह्मपदस्य यः ।
भूतयुक्ते रथे तस्मात् स तिष्ठति सुरार्चितः ।।

मुक्तः संश्च तदन्येषां ज्ञानमात्राद्विमुक्तिगैः ।
स्वावरैः सेव्यतैव स्यात् कैश्चिदेव कचित् कचित् ।।

तथैव वायुना बद्धं जगदेतत् ततोऽवरम् ।
सुपर्णशेषगिरिशशक्रसूर्याद्यमञ्जसा ।।

हरिवाय्वोः पापनाशकवेदमूर्तित्वकथनम्

उप.– तस्योष्णिग्लोमानि त्वग्गायत्री त्रिष्टुप् मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती । स च्छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते । छादयन्ति ह वा एनं

छन्दांसि पापात् कर्मणो यस्यां कस्याश्चिद्दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद ।

भा.– विष्णोर्वायोश्च लोमादौ छन्दांस्येवाश्रितानि च ।
विष्णोर्विमुक्तवायोश्च लोमाद्यं तु चिदात्मकम् ।।

लोमप्राणादिभेदश्च नैव कश्चिच्चिदात्मनि ।
छन्नश्छन्दोभिरेवं स केशवस्तेन चाभिधा ।।

छन्दांसीत्येव तेषां हि य एवंविदुपासकः ।
निवारयन्ति पापेभ्यश्छन्दांसि किमु केशवः ।।

योग्या अस्याश्च विद्यायाः भृग्वाद्या देवतास्तथा ।
छन्दस्सु संस्थितो विष्णुर्गोपायत्येव तद्विदम् ।।

ऋषिणा स्वानुभकथनम्

उप.– तदुक्तमृषिणा अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायति । अनिपद्यमानमिति न ह्येष कदाचन संविशति । आ च परा च पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति । स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिशः । आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्ति ।।

भा.– मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्म ह ।
एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः ।।

छन्दस्सु संस्थितो वायुर्वायौ च स जनार्दनः ।
वायुश्च वायुसंस्थश्च कदाचिन्नैव तिष्ठतः ।।

वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान् ।
चोदितः केशवेनैव तत्स्थेनामितशक्तिना ॥

आसमन्तात् पराक्चापि पञ्चभूतेभ्य ईश्वरः ।
वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ॥

सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ।
नित्यदा वसतः कोणदिक्ष्वथाऽसु विषूचिषु ॥
अन्तश्च सर्वलोकेषु चरतो लोकसाक्षिणौ ।

जीवस्य कनकायितत्ववर्णनम्

उप.– अथो आवृतासोऽवतासो न कर्तृभिरिति ॥ सर्वं हीदं प्राणेनाऽऽवृतम् । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः । तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्यापि-पीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येवं विद्यात् ॥ ६ ॥

भा.– हस्तयोरेतयोरेव नित्याक्षीणं वसु स्थितम् ॥

तद्ध्यसह्यं बलं वायोरनन्तं किमु तद्धरेः ।
वायोराधारभूतस्य ताभ्यां हि क्रतुनामकाः ॥

आवृताः सर्वजीवा हि यथैव कनकावटाः ।
आच्छाद्यन्ते वित्तवद्भिस्ताभ्यामेवं च चेतनाः ॥

आवृता महदाद्यास्तु देहे तिष्ठन्ति चैतयोः ।
विष्टब्धाश्चैव सर्वेऽपि जीवा आकाश एव च ॥

स वायुः प्रकृतिश्चैव विष्टब्धौ केशवेन हि ।
बृहत्वात् बृहतीत्येव तयोर्नाम प्रकीर्तितम् ॥

वायुकेशवयोः प्राणनाम सर्वप्रणायनात् ।
विशेषतो बृहत्प्राणो भगवांस्तत्र केशवः ।।
इति विद्यात् ....... ....... ।। ६ ।।

भगवतोऽङ्गानां वैभववर्णनम्

उप.– अथाऽतो विभूतयोऽस्य पुरुषस्य । तस्य वाचा सृष्टौ पृथिवी चाग्निश्च । अस्यामोषधयो जायन्ते । अग्निरेनाः स्वदयतीदमाहरतेदमाहरतेति । एवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च । यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद ।

भा.– ....... ...... तस्य विष्णोरङ्गानामथ वैभवम् ।
उच्यते तस्य वाचा हि सृष्टावग्निः क्षितिस्तथा ।।

शुश्रूषार्थं तस्य पृथ्वी जनयत्योषधीः प्रभोः ।
ताः पचत्यग्निरुद्युक्तः आहृता आहृताः पुनः ।।

आहरेति वचोऽस्यापि शृण्वन्त्येव महर्षयः ।
मुखजत्वात् तयोर्विष्णोर्मुखं जनकमिष्यते ।।

आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा ।
सर्वैर्यद्भुज्यते चान्नं तत्र तत्र स्थितो हरिः ।।

तद्भुङ्क्तस्तदर्थं हि तावन्नं कुरुतस्सदा ।
विष्णोर्वाग्विभवं वेद य उपास्ते च सर्वदा ।।

योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः ।
समं तयोर्व्याप्तिमांश्च तद्वन्मुक्तश्च नित्यदा ।।
अनष्टलोको वसति समीपे केशवस्य च ।

अस्या उपासनाया असर्वाधिकारिकत्वनिरूपणम्

योग्या अस्या उपासायाः पृथिव्यग्निपदस्य ये ।।
योग्यास्ते वै मुख्यतया तदन्ये तत्र तौ स्थितौ ।
तत्र चर्तुं समर्था स्युर्मुक्तिं प्राप्य यथेच्छया ।।
कादाचित्कोपासने तु तावत्येषां च योग्यता ।

न केवलं श्रवणस्य आपरोक्ष्यस्याप्यावश्यकत्ववर्णनम्

वेदनं ह्यापरोक्ष्येण मुख्यं भवति नान्यथा ।।
एकदेशविदो यस्मात् परोक्षज्ञानिनोऽखिलाः ।
आपरोक्ष्यं भवेद् यस्मान्नैवोपासामृते क्वचित् ।।
तस्मादुपासापूर्वं तु योऽपरोक्षं प्रपश्यति ।
स एव वेद नान्यस्तु योग्यस्यैवापरोक्षदृक् ।।
तस्माद्योग्यस्योक्तफलमन्येषां किञ्चिदेव हि ।

प्राणेन सृष्टिः

उप.– प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति । वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च । यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद ।

चक्षुषा सृष्टिः

चक्षुषा सृष्टौ द्यौश्चादित्यश्च । द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च । यावदनु द्यौः यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते ।। यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद ।

श्रोत्रेण सृष्टिः

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च । दिग्भ्यो हैनमायान्तीं ३ । दिग्भ्यो विशृणोति ।। चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे । एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च । यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद ।

मनसा सृष्टिः

मनसा सृष्टा आपश्च च वरुणश्च । आपो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे । वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च । यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ।। ७ ।।

तत्वाभिमानिनां कार्यव्याप्तिनिरूपणम्

भा.– प्राणादिभ्यश्च वाय्वाद्या एवं त्रिष्णोः प्रजज्ञिरे ।।

ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः ।
ते विष्णोर्मनसा जाताः सर्वे चावभिमानिनः ।।

वैश्वदेव्यस्ततो ह्यापो वरुणश्च मनोभवः ।
प्राणिनां पूर्तपुण्येषु श्रद्धारूपमनोऽधिपः ।।

एवं हि सर्वदेवा हि विष्ण्वङ्गेभ्यः प्रजज्ञिरे ।
स्वोत्पत्त्यङ्गं च ते विष्णोः शुश्रूषन्ते पृथक् पृथक् ।।

विष्णोः विषयधर्मेषु ज्ञानादिषु चतुर्मुखः ।
श्रद्धां ददाति भूतानां वैदिकश्रवणे विपः ।।

तान्त्रिके शेषरुद्रौ च शक्रो यज्ञादिकर्मणि ।
वायुर्गन्धवहश्चास्य भक्तिज्ञानप्रदस्तथा ।।

भूतानां तस्य विषये त्वन्तरिक्षं च कर्मणः ।
तदीयस्यैव भोगार्थं जीवानां श्रुतिचारदम् ।।

अन्तरिक्षं च विघ्नेशः सूर्यस्तत्कर्मसिद्धये ।
भूतानां ज्योतिषो दाता द्यौरप्यन्नाद्यदायिनी ।। ७ ।।

भगवतः सर्वनामवत्वकथनम्

उप.– आपाः ३ इत्यापः इति । तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्वच पुत्रस्य तत्पितुर्यत्र वा पितुस्तद्वा पुत्रस्येत्येतत् तदुक्तं भवति तद्धस्म वै तद्विद्वानाह महिदास ऐतरेय आहं मां देवेभ्यो वेदा ओमदेवान् वेदेतः प्रदाना ह्येत इतः सम्भृता इति ।

भा.– आप इत्येव देवानां ब्रह्मादीनां कथं भवेत् ।
नामेत्यपृच्छल्लक्ष्मीस्तं महिदासं जनार्दनम् ।।

आप इत्येव नामैषां भवतीत्याह स प्रभुः ।
इदं मदाख्यं यद् ब्रह्म ह्याप इत्यभिधीयते ।।

आ पूर्णत्वाद् गुणैः सर्वैस्तन्मूलमखिलस्य च ।
तूलभूतं तदन्यत् तु पिता ह्येष जनार्दनः ।।

पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत् ।
स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात् परमेशितुः ।।

तन्नामाप इति ह्येतद्ब्रह्मरुद्रादिनां भवेत् ।
यथा यदव इत्येव रघवः कुरवस्तथा ।।

पुत्रनाम पितुश्च स्यात् तत्तन्त्रत्वात् सुतस्य हि ।
यथा पितामहाद्याश्च पितरो नाम कीर्तिताः ।।

तथापि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः ।
आप इत्येव देवानां सर्वेषां प्रददौ हरिः ।।

स्वकीयमेवमन्यानि पृथक् पृथगदात् प्रभुः ।
नारायणादिनामानि ददौ नान्यस्य केशवः ।।

एवं स भगवान् विष्णुर्महिदासाभिधः प्रभुः ।
जानन्नित्योदितज्ञानादाह देवीमिदं वचः ।।

देवपर्यन्तमा व्याप्तिं वेदाहं मम सर्वदा ।
मत्पर्यन्तं यथा व्याप्तिं देवानामपि सर्वशः ।।

मयि देवास्तेषु चाहमिति विद्धि वरानने ।
मयैतानि प्रदत्तानि पदानि ब्रह्मपूर्वकाः ।।

अधितिष्ठन्ति सत्ताद्या अप्येतेषां मदाज्ञया ।
ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वदे ।।

सम्भृता मत्त एवैते ...... .. ........

भगवतः ब्रह्मगिरित्वनिरूपणम्

उप.– स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणस्तं ब्रह्मगिरिरित्याचक्षते । गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ।।

भा.–..... ........ स एष भगवान् गिरिः ।
गिरणात् सर्वभूतानां चक्षुर्नामास्य दर्शनात् ।।

सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः ।
प्राणनामा प्रणेतृत्वात् तमेनं गुणपूर्तितः ।।

गिरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम् ।
य एवं वेद तं विष्णुमापरोक्ष्येण शाश्वतम् ।।

गिरत्येवाखिलं पापं भ्रातृवत् सह संस्थितम् ।
पराभवति पाप्माऽस्य द्वेष्टा निरयगः सदा ।।

उपासनायाः फलप्राप्तिनिरूपणम्

उप.– स एषोऽसुः । स एष प्राणः । स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासाञ्चक्रिरे । ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो

भूर्भूरित्येव प्रश्वसिति । अभूतिरित्यसुरास्ते ह पराबभूवुर्भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ।।

भा.– असनाद्भगवान् सोऽसुः सर्वस्यापि जनार्दनः ।
प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ।।

स एष भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः ।
अज्ञानादिप्रदातृत्वात् स एवाभूतिनामकः ।।

सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् ।
उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः ।।

वभूवुः सुखसज्ज्ञानपूर्वैः सर्वगुणैर्युताः ।
देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः ।।

स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति ।
भूःशब्दार्थो भूतिरिति वैपरीत्येन चासुराः ।।

अभूतिकारकोऽस्माकमैश्वर्यादिगुणोज्झितः ।
इत्येवोपासते तस्मात् पराभूताश्च सर्वशः ।।

ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ ।
य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम् ।।

भावाभावं च देवानां दैत्यानां चैवमेव तु ।
ज्ञानैश्वर्यादिभिः सोऽपि भवेत् तस्य परात्मनः ।।
प्रसादात् तस्य पाप्मा च पराभवति सर्वशः ।

जननमरणमोक्षाणां भगवदधीनत्वकथनम्

उप.– स एष मृत्युश्चैवामृतं च । तदुक्तमृषिणा– अपाङ्प्राङेति स्वधया गृभीत इति । अपानेन ह्ययं यतः प्राणो न पराङ्भवति । अमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३ । अमृतैषा देवता । ता शश्वन्ता विषूचीना वियन्ता न्य१ न्यं चिक्युर्न निचिक्युरन्यमिति, निचिन्वन्ति हैवेमानि शरीराणी३ । अमृतैवैषा देवता । अमृतो ह वा अमुष्मिꣳल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद ।।८।।

भा.– स एष भगवान् विष्णुर्मृत्युदो मोक्षदस्तथा ।।

स एव जीवनकरो यदाऽपानेन संयुतम् ।
प्राणं नियमयत्यस्मिञ्छरीरे पुरुषोत्तमः ।।

शरीराद् बहिरेतौ तु यदा निःसारयत्यजः ।
तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम् ।।
प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः ।

मुख्यप्राणस्य मरणराहित्यकथनम्

अर्वाक्प्राक्च सदा गच्छेद्वायुरानन्दरूपिणा ।।

अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः ।
अनेन हरिणा यस्मान्नियतो न पराग्भवेत् ।।

अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः ।
अनित्या अपि देहास्ते शश्वत् सन्त्याविमोक्षतः ।।

स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः ।
नानागती तु तावेतौ वायुः प्राप्नोति केशवम् ।।

शरीरं तु विनष्टं स्यात् पञ्चत्वमुपगच्छति ।
जडं तज्जडतामेति चेतना वायुदेवता ।।

चेतनेशं हरिं याति विरुद्धगमनौ च तौ ।
ऊर्ध्वं गच्छति देवः स देहोऽधः पतति क्षितौ ।।

दृश्यमेतच्छरीरं चाप्यदृश्या वायुदेवता ।
य एवं वेद तं वायुममृतं सर्वनायकम् ।।

पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा ।
स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च दृश्यते ।। इति च ।

श्रीहरेः सृष्ट्यादिकर्तृत्वनिरूपणम्

ब्रह्मपन्थाः सत्यं कर्मेति तस्य नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः । नासिकायां यन्नेत्रयोर्मध्ये विनतमिव किञ्चिन्नतस्थानं तत्सूर्यलोकस्थानीयं विद्यात् ।

अक्षरविभागस्य अर्थपूर्णत्वकथनम्

तथेति निर्णयः । इरामया इति दैर्घ्यमवधारणार्थम् । 'दैर्घ्यं प्लुतं च हिङ्कारो विन्दुरप्यवधारणे' इति शब्दनिर्णये । ब्रह्मा हैवं ता३ ईते ।

देशतः कालतोऽर्थाच्च वलतो गुणतस्तथा ।
स्वरूपतोऽपि नैव स्याद् भेदोऽत्यल्पोपि यत्र हि ।।

केवलैश्वर्ययोगेन यत्र सङ्ख्यादिवद्भवेत् ।
स्वरस्पर्शविभागेन तत्रोक्तिः स्याद् विभक्तिषु ।।

अचिन्त्यात् तु तथैश्वर्यादेकोऽपि बहुरूपवान् ।
प्रकाशयेद्यतो विष्णुः सर्वत्राप्यविशेषवान् ।।

न विशेषो हि रूपाणां मत्स्यादीनां कथञ्चन ।
नैश्वर्ये न बले चैव नानन्दादिगुणेष्वपि ।।

इत्यादिशब्दनिर्णयवचनात् द्विवचनमत्र व्यवहारमात्रमिति दर्शयितुं ता इत्युक्तम् ।

संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते ।
उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ।।

इत्यतो ब्रह्माहेति दैर्घ्यमपि परब्रह्मत्वविवक्षया ।

नारायणस्य देवोत्तमत्वकथनम्

अद उ एव नारायणाख्यमधिदैवतं अन्यानि दैवतमात्राणि । स्थानान्तरेऽन्येषामप्यधिदैवत्वकथनम् । कर्मजदेवाद्यपेक्षया । मुख्याधिदैवतं नारायण एव ।

देवैर्भगवदाराध्यत्वकथनम्

तस्योष्णिग्लोमानीत्यादि लोमसूष्णिगित्याद्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । सच्छन्दोभिश्छन्न इति वाक्यशेषात् । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिवच्च ।

अङ्गेषु यस्य छन्दांसि देवा लोका मखा अपि ।
तद्वशा नियता नित्यं नमस्तस्मै परात्मने ।। इति स्कान्दे ।

अस्मै पुण्याय कर्मण इत्येतमुद्दिश्य जीवानां पुण्यकर्म कर्तुम् । तैर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण शृणोति भगवान् । दिग्भ्योऽप्यन्य

एव विशृणोति जीवः । अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेनैव भगवान् भुङ्क्ते ।

न च जीवानां सृष्ट्यादिकर्तृत्वमिति निरूपणम्

न च जीववागादिना पृथिव्यग्न्यादिकं सृष्टमित्यत्र किञ्चिन्मानमस्ति । मुखादिन्द्रश्चाग्निश्चेत्यादिना भगवतः सकाशाद्धि सर्वेषां सृष्टिः प्रसिद्धा । सृष्टिभेदादन्यथावचनम् । न च मुख्यकारणाङ्गीकारेऽविरोधे औपचारिकं कारणमङ्गीकर्तुं युक्तम् । अतिप्रसङ्गात् । न हि यत्किञ्चित् कारणत्वमस्तीत्येतावता ब्राह्मणस्य चण्डालः पितेत्युच्यते । पितृत्वं चात्रोक्तं वाचं पितरमित्यादिना ।

मनुष्याणां तु यत्कर्म न देवोत्पत्तिकारणम् ।
दैवतैरुपकारस्तु क्रियते नरकर्मणाम् ।।

देवानां कर्मणैवैते जायन्ते सर्वमानुषाः ।
प्रधानत्वान्न देवानां नृकर्मोत्पत्तिकारणम् ।। इति च ब्रह्माण्डे ।

अस्या उपनिषदोमहिदासोपदेशत्वकथनम्

आह महिदास ऐतरेय इति तु सर्वस्य वचनस्य तदीयत्वज्ञापनार्थं न तु सन्निहितस्यैव । यथेन्द्रं कुत्स इत्यादि । यथा च 'पूर्वं तु वादरायणो हेतुव्यपदेशात्' इति ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके प्रथमोऽध्यायः ।।

## ।। अथ द्वितीयारण्यके द्वितीयोऽध्यायः ।।

### सूर्यान्तर्यामिणो नारायणस्यैव जीवशरीरान्तर्यामित्वकथनम्

उप.– एष इमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति । प्राणो वाव तदभ्यार्चत् । प्राणो ह्येष य एष तपति ।

भा.– एष नारायणो देवो वायुना सहेमं लोकमभ्यार्चत् । ब्रह्मादिशरीरेषु प्रविवेश । पुरुष इत्यन्तर्यामिरूपस्याख्या पुरि शेत इति । प्रसिद्धत्वाच्च पञ्चरात्रेषु । य एष सूर्यमण्डले स्थित्वा तपति स भगवान् नारायणः । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद' इत्यादिश्रुतिभ्यः । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्युक्त्वा 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्युक्तत्वान्न शिवादयः । शिवो हि विरूपाक्षः । प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान्नारायणः ।

### सूर्यस्य न जीवशरीरान्तर्यामित्वमिति समर्थनम्

यमादित्यो न वेदेत्युक्तत्वान्नादित्यः । 'भेदव्यपदेशाच्चान्यः' इति भगवद्वचनम् ।

> वृत्रं यदिन्द्र शवसावधीरहिमादित् सूर्यं दिव्यारोहयो दृशे ।
> यत्सूर्यस्य हरितः पतन्तीः पुरस्सतीरुपरा एतसे कः ।।
> सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतस्सूर्यमारोहयो दिवि ।

'चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत' ।

'यस्सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः' ।

'उद्वेति प्रसविता जनानां महान् केतुरर्णवः सूर्यस्य ।'

'येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ।'

'तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः'
इत्यादौ सूर्यस्य सर्वत्र पराधीनत्वावगतेश्च ।

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान्
किरीटी हारी हिरण्मयवपुः धृतशङ्खचक्रः ।।

इति नारसिंहपुराणे ।

तापनी पाचिका चैव शोषणी च प्रकाशनी ।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा ।। इति पाद्मे ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। इति च ।

न च हरेरन्याधीनत्वं सम्भवति

न च विष्णोरन्याधीनत्वं श्रुतिषूक्तं कुत्रचित् । उत्पत्तिस्तु प्रादुर्भावापेक्षया । 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' इति महाप्रलये तस्यैवावस्थानश्रुतेः । 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' इति ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वं 'मम योनिरप्स्वं१तः समुद्रे । ततो वितिष्ठे भुवना नु विश्वा परो दिवा पर एना पृथिव्या' इत्याह । 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं सुवे पितरमस्य मूर्धन्' इति ब्रह्मरुद्रयोर्देव्यास्सकाशात् सृष्टिसंहारौ चोक्तौ ।

अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ।।

इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च ।

नारायणस्य सर्वाधारत्वनिरूपणम्

'तमेताः सप्ताक्षितय उपतिष्ठन्ते । तद्या इमा अक्ष्ँल्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः' इत्यादिना शिवादिसर्वदेवोपास्यस्य वायोः 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति मध्यमशब्दोक्तस्य 'प्राणः स्थूणा' इति प्राणशब्दोदितो नारायण आश्रय उक्तः । तस्मात् सर्वोत्तमो भगवान् नारायणः प्राणशब्दोदित आदित्यमण्डलस्थ-स्तपतीत्यादि सिद्धम् ।

चेतनतारतम्यनिरूपणम्

क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च ।।

शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।
मुक्ता उक्ताः शतगुणा बलज्ञानसुखादिभिः ।।

विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः ।
तस्माद्रमा ततो विष्णुरनन्तगुणतोऽधिकः ।।

नित्यमुक्तः स्वतन्त्रश्च न चान्यस्तादृशः क्वचित् ।
कुत एवाधिकोऽन्यः स्याद्यन्मुक्ता अपि तद्वशाः ।।

रमापि तद्वशा नित्यं स नान्यस्य वशे प्रभुः ।
न भेदः शेषशिवयोः सुपर्णः शेषसंमितः ।।

कामः शक्रसमो नित्यं प्रतिबिम्बाश्च ते क्रमात् ॥
इति च महासंहितायाम् ॥

ऋषिनाम्नामपि भगवन्नात्वकथनम्

उप.– तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यच्छतं वर्षाण्यभ्यार्चत् तस्मात् शतर्चिनस्तस्मात् शतर्चिन इत्याचक्षते एतमेव सन्तम् ।

स इदं सर्वं मध्यतो दधे यदिदं किञ्च । स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मात् मध्यमास्तस्मात् मध्यमा इत्याचक्षते एतमेव सन्तम् ।

भा.– स पुरुषेषु शतवर्षं गत इति शतर्चिनामा । बहुरूपत्वाद् बहुवचनम् । एतमेव तथासन्तं मुख्यत आचक्षते । ऋषींस्तूपचारतः । आत्मन उदरे धृतवान् मध्ये स्थित्वा धृतवांश्च ।

उप.– प्राणो वै गृत्सोऽपानो मदः । स यत्प्राणो गृत्सोऽपानो मदस्तस्मात् गृत्समदस्तस्माद् गृत्समद इत्याचक्षते एतमेव सन्तम् । तस्येदं विश्वं मित्रमासीद् यदिदं किञ्च । तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च । तस्मात् विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते एतमेव सन्तम् ।

तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति । तस्माद्वामदेवस्तस्माद् वामदेव इत्याचक्षते एतमेव सन्तम् । स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च । स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥ १ ॥

भा.– प्राणस्थः प्राणनामासावपानेऽपाननामकः ।
नेतृत्वाच्चापनेतृत्वाद्भगवान् पुरुषोत्तमः ।। इति च ।

वामो भद्रः ।। १ ।।

उप.– एष उ एव बिभ्रद्वाजः । प्रजा वै वाजस्ता एष बिभर्ति । यद्बिभर्ति तस्मात् भारद्वाजस्तस्मात् भारद्वाज इत्याचक्षते एतमेव सन्तम् ।

तं देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठस्तस्मात् वसिष्ठ इत्याचक्षते एतमेव सन्तम् ।

स इदं सर्वमभिप्रागाद्यदिदं किञ्च । स यदिदं सर्वमभिप्रागाद् यदिदं किञ्च तस्मात् प्रगाथास्तस्मात् प्रगाथा इत्याचक्षते एतमेव सन्तम् ।

स इदं सर्वमभ्यपवयत यदिदं किञ्च । स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात् पावमान्यस्तस्मात् पावमान्य इत्याचक्षते एतमेव सन्तम् ।

भा.– वसिष्ठो वसतामुत्तमः । अभ्यपवयत पावयामास संसारात् ।

सूक्तनाम्नामपि भगवन्नामत्वकथनम्

उप.– सोऽब्रवीत् अहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ।। ते क्षुद्रसूक्ताश्चाभवन् महासूक्ताश्च । तस्मात् क्षुद्रसूक्तास्तस्मात् क्षुद्रसूक्ता इत्याचक्षते एतमेव सन्तम् ।

सूक्तं बतावोचतेति तत्सूक्तमभवत् । तस्मात् सूक्तं तस्मात् सूक्तमित्याचक्षते एतमेव सन्तम् ।

भा.– तद्विष्णवाख्यं ब्रह्म सूक्तान्यवोचतेति सूक्तनामकमभवत् । वतेत्यास्वादने । स्वात्मनैव स्वयं सुष्टूक्तमिति वा । इदं सर्वं परिपूर्णं सन्नहमल्पप्राणिषु प्रविश्य सूक्ष्मरूपो महाप्राणिषु महारूपश्च भवानीति स भगवानब्रवीत् । तस्मात् क्षुद्रोऽसानीत्युक्तत्वात् क्षुद्रसूक्तास्ते क्षुद्र-प्राणिषु स्थिताः भगवद्रूपसङ्घाः । महानसानीत्युक्तत्वात् महासूक्ता महाप्राणिषु स्थिताः । सूक्ष्मरूपत्वादेव क्षुद्रनाम भगवतः । न तु सामर्थ्याऽल्पत्वात् । न हि सामर्थ्यादिगुणेषु कश्चिद्विशेषो भगवद्रूपेषु ।

उप.– एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत । स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मात् ऋक् । तस्माद् ऋगित्याचक्षते । एतमेव सन्तम् । एष वा अर्धर्चः । एष ह्येभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत । स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत । तस्मात् अर्धर्च-स्तस्मादर्धर्च इत्याचक्षते । एतमेव सन्तम् । एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि । तस्मात् पदं तस्मात् पदमित्यचक्षते । एतमेव सन्तम् । एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति । न चैनमतिक्षरन्ति । स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरति तस्मात् अक्षरं तस्मादक्षरमित्याचक्षते एतमेव सन्तम् ।

ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव । प्राण ऋच इत्येव विद्यात् ।। २ ।।

भा.– एभ्यः प्राणिभ्यो गतवानिति ऋक् । गच्छति हि मरणकाले । 'ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते बुधैः' इति हि भारते ।

म्रियमाणमिमं जीवं वासुदेवादिदेवताः ।
त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् ।।

गतैर्भागैरपि पुनर्विशेयुर्भोगसिद्धये ।
भोग्यलोकमनुप्राप्तं तस्मात् स्वप्नवदन्तरा ।। इति च ।।

'अर्च गतिपूजनयोः' 'ऋ गतौ' इति धातोः । सर्वेभ्योऽर्धेभ्यः स्थानेभ्यः शरीरेभ्यो गतवानित्यर्धर्चः । सर्वाणि भूतान्यपादि । पद गतौ । तस्मात् पदं नाम । अधिकं क्षरतीत्यक्षरम् । क्षरणं नाम सन्ततदानम् । 'क्षर विनाशसन्ततदानयोः' इति धातोः ।

समुद्रघोषादीनामपि भगवन्नामत्वम्

एवमृषिषु शब्देषु च व्यवह्रियमाणानि सर्वाणि नामानि विष्णोरेव मुख्यतः । किमु देवतानामानि ।

'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या' ।
'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' ।
'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' ।
'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' ।।

इत्यादिश्रुतिभ्यः । न केवलमृष्यादीनां नाम भगवतः । सर्वे वेदा अपि तस्यैव नामानि । किमु च वेदाः । समुद्रमेघवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि । एकमेव व्याहरणम् । एकप्रकारमेव नाम । निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता । प्राणे नारायण एव । नारायणविषय एव व्याहारः । ऋचस्तु

विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति । प्राणे नारायणे एवेति विद्यात् । उक्तं च बृहत्संहितायाम्–

हुंकारेण सहैवाब्धिः सर्वाभिभवशक्तिताम् ।
विष्णोर्वक्ति यतो हुं च पराभिभववाचकः ॥

ओमिति स्वरते नित्यं वायुर्मेघेषु संस्थितः ।
वलवन्नादसंयुक्तो ह्यधिकोच्चत्वमस्य तु ॥

ओङ्कारस्यार्थ उद्दिष्ट उक्तार्थाधिक्यमेव च ।
नादो वली प्रवदति तथा भेरीध्वनिः प्रभोः ॥

अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः ।
तदपेक्षयाऽन्यनीचत्वं घण्टाद्याः स्वरितात्मकाः ॥

उच्चस्थितिमुदात्तस्तु स्वर्णचञ्च्वादिकः स्वरः ।
विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः ॥

एकप्रकारतां विष्णोः सदाचाल्यां वदत्यपि ।
इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम् ॥

वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा ।
मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत् ॥

तेन मार्जार उद्दिष्टो मोषणान्मूषको हरिः ।
वर्षणाद् वृष उद्दिष्टो वलनाद्वलिनामकः ॥
तारणात् तृणनामाऽसावित्याद्येकोऽभिधीयते ।

सर्वनामत्वेऽपि भगवतः सर्वविलक्षणत्वम्

सर्वनामापि भगवान् सर्वशक्तिश्च सर्ववित् ।।

ब्रह्मरुद्रादिजीवेभ्यो जडेभ्यः श्रिय एव तु ।
व्यतिरिक्तः सदानन्तसान्द्रानन्दैकरूपकः ।।

तस्यैव मुख्यनामानि समाकृष्येतरेष्वपि ।
उपचारात् प्रवर्तन्ते व्यवहारप्रसिद्धये ।।

तथैव सर्वनामानि प्रवर्तन्ते च मारुते ।
न तावन्मुख्यवृत्त्यैव मुख्यतोऽन्यव्यपेक्षया ।।

मुख्यतः सर्वनामा तु विष्णुरेको न चापरः ।
तस्मात् प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः ।।

अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते ।
वायुश्च सूर्यसंस्थः संस्तपत्येतज्जगत्त्रयम् ।।
आज्ञयैव हरेर्वायोः शक्त्या सूर्यस्तपत्ययम् ।। इत्यादि च ।

वायोरपि सर्ववेदप्रतिपाद्यत्वम्

न प्रसिद्धसूर्यस्येयं तापनशक्तिरिति ज्ञापयितुं प्राणो ह्येष य एष तपतीत्युक्तम् । 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति श्रुतिः । प्राणशब्दश्च मुख्यतो विष्णौ प्रवर्तमानोऽपि वायावपि वर्तते । अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति । 'प्राणस्य प्राणः' इति श्रुतेरुभयोरपि प्राणशब्दः प्रसिद्ध एव । 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति वायोर्विशेषणादुत्तमप्राणो विष्णुरिति च सिद्धम् ।

द्वावात्मानौ हि वेदेषु द्वौ प्राणौ द्वौ च चेतनौ ।
अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ ॥

तदन्ये चेतनास्सर्वे प्राणाश्चात्मान एव च ।
अज्ञानाभिभवस्पृष्टास्तस्मात् ते ह्यधमाः श्रुताः ॥

मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।
सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः ॥

अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित् ।
श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ॥

तस्मादमितनामानावपि तौ मितनामवत् ।
श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ॥

अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ।
पृथङ्नामानि यस्मात् तद्गुणानेव प्रचक्षते ॥

इत्यादि ब्रह्माण्डे ॥ २ ॥

विश्वामित्रेण वृहतीसहस्रशंसनम्

उप.– विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद । स हान्नमित्यभिव्याहृत्य वृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे द्वितीयं शंसेति स हान्नमित्यभिव्याहृत्य वृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे तृतीयं शंसेति । स हान्नमित्यभि-

व्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः वरं ते ददामीति ।

स होवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि । प्राणो ह्येष य एष तपति । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि ।। तस्य मेऽन्नं मित्रं दक्षिणम् । तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच ।। ३ ।।

बृहतीसहस्रमन्त्राणां हरिवाय्वोरतिप्रीतिकरत्वनिरूपणम्

भा.– अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः । तदनन्तरं वायुविषयाश्च । तस्माद् बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नम् । तदाज्ञया वायोश्च । तस्मात् तच्छंसनेन भगवान् वायुश्चातिप्रीयेत इति दर्शयति विश्वामित्रं ह्येतदहः शंसिष्यन्तमित्यादिना ।।

इन्द्रेण महाव्रतयज्ञकरणम्

वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये ।
महाव्रतं कर्म चक्रे हौत्रं चक्रेऽत्र कौशिकः ।।
भृगुरध्वर्युरभवद् ब्रह्मा ब्रह्माऽभवत् स्वयम् ।
उद्गाता वायुरभवत् स्वयं नारायणः प्रभुः ।।
सादस्यमकरोत् तत्र तदन्येऽन्येऽपि चर्त्विजः ।

विश्वामित्रेण बृहतीसहस्रपठनम्

बृहतीसहस्रं शंसिष्यन् यदा सस्मार केशवम् ।।

वायुना सह देवेशस्तदा वासवमाविशत् ।
आविष्टो विष्णुनाऽथेन्द्रो वायुना सह कौशिकम् ।।

शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः ।
ऋक्सहस्रं शशंसाथ यज्ञाङ्गत्वेन भक्तितः ।।

तच्छ्रुत्वा तुष्टिमगमत् केशवो वायुसंयुतः ।
द्वितीयवारं शंसेति प्राह तं च जनार्दनः ।।

प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत् ।
अतिप्रियत्वाद् भगवान् पुनरप्याह कौशिकम् ।।

तृतीयं च शशंसास्मै विष्णोरन्नं प्रकल्प्य तत् ।
ततोऽतितुष्टो भगवान् ददामि वरमित्यमुम् ।।

ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः ।
प्रादाद् द्वितीये सामीप्यं तृतीये पुनरेव च ।।

परमात्मनः सर्वशब्दवाच्यत्वकथनम्

वरं ददानीत्युक्तः सन् मुनिः प्राह जनार्दनम् ।
सम्यक्त्वामेव जानीयामिति मोक्षे सुखोच्चताम् ।।

इच्छंस्तं प्राह भगवानिन्द्रस्थो वायुसंयुतः ।
सर्वनामाऽहमस्म्येक इति ज्ञानं ममोत्तमम् ।।

यस्मात् सर्वगुणत्वं स्यात् सर्वनामत्व एव तु ।
न हि दोषाभिधायीनि विष्णोर्नामानि कानिचित् ।।

अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि ।
सर्वोत्तमगुणात्मत्वात् सदा नारायणस्य हि ।।
सर्वोत्तमगुणानेव नामान्याचक्षते हरेः ।

परमात्मनि सर्वशब्दसमन्वयक्रमनिरूपणम्

यावज्ज्ञानेन मोक्षः स्यात् तावज्ज्ञात्वापि कौशिकः ।।

अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये ।
जानीयां त्वामिति प्राह तस्मा आह स केशवः ।।

इन्द्राविष्टः प्राणनाम तथाऽन्याश्चाभिधाः प्रभुः ।
प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ।।

अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि ।
ततो वेत्तीति च त्वं स पूर्णत्वात् सर्वनामकः ।।

सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः ।
प्रभूतत्वाद् भूतनामा सर्वरूपप्रभूततः ।।

बहुरूपः स भूतानीत्युक्तो विष्णुस्सनातनः ।
सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते ।।
स एव सूर्यसंस्थः सन् लोकं तपति केशवः ।

बृहतीसहस्राणां भगवतोऽन्नत्वनिरूपणम्

सर्वनामवतस्तस्य ममान्नं मित्रमुच्यते ।।

अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा ।
साऽन्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च ।।

दक्षभागस्थितेनत्वाद् दक्षिणं नाम सोच्यते ।
तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा ।।

यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा ।
वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् ।।
विश्वामित्रेण दृष्टत्वाद् वैश्वामित्रमितीर्यते ।

इन्द्रे भगवतो विशेषावेशनिरूपणम्

इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन् हरिः ।।

आदित्यसंस्थितो विष्णुस्तपन्नस्मीति चोचिवान् ।
त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः ।।

अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः ।
हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ।।

तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मया ।
द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः ।।

इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।
अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ ।।

प्राणो वा अहमित्यादि नामसन्दर्भमुक्तवान् ।
विशेषज्ञानसिद्ध्यर्थं नाम्नामुक्तिः परात्मनः ।।

इन्द्राविष्टः कोऽयमिति शङ्कानुत्यर्थमेव च ।
तपन्नेवास्मीत्यवदत् तपन्तं वेद सोऽपि हि ।।
नारायणं सूर्यगतं गायत्र्योपासको हि सः ।। इति ब्रह्माण्डे ।

### प्राणोऽहमित्युक्तिर्भगवत एव

उपनिषण्णमिन्द्रं दृष्ट्वापि त्वामेव जानीयामिति वरस्वीकारादिन्द्रादेव चेन्द्राविष्टो भगवानत्रोक्त इति ज्ञायते । इन्द्रं तु जानात्येव हि विश्वामित्रः । भगवन्तमपि स्वरूपत आगतं जानात्येव । विशेषज्ञानप्रार्थने प्राणो वा अहमस्म्यृष इत्यादिकमेव पूर्यते । एष तपन्नेवास्मीति व्यर्थम् । प्राणो ह्येष य एष तपतीत्युक्तत्वात् ।

### भगवतस्तद्रूपाणां च न भेदः

स एतेन रूपेण सर्वा दिशो विष्टोऽस्मीत्यादिनाप्याविष्टस्य विष्णुत्वं किञ्चिज्ज्ञायते । तथाप्येतेनेति तृतीयात्वात् करणत्वाशङ्का भवति । तस्य म इति वैयधिकरण्यमिति च । अतो भगवन्नामानि पृथगुक्त्वाऽहं विष्णुरित्येव तपन्नेवास्मीत्युवाच । इन्द्रशरीरमेव पश्यतो विश्वामित्रस्य तर्कमात्रतो भगवानिति किञ्चिज्जानत इति ज्ञायते ।

### इन्द्रस्य न सर्वशब्दवाच्यत्वामिति कथनम्

न चेन्द्रस्य प्राणशब्दः सर्वशब्दाभिधेयत्वं च विद्यते । 'अजस्य नाभावध्येकमर्पितम्' इत्युक्तस्य पद्मनाभस्य हि 'यो देवानां नामधा एक एव' इति सर्वदेवाभिधानत्वमुक्तम् । इन्द्रे हीन्द्रशब्दोऽपि न मुख्यतो वर्तते । परमैश्वर्याभावात् । इन्द्रशब्दोऽपि विष्णावेव वर्तते । स हि परमेश्वरः ।

यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः ।। इति श्रुतेश्च ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
इत्यादिश्रुतेश्च ।

'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि'
इत्यादिना विष्णुरेव हि तत्र प्रस्तुतः ।

नामानि विश्वाभि न सन्ति लोके
यदाविरासीदनृतस्य सर्वम् ।
नामानि सर्वाणि यमाविशन्ति
तं वै विष्णुं परममुदाहरन्ति ।। इति श्रुतिः ।

यो देवानां नामधा एक एवेत्यवधारणान्नान्यस्य सर्वनामत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव ।

नान्येषां नारायणादिनामवत्वम्

श्रियो वायोरपि न नारायणादिनामवत्वम् । 'एको वासुदेवस्तत्सदृशपरौ न स्तः' इति श्रुतिः । 'एको नारायणस्तत्समो वाऽधिको वा नास्ति' इति च ।

येनावृतं खं च दिवं च महीं च
येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तः समुद्रे कवयो वयन्ति
यदक्षरे परमे प्रजाः ।।

इत्युक्तस्य समुद्रशायिन एव नारायणस्य

तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्

इति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव । अतस्तदत्रोच्यत इत्यपि न वक्तव्यम् ।

नान्येषां भगवतः समानत्वम्

परो मात्रया तन्वा वृधान
न ते महित्वमन्वश्नुवन्ति ।
न ते विष्णो जायमानो न जातो
देव महिम्नः परमन्तमाप ।। इत्यादेश्च ।

नकिरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन् । नकिरेवा यथा त्वम् । इत्याद्यपि सर्वनामकत्वात् तस्यैव । 'किमेकं दैवतं लोके किं वाप्येकं परायणम्' इत्यादिप्रश्नस्यापि,

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ।।

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ।।

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ।।

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रम्....... ।।

इत्येव भारते परिहाराच्च ।

विष्णोर्दक्षिणामित्रत्वकथनम्

मेऽन्नं दक्षिणमित्युक्तत्वाच्च विष्णुरेवेति ज्ञायते । स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्यपर्वणि ।

'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' इत्यादिना विष्णुरेव हि तत्र प्रस्तुतः ।

नामानि विश्वाभि न सन्ति लोके
यदाविरासीदनृतस्य सर्वम् ।
नामानि सर्वाणि यमाविशन्ति
तं वै विष्णुं परममुदाहरन्ति ।। इति श्रुतिः ।

यो देवानां नामधा एक एवेत्यवधारणान्नान्यस्य सर्वनामत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव ।

नान्येषां नारायणादिनामवत्त्वम्

श्रियो वायोरपि न नारायणादिनामवत्त्वम् । 'एको वासुदेवस्तत्सदृशपरौ न स्तः' इति श्रुतिः । 'एको नारायणस्तत्समो वाऽधिको वा नास्ति' इति च ।

येनावृतं खं च दिवं च महीं च
येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तः समुद्रे कवयो वयन्ति
यदक्षरे परमे प्रजाः ।।

इत्युक्तस्य समुद्रशायिन एव नारायणस्य

तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्

इति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव । अतस्तदत्रोच्यत इत्यपि न वक्तव्यम् ।

नान्येषां भगवतः समानत्वम्

परो मात्रया तन्वा वृधान
न ते महित्वमन्वश्नुवन्ति ।
न ते विष्णो जायमानो न जातो
देव महिम्नः परमन्तमाप ।। इत्यादेश्च ।

नकिरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन् । नकिरेवा यथा त्वम् । इत्याद्यपि सर्वनामकत्वात् तस्यैव । 'किमेकं दैवतं लोके किं वाप्येकं परायणम्' इत्यादिप्रश्नस्यापि,

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ।।

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ।।

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ।।

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रम्....... ।।

इत्येव भारते परिहाराच्च ।

विष्णोर्दक्षिणामित्रत्वकथनम्

मेऽन्नं दक्षिणमित्युक्तत्वाच्च विष्णुरेवेति ज्ञायते । स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्यपर्वणि ।

दक्षिणाभिः सहैवैतन्मदधस्ताज्जगत्सदा ।
धन्याश्चर्योऽहमेवैको मित्रं मे दक्षिणा रमा ।।
इत्यवादीद्धरिर्भूपा धन्योऽसीत्युदितो मया ।। इति नारदवचनम् ।

न च बृहतीसहस्राभिमानिनीं देवीं विना चेतनमात्रस्य मुख्यमित्रत्वं युज्यते ।

मिनोति त्रायते चेति मित्रमित्यभिधीयते ।
तस्माद्योऽयं विजानाति स मित्रं तस्य नान्यथा ।। इति भारते ।

विष्णोरेव बृहतीसहस्रप्रतिपाद्यत्वसमर्थनम्

उक्थायुत्वाच्च विष्णुरेवात्रोक्त इत्यवगम्यते । बृहतीसहस्रं ह्युक्थनामकं मुख्यतः ।

महाव्रतनियुक्तं यदृक्सहस्रं हरेः प्रियम् ।
तदुक्थमिति सम्प्रोक्तं तेने यो विष्णुरेव हि ।।
तस्मादुक्थायुरित्युक्त ऐश्वर्यादिन्द्र उच्यते ।
तस्मादुक्थायुरिन्द्रेति विष्णुर्यज्ञेषु पूज्यते ।। इति गारुडे ।

विष्णुर्ह्युक्थायुरिन्द्र इत्युच्यते । यज्ञेष्वन्य इन्द्रः पृथक्चोच्यते । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' इत्युक्त्वा 'तस्मै त्वा तेभ्यस्त्वा' इति भेदवचनाच्च । सत्य इति वायुः । 'सदिति प्राण' इति श्रुतेः ।

सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ।। इति शब्दनिर्णये ।

### बृहतीसहस्रपठनस्य फलनिरूपणम्

प्रियधाम्न उप समीपे गमनं नाम तद्धामप्राप्तिकारणभगवत्प्रसादप्राप्तिः । अन्यथोपशब्दो व्यर्थः स्यात् । न च तदैव भगवतः प्रियं धाम विश्वामित्रेण प्राप्तम् ।

बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः ।
द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तःपुरस्य च ।।
तथा स्वविषयं ज्ञानं विश्वामित्रे ददौ प्रभुः ।। इति च गारुडे ।

### इन्द्रेण स्वात्मोपदेशो न कृतः

न चेन्द्रादिभिरैक्यमत्रोच्यते । 'प्राणस्तथाऽनुगमाद्' इति च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्त्वा 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्' इति वक्तुः बृहतीसहस्रं शंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियत इति पक्षो निराकृतो हि भगवता सूत्रेषु । अध्यात्मसम्बन्धशब्देनावेशो विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वन्तर्यामिरूपेण सम्बन्धोऽस्त्येव । अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः । अधिकात्मनः परमात्मनः सम्बन्धोऽध्यात्मसम्बन्धः । न हि स्वात्मना स्वस्य सम्बन्धो भवति । यद्यध्यात्ममात्रमत्रोच्यत इति विवक्षितं तर्ह्यध्यात्मभूमेत्येव स्यात् सम्बन्धशब्दो व्यर्थः । तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः ।

### अन्तर्यामिविवक्षया अभेदव्यवहारः

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरस्थितत्वात् सर्वनामाभिधेयत्वं चोक्तम् । अहं मनुरभवं सूर्यश्चेत्यादिवत् । न हि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि ।

सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र चाहं भूमिमददामार्याय इत्यादिना प्रवृत्तिरेवोच्यते । न च वामदेवेन मन्वादिकर्म क्रियते कदापि । अतीतार्थश्चायं दृश्यते भूमिमददामित्यादिना । न हि पूर्वं वामदेवेन तानि कर्माणि कृतानि । भगवान् विष्णुर्हीन्द्राय भूमिमददात् । स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नवबोधसूरिनियमनादिभिर्मनुसूर्यादिसर्वनामा भवति । यदि भेदस्य पूर्वमपि मिथ्यात्वमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वादहं मनुरभवमित्यादिकं सर्वमनर्थकमेव भवति ।

### पञ्चभेदनिरूपणम्

जीवेश्वरभिदा चैव जीवभेदः परस्परम् ।
जडेश्वरभिदा चैव जडभेदस्तथैव च ॥

जडजीवभिदा चैव सत्योऽयं भेदपञ्चकः ।
न कदाचिन्निवर्त्योऽयं मुक्तौ संसार एव वा ॥
य एतदन्यथा ब्रूयुस्ते हि यान्त्यधरं तमः ॥

इति भविष्यत्पर्वणि ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ इत्यादि च ।

### भगवतो न प्रपञ्चस्वरूपत्वम्

न च प्राणो वा अहमस्म्यृष इत्यादावहमस्म्यादिशब्दोऽस्म-

च्छब्दाद्यर्थः । एष तपन्नेवास्मीत्युपरितनस्य वैयर्थ्यात् । प्राणो ह्येष य एष तपतीत्युक्तत्वात् । अतोऽहमस्मीत्यादि च भगवन्नामैव । न च जीवैक्यवचनमत्र प्रस्तुतम् । ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एवेति सर्वनामाभिधेयत्वं भगवत उक्त्वा तत्रैव प्रमाणत्वेन – विश्वामित्रं ह्येतदहरित्याद्याख्यायिकोक्ता । तस्मात् सर्वान्तर्यामित्वात् सर्वगुणत्वात् सर्वशक्तित्वाच्च सर्वनामवत्त्वमेव विष्णोरुच्यते न तु सर्वस्वरूपत्वम् । उक्तं च भारते ।

### मुक्तावपि भेदास्तित्वनिरूपणम्

स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात् ।
सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः ।। इति ।

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पुरुषेणैवेदं सर्वं व्याप्तं यद्भूतं यच्च भाव्यम् । आ तृणादाकरीषात् सर्वं भगवानिति मिथ्यादृष्टिरेषा इति च श्रुतिः । हिरण्मयो ह वा अमुष्मिंल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद । अमृतो ह वा अमुष्मिंल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद । स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामान् आप्त्वा अमृतः समभवत् समभवत् इत्यादिना मुक्तानामपि भेदस्यैवोक्तेश्च । न हि भेदाभावे भूतेभ्यो ददृश इति युज्यते । न चामुक्तैः सर्वभूतैर्मुक्तो दृश्यते ।

### बहुजीववादस्य एकजीववादस्य चायुक्तत्वकथनम्

एकत्वे तु ददृश इत्येतावता पूर्यते सर्वेभ्यो भूतेभ्य इति व्यर्थम् । न च तेषां पक्षे स्वयमपि स्वात्मानं पश्यति । कर्तृकर्मविरोध इति

हिते वदन्ति । अतः सर्वश्रुतिविरोध एव जीवेश्वरैक्याङ्गीकारे । न च कर्तृकर्मविरोधो नामास्तीत्यत्र किञ्चिन्मानम् । श्रुत्यनुभवसिद्धत्वाच्च स्वदर्शनादेः ।

न च शून्यवादिनः सकाशात् कश्चिद्विशेषो मायावादिनः

न च तेषां पक्षे प्रज्ञेन सर्वज्ञेन परमात्मना सर्वकामावाप्तिर्नामाङ्गीक्रियते शरीरादुत्क्रान्तस्य ज्ञानिनः । तस्माद् वेदविरुद्धवादिन एव तेऽपि । न च शून्यवादिनः कश्चिद्विशेषो दृश्यते । न हि सर्वावाच्यं सर्वाज्ञेयं शून्यं चेति कश्चिद्विशेषः । केनापि शब्देनावाच्यस्य लक्षणायामपि प्रमाणं नास्ति । क्षीरमाधुर्यादयोऽपि तैरेव शब्दैरुच्यन्ते ।

विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
गुडस्य पनसादीनां निर्हारीत्यभिधीयते ।। इति शब्दनिर्णये ।

न च सर्वगुणदोषक्रियाविनिर्मुक्तस्यास्तित्वमपि कुत्रचित् दृष्टम् । अतः शून्यवादिन एव तेऽपि ।

मुक्तावपि तारतम्यनिरूपणम्

'अस्तीत्येवोपलब्धस्य तत्वाभावः प्रसीदति' इत्यादिना प्रसादादिगुणाश्च भगवतो दृश्यन्ते । 'यस्य ब्रह्म च क्षत्रं च चोभे भवत ओदनः' इत्यादिना कर्माणि च । 'तस्मिन् देवाः श्रिताः सर्वे' इत्यादिगुणाश्च तत्रैवोक्ताः ।

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ।।
इति मुक्तानामपि तारतम्यं चोक्तम् ।

श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात् कर्णसंयुताः ।
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्ताश्च ये गणाः ।।

तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा ।
क्षीरसागरदध्नास्तु केचित् तिष्ठन्ति मुक्तिगाः ।।

उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।
ऐरे ह्रदे केचिदपि देवा एव परं हरिम् ।।

नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।
सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ।। इति ब्रह्मसारे ।

वेदेष्वपि मुक्तलोकवर्णनम्

यत्र ब्रह्मा पवमान छन्दस्यां ३ वाचं वदन् ।
ग्राव्णा सोमे महीयते
सोमेनानन्दं जनयन्निन्द्रायेन्दो परिस्रव ।।

यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम् ।
तस्मिन् मां धेहि पवमानामृते
लोके अक्षित इन्द्रायेन्दो परिस्रव ।।

यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्राभूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्त-
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

यत्र तत्परमं पदं विष्णोर्लोके महीयते ।
देवैस्सुकृतकर्माभि
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामा-
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

विष्णुलोके देवानां अवस्थाननिरूपणम्

इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवो देव्या अवरोधभूतानां सर्वदेवानां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते । मुक्ताश्चात्रोच्यन्त इति प्रतीयते । अमृतं कृधीति वचनात् । अमुक्तानां स्वे स्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽवस्थानं देवानाम् ।

श्रुतिसूत्रेष्वपि मुक्तभेदनिरूपणम्

'मुक्तः प्रतिज्ञानात्' 'सङ्कल्पादेव च तच्छ्रुतेः' 'जगद्व्यापारवर्जम्' 'भोगमात्रसाम्यलिङ्गाच्च' 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इत्यादिसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । ग्राव्णा सोमे महीयते इति ब्रह्मणोऽन्यमुक्तैः पूज्यत्वं च प्रतीयते ।

सूत्राणां निर्णायकत्वात् तदनुगुणं श्रुत्यर्थो युक्तः

न च सूत्रेषु निश्चितार्थस्यौपचारिकत्वं वक्तुं युज्यते । निर्णयात्मकत्वात् तेषाम् । अतिप्रसङ्गश्चोपचारादिकल्पने । 'ब्रह्मसूत्र-पदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति हि विनिश्चितानि ब्रह्मसूत्राणि ।

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ।।
इति आदित्यपुराणे ।

मुक्तौ सुखभोगनिरूपणम्

न च निर्णयकानि भगवद्वाक्यान्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि कल्प्यम् । न च भोगरहिता मुक्तिर्नामान्याऽस्तीत्यत्र किञ्चिन्मानम् ।

भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।
तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ।।

विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः ।
न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन ।।
बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन ।
विष्णोर्देहाद् बहिश्चापि निर्गच्छन्ति यथेष्टतः ।। इति स्कान्दे ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।
इति भगवद्वचनम् ।

तस्मात् मुक्तैरपीज्यमानः सर्वस्माद् भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुणसम्पूर्णो नारायणः सर्ववेदादिषूच्यते इति सिद्धम् ।। ३ ।।

बृहतीसहस्राभिमानिनः प्रतिपाद्यदेवानां च निरूपणम्

उप.– तद्वा इदं बृहतीसहस्रं सम्पन्नम् तस्य यानि व्यञ्जनानि

यत्र तत्परमं पदं विष्णोर्लोके महीयते ।
देवैस्सुकृतकर्माभि
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामा-
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

विष्णुलोके देवानां अवस्थाननिरूपणम्

इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवो देव्या अवरोधभूतानां सर्वदेवानां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते । मुक्ताश्चात्रोच्यन्त इति प्रतीयते । अमृतं कृधीति वचनात् । अमुक्तानां स्वे स्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽवस्थानं देवानाम् ।

श्रुतिसूत्रेष्वपि मुक्तभेदनिरूपणम्

'मुक्तः प्रतिज्ञानात्' 'सङ्कल्पादेव च तच्छ्रुतेः' 'जगद्व्यापारवर्जम्' 'भोगमात्रसाम्यलिङ्गाच्च' 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इत्यादिसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । ग्राव्णा सोमे महीयते इति ब्रह्मणोऽन्यमुक्तैः पूज्यत्वं च प्रतीयते ।

सूत्राणां निर्णायकत्वात् तदनुगुणं श्रुत्यर्थो युक्तः

न च सूत्रेषु निश्चितार्थस्यौपचारिकत्वं वक्तुं युज्यते । निर्णयात्मकत्वात् तेषाम् । अतिप्रसङ्गश्चोपचारादिकल्पने । 'ब्रह्मसूत्र-पदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति हि विनिश्चितानि ब्रह्मसूत्राणि ।

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ।।
इति आदित्यपुराणे ।

मुक्तौ सुखभोगनिरूपणम्

न च निर्णयकानि भगवद्वाक्यान्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि कल्प्यम् । न च भोगरहिता मुक्तिर्नामान्याऽस्तीत्यत्र किञ्चिन्मानम् ।

भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।
तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ।।

विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः ।
न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन ।।
बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन ।
विष्णोर्देहाद् बहिश्चापि निर्गच्छन्ति यथेष्टतः ।। इति स्कान्दे ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।
इति भगवद्वचनम् ।

तस्मात् मुक्तैरपीज्यमानः सर्वस्माद् भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुणसम्पूर्णो नारायणः सर्ववेदादिषूच्यते इति सिद्धम् ।। ३ ।।

बृहतीसहस्राभिमानिनः प्रतिपाद्यदेवानां च निरूपणम्

उप.– तद्वा इदं बृहतीसहस्रं सम्पन्नम् तस्य यानि व्यञ्जनानि

यत्र तत्परमं पदं विष्णोर्लोके महीयते ।
देवैस्सुकृतकर्माभि
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामा-
स्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।

विष्णुलोके देवानां अवस्थाननिरूपणम्

इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवो देव्या अवरोधभूतानां सर्वदेवानां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते । मुक्ताश्चात्रोच्यन्त इति प्रतीयते । अमृतं कृधीति वचनात् । अमुक्तानां स्वे स्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽवस्थानं देवानाम् ।

श्रुतिसूत्रेष्वपि मुक्तभेदनिरूपणम्

'मुक्तः प्रतिज्ञानात्' 'सङ्कल्पादेव च तच्छ्रुतेः' 'जगद्व्यापारवर्जम्' 'भोगमात्रसाम्यलिङ्गाच्च' 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इत्यादिसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । ग्राव्णा सोमे महीयते इति ब्रह्मणोऽन्यमुक्तेः पूज्यत्वं च प्रतीयते ।

सूत्राणां निर्णायकत्वात् तदनुगुणं श्रुत्यर्थो युक्तः

न च सूत्रेषु निश्चितार्थस्यौपचारिकत्वं वक्तुं युज्यते । निर्णयात्मकत्वात् तेषाम् । अतिप्रसङ्गश्चोपचारादिकल्पने । 'ब्रह्मसूत्र-पदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति हि विनिश्चितानि ब्रह्मसूत्राणि ।

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ।।
इति आदित्यपुराणे ।

मुक्तौ सुखभोगनिरूपणम्

न च निर्णयकानि भगवद्वाक्यान्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि कल्प्यम् । न च भोगरहिता मुक्तिर्नामान्याऽस्तीत्यत्र किञ्चिन्मानम् ।

भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।
तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ।।

विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः ।
न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन ।।
बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन ।
विष्णोर्देहाद् बहिश्चापि निर्गच्छन्ति यथेष्टतः ।। इति स्कान्दे ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।
इति भगवद्वचनम् ।

तस्मात् मुक्तैरपीज्यमानः सर्वस्माद् भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुणसम्पूर्णो नारायणः सर्ववेदादिषूच्यते इति सिद्धम् ।। ३ ।।

बृहतीसहस्राभिमानिनः प्रतिपाद्यदेवानां च निरूपणम्

उप.– तद्वा इदं बृहतीसहस्रं सम्पन्नम् तस्य यानि व्यञ्जनानि

तच्छरीरम् । यो घोषः स आत्मा । य ऊष्माणः स प्राणः । एतद्धस्य वै तद्विद्वान् वसिष्ठो वसिष्ठो बभूव । तत एतन्नामधेयं लेभे । एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच । एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच । तस्मात् स तेन बन्धुना यज्ञेषु हूयते ।

बृहतीसहस्रोपासनया शतवर्षहरिध्यानफलम्

तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति । व्यञ्जनैरेव रात्रीराप्नुवन्ति । स्वरैरहानि । तद्वा इदं बृहतीसहस्रं सम्पन्नम् ।

बृहतीसहस्रोपासनया ब्रह्मप्राप्तिः

तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद । तद्योऽहं सोऽसौ । योऽसौ सोऽहं । तदुक्तमृषिणा सूर्य आत्मा जगतस्थस्थुषश्चेति । एतदु हैवोपेक्षेतोपेक्षेत ।। ४ ।।

।। इति श्रीमन्महैतरेयोपनिषत्सु द्वितीयारण्यके द्वितीयोऽध्यायः ।।

भा.– यावतीभिर्ऋग्भिः शंसिताभिः षट्त्रिंशत्सहस्राण्यक्षराणि भवन्ति यस्मात् कस्मादपि छन्दसस्तावत्यः शंसनीयाः । तदा सम्पादितं बृहतीसहस्रं भवति । तत्र या व्यञ्जनाभिमानिदेवता सैव सर्वप्राणिनां शरीराभिमानिदेवता स्वायम्भुवो मनुः । घोषाभिमानिदेवता सर्वजीवाभिमानी ब्रह्मा । ऊष्माभिमानी वायुः ।

### इन्द्रस्य बृहतीसहस्रोपासकत्वनिरूपणम्

व्यञ्जनानां शरीरस्य चाभिमानी मनुः स्मृतः ।
घोषाणां सर्वजीवानामभिमानी चतुर्मुखः ।।

ऊष्माभिमानी वायुश्च प्रतिपाद्यो जनार्दनः ।
एतेषामधिपं विष्णुं बृहत्युक्थस्य देवताम् ।।

उपास्यैव वसिष्ठोऽभूद् वसिष्ठः शक्र एव च ।
एतां विद्यां कौशिकाय भरद्वाजाय चादरात् ।।

एतद्विद्यावलेनैव विद्याधीशेन बन्धुना ।
यज्ञेष्वाहूयते नित्यमिन्द्रो विष्णुप्रसादतः ।।

### बृहतीसहस्रगतद्वासप्ततिसहस्रभगवद्रूपनिरूपणम्

षट्त्रिंशद्रूपवान् विष्णुर्व्यञ्जनेषु च संस्थितः ।
तान्येव विष्णुरूपाणि रात्रीनामपि देवताः ।।

एकैकं च सहस्रं तद्व्यञ्जनेषु च रात्रिषु ।
रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा ।।

षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि ।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ।।

द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः ।
शताब्दानामहोरात्रदैवतान्युत्तमानि च ।।

बृहतीसहस्रवर्णानामपि ध्यात्वाऽखिलान्यपि ।
शतवर्षहरिध्यानफलमाप्नोति पूरूषः ।।

### बृहतीसहस्रोपासनया देवलोकप्राप्तिः फलम्

एवं ज्ञात्वापि सम्पाद्य बृहतीनां सहस्रकम् ।
ज्ञानान्नारायणस्यैव प्रकृष्टज्ञानसन्ततेः ।।

स एव मे मयो विष्णुः प्रकृष्टज्ञानरूपकः ।
प्राधान्यं मयशब्दोऽयं वक्ति विष्णोः सदैव हि ।।

प्रधानोऽस्य हरिर्यस्मात् प्रज्ञारूपोऽधिदेवता ।
ब्रह्मामृतं च तेनायं ब्रह्मादिमय उच्यते ।।

सर्वोत्तमस्वरूपत्वाद्विष्णुरुक्तः स देवता ।
ब्रह्म पूर्णगुणत्वाच्च नित्यत्वादमृतं तथा ।।

एतादृशं तु यो विष्णुं प्रधानं वेत्ति सर्वदा ।
प्रज्ञादिभिर्गुणैः स्वस्मात् परेभ्यश्च सदाधिकम् ।।

प्रज्ञादेवब्रह्मामृतमयः स परिकीर्तितः ।
प्रज्ञादिमय एवं स भूत्वा देवान् क्रमेण च ।।

एति मारुतपर्यन्तान्मारुतेन च केशवम् ।
सम्पादनाच्च विद्याया अस्याः परत एव च ।।

### बृहतीसहस्रशरीरनाड्यहोरात्रिगतभगवद्रूपनिरूपणम्

द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः ।
बृहतीसहस्रसंस्थानि स्वरव्यञ्जनभेदतः ।।

तान्येव पुरुषस्थानि यस्मात् पुरुषसंस्थितम् ।
बृहतीसहस्रं तच्छंस्यं व्यज्यते न ह्यृते नरम् ।।

द्वासप्ततिसहस्राणि तान्येवाहर्निशासु च ।
विष्णुरूपाणि सूर्येऽपि त्वहोरात्रं हि सूर्यगम् ।।

तस्माद्योऽयमहं नामा सदाऽहेयत्वहेतुतः ।
स एवासौ सूर्यसंस्थः साक्षान्नारायणः प्रभुः ।।

योऽसौ सूर्यगतो विष्णुः सोऽहेयो भास्करादिभिः ।
एवं मनुष्यजीवेषु सूर्यादिषु च संस्थितः ।।

एक एव परो विष्णुरिति जीवसमीपगम् ।
ईक्षेन्नारायणं देवं सर्वजीवेश्वरेश्वरम् ।। इत्यैतरेयसंहितायाम् ।

प्रज्ञामयादीनां भगवन्नामत्वकथनम्

सम्पन्नस्य परस्तादेवानन्तरमेव । न पुनः कर्मान्तरेण शरीरारम्भ एवंविदो भवति । प्रज्ञामयो देवतामय इत्यादिपृथक् पृथङ्मय-शब्दोऽनिरुद्धादिचतुर्मूर्तीनामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति दर्शयितुम् ।

अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः ।
प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः ।।

अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनः पुनः ।
सङ्कर्षणोऽमृतं तस्माद् वासुदेवस्तु बृंहणात् ।।

जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः ।
एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः ।। इत्यादि चातुरात्म्ये ।

### बृहतीसहस्रोपासनस्य विष्णुसर्वोत्तमत्वज्ञानहेतुत्वकथनम्

सम्भूयेत्यत्र समित्युपसर्गात् बृहतीसहस्रसम्पादनानन्तरं भगवदाधिक्यं पुनराधिक्येन ज्ञायत इत्युक्तं भवति । भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति ।

द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात् ।
आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः ।।
प्राप्नोति देवताश्चैव केशवान्ताः क्रमेण तु ।
योग्या अस्याश्च विद्यायाः देवा ऋषय एव च ।।

इत्यादि सत्तत्त्वे ।

### भगवतः अहंनामकत्वकथनम्

बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि । पुरुषैरहेयत्वादहंनामकानि तान्येव सूर्ये स्थितानि यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादहंनामकानि । एतदेवोक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीपे ईक्षेत ।

### न च निरर्थकत्वमुपसर्गस्य

नात्र जीवेश्वराभेदो विवक्षितः । उप समीपे ईक्षेतेति समीपे दर्शनवचनात् । न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम् । न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित् । उक्तं च भगवता व्यासेन–

नानर्थकः स्वरो वापि वर्णो वा कुत्रचिद् भवेत् ।
पदं वाक्यं कुतश्च स्यान्नाल्पार्थमपि कुत्रचित् ।।

उच्चाराद्यर्थमपि वा नास्ति किञ्चित् स्वरादिकम् ।
महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा ।। इति ।

सुकरं च सर्वपदानामनर्थकत्वकल्पनम् । यैश्च वाक्यैरर्थवत्त्वं प्रतीयते तेषामप्यनर्थकत्वमेव स्याद् विशेषाभावात् । न च मानुषवाक्येन वेदपदानामानर्थक्यं कल्प्यम् ।

मुख्याभेदस्य नानेकविधतायुक्ता

जीवेश्वरैक्यङ्गीकारे योऽहं सोऽसावित्येव पूर्यते पुनर्योऽसौ सोऽहमिति व्यर्थम् । न ह्यस्य तेनैक्ये तस्यानेन भेदशङ्का भवति । अस्य तस्येति भेदाङ्गीकारे नाभेदो मुख्यः । किन्तु तदधीनत्वमेवान्यस्य भवति स्नेहविशेषो वा । चैत्रो मैत्रो मैत्रश्चैत्र इतिवत् । तत्र ह्युभयस्नेहापेक्षया पुनर्वचनं युज्यते । अभ्यासत्वे ह्येकप्रकारेण प्रयोगो दृष्टः । अत्र हि प्रयोगद्वैविध्यं दृश्यते ।

एकप्रकारा बहुशो वागभ्यास इतीरितः ।
अर्थान्तरार्था द्विविधा प्रयुक्तेति हि निर्णयः ।। इति गारुडे ।

अहंशब्दः न जीवपरः

अहंशब्दस्याहेयत्वाङ्गीकारे नराहेयत्वं सुराहेयत्वं चोच्यते इति न वैयर्थ्यम् । 'अः इति ब्रह्म तत्रागतमहमिति, न वा अहमिमं विजानाति, तस्योपनिषदहम्' इत्यादौ विष्णोरेवाहेयत्वेनाहंनामकत्वप्रसिद्धेः । अहंशब्दस्यास्मच्छब्दार्थकत्वेऽहमिमं न जानातीति न युज्यते । तस्य भूरिति शिरो भुव इति बाहू इत्यादिनाऽक्षिसंस्थो भगवानेव ह्यहंशब्दोदितः । न हि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते । हृदि स्थितमेव हि तस्य स्वरूपम् । जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवत् ।

### हृदि स्थितस्य जीवस्य शरीरप्रकाशकत्वनिरूपणम्

'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि' 'गुणाद्वालोकवत्' इति च सूत्रात् । 'आदित्ये हिरण्मयः पुरुषस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादि सूर्ये स्थितस्य विष्णो रूपमुक्त्वाऽक्षिस्थितस्यापि तस्यैतस्य तदेव रूपमिति कथनाच्च । 'स एष एवैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे' इत्यादि लोकाधिपत्यकथनाच्च । न हि कश्चिद् भिक्षुकः पातालाद्यधिपतिरित्यत्र किञ्चिन्मानम् ।

### सूर्यान्तर्गतस्य जीवभिन्नत्वकथनम्

तस्माद् भगवानेवाहेयत्वादहं नामा । 'चक्षुर्मित्रस्य वरुणस्याग्नेः' 'जगतस्तस्थुषश्चात्मा' इत्यादि जीवेभ्यो भेददर्शनाच्च ।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते ।। इति भारते ।

### न च देवतासु लयः उपासकस्य

देवता अप्येति प्राप्नोतीत्येव चार्थः । लयश्चेद्देवतास्वप्येतीति स्यात् । न च विनाशः पुरुषार्थः । मयट्शब्दस्य भगवत्प्राधान्यार्थत्वानङ्गीकारे सम्भूय देवता अप्येतीति ल्यप् न युज्यते । उपासनायास्तु सम्पन्नस्य परस्तादित्युक्तत्वात् पूर्वमेव सिद्धिः ।

### अभेदोपासनस्य अनर्थहेतुत्वकथनम्

सर्वस्माद्भिन्नमीशेशं जीवाभेदेन यः स्मरेत् ।
स यात्यन्धतमो घोरं नित्यातिशयदुःखदम् ।।

सर्वोत्तमं तु यो विष्णुं भिन्नं जानाति सर्वतः ।
नित्यानन्दमसौ याति वासुदेवप्रसादतः ।।
इति चैतरेयसंहितायाम् ।

अतः सर्वव्यतिरिक्तः सर्वोत्तमः सर्वगुणसम्पूर्णो नारायण इति सिद्धम् ।

सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः ।
अध्यायान्ते द्विरुक्तिः स्यात् पूर्वोक्तस्यावधारणे ।।
इति शब्दनिर्णये ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयारण्यके द्वितीयोऽध्यायः ।।

## ।। अथ द्वितीयारण्यके तृतीयोऽध्यायः ।।

### बृहतीसहस्रेषु पञ्चरूपिभगवदुपासनम्

उप.– ॐ यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्माद्धीदं सर्वमुत्तिष्ठति स सम्प्रतिवित् ।

भा.– योऽसौ नारायणो देवः परमात्मा सनातनः ।
नित्याततगुणत्वात् स आत्मेत्युक्तः सदा श्रुतौ ।।

नारायणादिरूपेण पञ्चधाऽवस्थितः सदा ।
सर्वस्योत्थापकत्वात् स उक्थमित्यभिधीयते ।।

बृहतीसहस्ररूपे च स उक्थे पञ्चधा स्थितः ।
पञ्चभेदं हि तच्छस्त्रं तृचाशीतित्रयं च यत् ।।

पूर्वापरं तृचाशीत्या इति पञ्चात्मकं हि तत् ।
प्रथमे पञ्चकाद्भागे स्थितो नारायणः स्वयम् ।।

ऋक्त्रयाशीतिके पूर्वे गायत्रीच्छन्दआत्मके ।
वासुदेवः स्थितो नित्यमृगशीतित्रये तथा ।।

द्वितीये वृहतीच्छन्दस्यसौ सङ्कर्षणः स्थितः ।
यस्यावेशबलेनैव जीवः सङ्कर्षणोऽपरः ।।

पृथिवीं बिभर्ति सततं तत्प्रसादात्तवैभवः ।
तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः ।।

प्रद्युम्नरूपी सततं स्थितो यस्यैव सन्निधेः ।
कामः प्रद्युम्ननामाऽभूत् तत्प्रसादात्तवैभवः ।।

उक्थस्यैवान्त्यभागे तु सोऽनिरुद्धो हरिः स्थितः ।
कामपुत्रोऽनिरुद्धाख्यं यदावेशेन लब्धवान् ।।

एवं पञ्चात्मकं विष्णुं बृहत्युक्थस्य देवताम् ।
यो वेद सम्यग्वेत्ता स ......... .........

पञ्चभूतेषु पञ्चरूपिणो हरेरुपासनम्

उप.– पृथिवी वायुराकाश आपो ज्योतींषीत्येव वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येत्ययनं ह वै समानानां भवति य एवं वेद ।

भा.– .......... ........ तानि रूपाणि वै हरेः ।।

स्थितानि पञ्चभूतेषु पृथिव्याद्यभिधानि च ।
तदावेशात् पृथिव्यादिनाम भूतेषु पञ्चसु ।।

पृथुत्वात् पृथिवीनामा भूमौ नारायणः स्थितः ।
बलज्ञानस्वरूपत्वाद् वायुनामा स एव च ।।

वायौ सङ्कर्षणो नित्यं स्थित आकाशनामकः ।
व्याप्तत्वाद्वासुदेवस्तु सदाकाशे स्थितः प्रभुः ।।

अनिरुद्धस्तथैवाप्सु बहुरूपो व्यवस्थितः ।
अम्नामा पालनान्नित्यं प्रद्युम्नो ज्योतिषि स्थितः ।।
ज्योतिर्नामा द्योतनाच्च बहुरूपः पृथक् पृथक् ।

पञ्चरूपधारणं हरेर्लीलैव

यद्यप्यस्य हरेः सर्वरूपाण्यप्यखिलैर्गुणैः ।।

पूर्णान्यथापि चैकैकरूपेषु स पृथग्गुणैः ।
व्यवहारान्पृथग्देवः करोतीव हि लीलया ।।

तस्मात् पृथगिवास्येति नाम विष्णोः परात्मनः ।
सर्वत्र सर्वनाम्नोऽपि व्यवहारार्थमीर्यते ।।

पञ्चरूपोपासनस्य फलकथनम्

एतस्माद्धि हरेर्नित्यं जगदुत्तिष्ठति प्रभोः ।
मुक्तौ लये च तं याति स च सर्वाश्रयः प्रभुः ।।

य एवं वेत्ति तं विष्णुमुपास्ते चापरोक्षतः ।
स मुक्तः समजातीनामाश्रयश्च भविष्यति ।।

स्वजातीनामुत्तमत्वपदयोग्या हि ये सुराः ।
ब्रह्मेन्द्राद्यास्ते हि योग्याः साक्षादस्मिन्नुपासने ।।
अन्येषां ज्ञानमात्रेण योग्यमाधिक्यमाप्यते ।

भोजने पञ्चरूपोपासनम्

उप.– तस्मिन् योऽन्नं चान्नादं च वेदाहास्मिन्ननादो जायते । भवत्यस्यान्नमापश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ।। ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश आकाशे हीदं सर्वं समोप्यत आवपनं ह वै समानानां भवति य एवं वेद ।

भा.– सङ्कर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ ।।
भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः ।
नारायणानिरुद्धौ तौ भोग्यवस्तुषु संस्थितौ ।।
तर्पकौ सर्वलोकानां तस्माद्भोग्यौ न चर्व्यतः ।
अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः ।।
एवं पञ्चात्मकं विष्णुं य उपास्ते सदैव च ।
अवकाशप्रदः सोऽपि स्वजातीनां भविष्यति ।।
भोक्ता चाप्यायकश्चैव तस्य विष्णोः प्रसादतः ।
ब्रह्मेन्द्राद्याः स्वजातीयपदयोग्या अमुष्य च ।।
योग्या उपासनस्य स्युस्तदन्ये ज्ञानमात्रके ।

उप.– तस्मिन् योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भव-त्यस्यान्नमोषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधिवनस्पतीन् हि

प्राणभृतोऽदन्ति । तेषां य उभयतोऽदन्ताः पुरुषस्यानुविधां विहिता-स्तेऽन्नादाः अन्नमितरे पशवस्तस्मात् त इतरान् पशूनधीव चरन्त्य-धीव ह्यन्नेऽन्नादो भवत्यधीव ह समानानां जायते य एवं वेद ।। १ ।।

भा.– सङ्कर्षणश्च प्रद्युम्नो जङ्गमेषु व्यवस्थितौ ।।

नारायणानिरुद्धौ तु स्थावरान्तर्गतौ प्रभू ।
तत्राप्याकाशगो नित्यं वासुदेवो निरञ्जनः ।।

प्राणानां भरणान्नित्यं प्राणभृन्नाम तद्धरेः ।
न ह्यन्यः प्राणभर्ताऽस्ति तमृते पुरुषोत्तमम् ।।

ओषणाच्च निधानाच्च स एवौषधिनामकः ।
वननीयपतित्वाच्च स एव हि वनस्पतिः ।।

अन्ने स्थित्वा तृप्तिदत्वं तस्याद्यत्वमपीष्यते ।
पुरुषस्य हरेर्ये तु सदाकारेण संस्थिताः ।।

देवगन्धर्वमर्त्याद्यास्तेषु सङ्कर्षणो हरिः ।
प्रद्युम्नश्च स्थितो नित्यं पुरुषाकृतिरेव तु ।।

तौ भोक्तारौ च भोग्यानां भोजकावखिलस्य च ।
नारायणानिरुद्धौ तु तथान्यपशुषु स्थितौ ।।

वृषभाश्वादिरूपेण तृप्तिदावखिलस्य च ।
वाहनोपानहादीनामारोढारो नरादयः ।।

यतः सङ्कर्षणश्चैव प्रद्युम्नस्तेषु संस्थितौ ।
ततस्तयोर्हि सञ्चार उपरीव भविष्यति ।।

आकाशगो वासुदेवः पञ्चमोऽत्राप्युपास्यते ।
वाहनादियुतो मुक्तौ भवेदेतदुपासकः ।। इत्यैतरेयसंहितायाम् ।

अन्नान्नादप्रकरणयोर्भगवत्परत्वनिरूपणम्

आत्मशब्दाच्च न भूतमात्रमत्रोच्यते । न च मुख्यार्थं परित्यज्योपचारार्थोऽङ्गीकर्तव्यो विरोधाभावे । सर्वनामवत्त्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र । वपनीरोमकरणावकाशप्रदानबीजवर्धनेषु इति च धातुः ।

परकीयव्याख्यानस्यासामञ्जस्यकथनम्

तस्मिन् पञ्चके योऽन्नमन्नादं च वेद सोऽस्मिन् स्वजातियूथे विशेषेणान्नाद आजायते ह । तस्मिन् वेद अस्मिन्नाजायत इति पृथक् पृथक् पुनः पुनर्विशेषणादुपासकस्य स्वजातिसन्निधानाच्च स्वजाताविति ज्ञायते ।

क्षीराब्धिशयनं विष्णो रूपं यत्पुरुषाभिधम् ।
सङ्कर्षणश्च प्रद्युम्नस्तदाकारौ नृषु स्थितौ ।।
नारायणानिरुद्धौ तु पश्वाकारौ पशुस्थितौ ।। इति सत्तत्त्वे ।

गुणवैशेष्याभावेन वाहनादिषु चरणमात्रादधीव चरन्तीत्यादाविवशब्दः ।। १ ।।

तारतम्यानुगुणं भगवत्सन्निधानकथनम्

उप.– तस्य य आत्मानमाविस्तरां वेद । अश्नुते हाऽऽविर्भूय ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् । स आत्मानमाविस्तरां

वेद । ओषधिवनस्पतिषु हि रसो दृश्यते । चित्तं प्राणभृत्सु । प्राणभृत्सु त्वेवाविस्तरामात्मा । तेषु हि रसोऽपि दृश्यते । न चित्तमितरेषु । पुरुषे त्वेवाविस्तरामात्मा । स हि प्रज्ञानेन सम्पन्नतमः । विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनम् । वेद लोकालोकौ । मर्त्येनामृतमीप्सत्येवं सम्पन्नः । अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम् । न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ । त एतावन्तो भवन्ति । यथाप्रज्ञं हि सम्भवाः ॥ २ ॥

भगवत्सान्निध्ये तारतम्यनिरूपणम्

भा.– आविर्भावं तारतम्याद्यो वेद परमात्मनः ।
स तस्यैव विशेषेण प्रीतियोगाद् भविष्यति ॥

स्थावरं जङ्गमं चैव भूयस्त्वेनाश्नुते हरिः ।
आविर्भूतस्तेषु सदा सम्यक्स्वात्मानमेव च ॥

तारतम्यात् सन्निहितं सर्वभूतेषु केशवः ।
वेत्त्येक एव विष्णोर्यद्विशेषावेशनं सदा ॥

जङ्गमेषु च वृक्षेषु नैव तादृक्शिलादिषु ।
तस्माद् वृक्षादिषु रसश्चित्तं चलनवत्सु च ॥

दृश्यते न शिलाद्येषु सन्निधिर्न हि तादृशी ।

न हि सन्निहितभगवद्रूपेषु तारतम्यम्

शिलाद्येषु स्थितो विष्णुर्भारदार्ढ्यादिकारणम् ॥

नैव चित्तादिकस्यातो वृक्षाद्या उत्तमास्ततः ।
विशेषोऽयं पदार्थानां न तु विष्णोः कदाचन ।।

यत्र विष्णुर्गुणाधिक्यं दर्शयेद् वस्तु तद्वरम् ।
गुणपूर्णो हि सर्वत्र स्वयं विष्णुः सनातनः ।।

वृक्षेभ्योऽप्यधिकं विष्णुर्जङ्गमेषु प्रकाशितः ।
तेभ्योऽपि पुरुषे विष्णुर्गुणाधिक्यप्रकाशकः ।। इत्यादि च ।

य आत्मानं परमात्मानमाविस्तरां आविर्भावतारतम्येन वेद स तस्य विष्णोरेव । सर्वेषां तदीयत्वेऽपि प्रियत्वात् तदीयत्वविशेषणम् । ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् तत्सर्वं शिलादिभ्यो भूयस्त्वेन तेष्वाविर्भूतोऽश्नुते भगवान् । स एव च नारायणः सम्यक् स्वात्मानमाविस्तरां वेद । अन चेष्टायामिति धातोश्चेष्टावत्त्वमेव प्राणभृत्त्वं पश्वादीनाम् । ज्ञानानुसारेण ह्युत्पत्तयः सम्भवाः ।।

आगतेऽप्यैश्वर्ये न भगवद्विस्मृतिः कार्या

उप.– स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेत्येनं मन्यते । यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत ।

भा.– योऽस्मिन् पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान् स एष पुरुषः समुद्रः समुद्रिक्तोऽन्येभ्यः । स जीवो यद्यपि भगवत्प्रसादात् सर्वलोकाधिपो भवति । सर्वलोकानतीत्य यत्किञ्चिदलौकिकं मोक्षाख्यमप्यश्नुते । तथापि तमेनमात्मशब्देन प्रस्तुतं विष्णुमत्येव मन्यतेऽधिकमेव मन्यते स्वात्मनः सर्वस्माच्च । मुक्तोपि न तेन साम्यं

तद्भावं वा मन्यते । 'कृष्णो मुक्तैरिज्यते वीतमोहैः' 'मुक्तानां परमा गतिः' 'अमृतस्यैष सेतुः' इत्यादिवाक्याच्च ।

यद्यपि देवलोकाधिपत्यं तद्योग्यस्य विष्णुर्ददाति तदप्यश्नुवीतैव । बहुगणिकादिपरिवाररूपमशुचीदं पदमित्यादिबुद्ध्या नापह्नुवीत । एनं भगवन्तमतिमन्येतैव सर्वथा स्वतः सर्वस्माच्चाधिकमेव मन्येत । यद्यमुं लोकमश्नुते प्राप्नोति अश्नुवीत भुञ्जीत ।

पृथिवीलोकाधिपत्येऽपि विष्णोराधिक्यं सत्पुरुषो मन्यत इति प्रत्यक्षसिद्धत्वान्न पृथगुक्तम् । अतिशब्दाद्यद्ध किञ्चेति प्रथमोक्तो मोक्ष इति सिद्धम् । अन्तरिक्षप्राप्तेरल्पत्वान्मोक्षे स्वतः सिद्धत्वाच्चातिमन्यते इति सिद्धवचनमेव कृतम् । स्वर्गादिप्राप्तेरधिकैश्वर्याद् भगवत्समोऽहं भगवत्स्वरूप इति वा मन्तुं प्राप्तिरस्तीत्येवैनं मन्येतेति सावधारणा विधिः ।

नहि देवैरतिसम्पदपेक्षा क्रियते

न च मन्यते इति काममात्रम् । मनु अवबोधन इति धातोः । न ह्यवबोध एव कामः । अन्यथा राज्यं जानन्नपि राज्यकाम इति स्यात् । न च मन्यते मन्येतेति द्विविधः प्रयोगस्तस्मिन् पक्षे युज्यते । न च सर्वलोकमतीत्याश्नतो मुक्तस्य मुक्तेरन्यत्र कामो विद्यते । सर्वलोकाधिकं च मुक्तिं विना नान्यत् । तस्मान्मुक्तैरमुक्तैरपि भगवान् सर्वोत्तमत्वेन चिन्त्य इति सिद्धम् ।

शरीरे पञ्चरूपिणो हरेस्सन्निधाननिरूपणम्

उप.– स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपः । यच्छरीरं सा

पृथिवी । यः प्राणः स वायुः । स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः । ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति । प्राणस्य ह्यन्वपायमेता अपि यन्ति ।

भा.– पुरुषस्थपञ्चभूतेषु पञ्चरूपो हरिः स्थितः ।
प्रद्युम्नादिस्वरूपेण ज्योतिरादौ पृथक् पृथक् ।।

स एव च पुनर्वायौ पञ्चधाऽवस्थितः प्रभुः ।
प्राणादिरूपे वसति ह्यनिरुद्धादिरूपवान् ।।

अनिरुद्धः स प्रद्युम्नस्तथा सङ्कर्षणः प्रभुः ।
वासुदेवो नारायणः पञ्चरूप इति क्रमात् ।।

पञ्चरूपोऽपि भगवान् यस्माद्वायौ विशेषतः ।
स्थितस्तेन च खादिभ्यो वायुरेव विशिष्यते ।।

अत एव पृथिव्यादिस्वरूपा मनआदयः ।
देवाः प्राणाश्रिता नित्यं गच्छन्ति प्राणमन्वपि ।।

पृथिवीमयं मनस्तत्र शेषवीन्द्रशिवेन्द्रकाः ।
कामानिरुद्धौ देवगुरुर्मनोदेवाः सचन्द्रकाः ।।

श्रोत्रमाकाशरूपं च मित्रधर्मजलाधिपाः ।
कुबेरश्च दिशां देवाः श्रोत्रदेवा इति श्रुताः ।।

ज्योतीरूपं तथा चक्षुश्चक्षुर्देवो रविः स्मृतः ।
किञ्चित् तेजोयुता वाक्च विशेषेण त्ववात्मिका ।।

उपचीयते ततः साऽद्भिस्तदभावे च शुष्यति ।
तृषितस्य हि वागेव पूर्वं मन्दा प्रवर्तते ।।

वाग्देवते ततो वह्निरुमा चापि प्रकीर्तिते ।
चक्षुष्ट्वमग्नेः श्रोत्रत्वं चन्द्रस्यापि सहोच्यते ।।

स्वाहाया अपि वाक्त्वं च पर्जन्यस्य मनःस्थितिः ।
द्वितीयमेतदास्थानं श्रुतिवाक्यप्रमाणतः ।।

शेषवीन्द्रशिवादीनां मनआदिस्वरूपिणाम् ।
आश्रयो वायुरेवैकस्तस्य नारायणः स्वयम् ।।

यज्ञे पञ्चरूपिणो हरेस्सन्निधाननिरूपणम्

उप.– स एष वाचश्चित्तस्योत्तरत्तरिक्रमो यद्यज्ञः । स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः । स एव यज्ञानां सम्पन्नतमो यत्सोमः एतस्मिन् ह्येताः पञ्चविधाः अधिगम्यन्ते यत् प्राक्सवनेभ्यः सैका विधा त्रीणि सवनानि, यदूर्ध्वं सा पञ्चमी ।। ३ ।।

भा.– तस्माद् वायुवशानां हि वाक्चित्तादिस्वरूपिणाम् ।
देवानां क्रमवृत्तिभ्यो जाते यज्ञेऽपि केशवः ।।

अग्निहोत्रादिके नित्यमनिरुद्धादिरूपकः ।
पञ्चधाऽवस्थितः सोमे पञ्चरूपो व्यवस्थितः ।।

सवनत्रयात् पूर्वके च सवनत्रितये परे ।
अनिरुद्धादिरूपेण क्रमेणैव व्यवस्थितः ।।

ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते ।
जानन्ति न स्वतस्तेन नेदन्द्रास्ते प्रकीर्तिताः ।।

रमापि तत्प्रसादेन जानाति किमुतापरे ।
अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः ।।

रमाजशङ्करेन्द्राद्यास्तेनानिन्द्राः क्रमेण ते ।
पापैरज्ञाततां देवा मानयन्ति सदात्मनः ।।

हर्षेण तेन विष्णुः स इन्द्र इत्यभिशब्द्यते ।
नेदन्द्रताऽसुरादीनां ज्ञायेतेति श्रुतिर्हरिम् ।।
इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम् ।।

इत्याद्यैतरेयसंहितायाम् ।

आत्मशब्दवाच्यो नारायण एव

आततगुणत्वादात्मा नारायणः । ब्रह्म पन्थाः सत्यं कर्मेति तस्यैव पञ्चरात्रप्रसिद्धैरेव नामभिरारब्धत्वाच्च ।

मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः ।
अनिरुद्धतनुश्चैव तत्र ह्यमितचेष्टितः ।।

कर्माभासा जीवसङ्घाः सत्यं प्रद्युम्ननामकः ।
सङ्कर्षणो हरिः पन्थाः ब्रह्मोक्तो वासुदेवकः ।।

इत्यादिनामनिर्णये ।

'मत्सीन्द्रमिन्दो पवमान विष्णुम्' इत्यादिश्रुतौ तस्मिन्नेव प्रसिद्धस्येन्द्रशब्दस्य बहुशोऽभ्यासाच्च । अकारस्य च विष्णावेव प्रसिद्धस्यात्राप्यभ्यासात् । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी

इति सूर्यमण्डले पुण्डरीकाक्षत्वेन निर्दिष्टस्यात्रापि य एष तपतीत्यादिना बहुशोऽभ्यासाच्च । सूर्यो हि हिरण्याक्षः । सविता देव आगादिति पिङ्गलाक्षः प्रसिद्धः ।

विरूपाक्षः शिवः सूर्यः सुराचार्यो विनायकः ।
पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ।। इति च स्कान्दे ।

यो देवानां नामधा एक एव । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति । यमिन्द्रमाहुर्वरुणं यमाहुः ।

चन्द्रसूर्यादयः शब्दा विष्णावेव हि मुख्यतः ।
उपचारात् तदन्येषां विष्णुनैव कृताः पुरा ।।

इत्यादिना तस्यैव सर्वनामवत्वाच्च ।

णकारो बलं षकारः प्राण आत्मेत्यादिनान्तेऽपि विष्णुशब्द-व्याख्यानेनोपसंहाराच्च ।

आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न वर्तन्ते तदन्यत्र शृङ्गिबेरेऽग्निशब्दवत् ।। इति च पाद्मे ।

एको नारायण आसीन्न ब्रह्मा न च शङ्करः ।
एको नारायण आसीन्न ब्रह्मा नेशानः ।
वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः ।।
इत्यादि श्रुतिभ्यश्च ।

भगवानेक एव स्वतन्त्रः

अग्रशब्दो गुणाधिक्यवाची । इदं रमाब्रह्माशिवादिकं सर्वं जगदपेक्ष्या-

त्मैवाग्रे विष्णुरेवाग्र्यः सर्वगुणैरित्यर्थः । तत्र हेतुस्तदन्यत् किञ्चिन्न मिषदासीत् । सर्वस्याप्युन्मेषणं नासीदित्यर्थः । स्वत उन्मेषणं कस्यापि नास्ति । अस्तिशब्दवदासीच्छब्दोऽपि सर्वकालसाधारणः । भगवत्प्रसादादेव सर्वदा सर्वं किञ्चिदुन्मिषति । स्वातन्त्र्येण पूर्णोन्मेषो विष्णुरेव ।

उन्मेषो गुणसम्पूर्तेरुद्रिक्तानुभवः स्मृतः ।
तदेव मिषणं नाम सद्रूपं मिनुते यतः ।।

मिषच्च नान्यद्विष्णोर्हि किमुतोन्मिषदिष्यते ।
उच्चैर्मिषन् हि भगवान् सर्वदैव जनार्दनः ।। इति च सत्तत्त्वे ।

नास्ति नारायणसमं न भूतं न भविष्यति । इति च भारते ।

भगवतः न केवलं कालज्येष्ठत्वं गुणतः श्रेष्ठत्वञ्च

सर्वजीवानां रमायाश्च प्रलयेऽपि विद्यमानत्वादेव नाग्र इति कालापेक्षया । तदधीनमिषत्वादन्येषामग्र्यः स एवेत्याशयः । तदधीनत्वमेव तेषां सृष्ट्यादिना दर्शयति । स्थूलशरीरस्य पूर्वाभावस्तत एवार्थतः सिद्ध्यति ।

प्रलयेऽप्यखिलं देवी रमा विष्णुप्रसादतः ।
जानाति नित्यज्ञानेन मुक्ता ध्यानस्थिता लये ।।
इति च सत्तत्त्वे ।

ब्रह्मादीनां शरीरान्तरस्यापि प्रलयेऽनुक्तेरेवाभावः सिद्ध्यति ।

आत्मा ब्रह्माग्र इत्यादि गुणाग्र्यत्वं हरेर्वदेत् ।
कालज्यैष्ठ्यं न यस्मात् तत्सृष्ट्युक्तेरेव सिध्यति ।।
इति वाक्यनिर्णये ।

गुणाग्र्यतायामेव कालज्यैष्ठ्यस्याप्यन्तर्भावाच्च ।

## लोकनामनिर्वचनम्

अं विष्णुं बिभर्तीत्यम्भो विष्णुलोको दिवः परे महदादयश्च । दिव्यपि भगवान् प्रतितिष्ठतीति प्रतिष्ठा । तेषु सर्वेषु प्रत्यक्षतश्चरति विष्णुस्तस्मादम्भ इत्युच्यते । दिवः परे द्यौश्चाम्भोनामका इत्यर्थः । सूर्यमरीचीनां तत्र विशेषेण विततत्वादन्तरिक्षं मरीचयः । मरीचीनामयनात् । पृथिव्यां क्षिप्रं मरन्तीति पृथिवी मरः ।

भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः सुरान् प्रभुः ।
लोकभेदांश्च चक्रेऽत्र पश्चाद् ब्रह्मा विशेषतः ।।
सम्यक्चकार लोकांस्तांल्लोककर्ता ततः स च ।। इति ब्रह्मवैवर्ते ।

## देवानां अप्शब्दवाच्यत्वकथनम्

या अधस्तात् पूर्वमेव सृष्टा देवतास्ता आप इत्युच्यन्ते । आप इत्याप इतीति पूर्वं भगवदङ्गसृष्टानामेवाप्शब्देनोक्तेः । अयं पितैते पुत्रा इति च । आहं मां देवेभ्यो वेद ओमहेवान् वेदेति च ।

ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ ।
शिवस्तद्दयिता शक्रकामौ तद्दयितादयः ।।
सर्वे सुराः क्रमेणैव विष्णोर्जाता अवाख्यकाः ।

## चेतनतारतम्यनिरूपणम्

ज्ञानानन्दवलाद्येषु विष्णुभक्तौ च सर्वशः ।।
हीनाः शतगुणेनैव क्रमेणानेन ते मताः ।
तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च ।।

विशेषतस्तु मुक्तानां सर्वसंसारबन्धनात् ।
क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभोगिनाम् ।।

न विशेषो ब्रह्मवाय्वोरधिकाराविभेदतः ।
न शेषशिवयोश्चैव तत्पत्नीनां च सर्वशः ।।

सुपर्णशेषयोश्चैव साम्यं सर्वगुणेष्वपि ।
साम्यमेवैतयोः पत्न्योः साम्यं शक्रमनोजयोः ।।

लोकपालत्वं देवानामेव

एते तु महादादीनां सर्वेऽपि ह्यभिमानिनः ।
पूर्वस्य प्रतिबिम्बश्च चरमस्तत्सुतस्तथा ।।

तद्वशाश्चाखिला विष्णोर्न विष्णुः कस्यचिद्वशे ।
महदादिमानिनश्चैते जातास्तैः सह सर्वशः ।।

एते लोका इति प्रोक्ता लोकानामभिमानिनः ।
त एव लोकपालाश्च यदा पश्चाद् प्रजज्ञिरे ।।
पश्चाज्जातैर्हि रूपैस्तैर्लोकस्थान् पालयन्त्यलम् ।।
इत्यादि तत्त्वसारे ।

देवानामशनापिपासानिरूपणम्

अमूर्च्छयत् मूर्तमकरोत् । अग्निर्वाग् भूत्वेत्यादिना पश्चादैक्यप्रतीतेरेकस्यैव रूपद्वयं तदिति प्रतीयते । प्रजानीहि प्रकर्षेणानुजानीहि । अन्नदेवता च सर्वदेवतायुक्तो विरिञ्च एव । ग्रसनं चैतस्मिन् प्रवेश एव । न तु पीडा तस्य । एक एव हि ब्रह्मा भोक्तृभोज्यत्वेन स्थितो भोज्यरूपेणैकीभूयातितरां मुमोदेत्यर्थः । देवानामुपद्रवाभावाद्

भोक्तृत्वशक्तियोजनमेवाशनापिपासाभ्यामन्ववार्जनम् । वायुरेव च भोक्तृत्वशक्तिरूपः ।

भगवत्प्रेरणयैव वागादीनामभिव्याहरणादिशक्तिः

यदि वागादीनामेवाभिव्याहरणादिशक्तिः स्यान्मां विना तर्हि विष्णुत्वं न मम स्यात् तस्मात् कोऽहं भवानीत्याक्षेपः । विशेषेण प्राणयति सर्वान् सर्वेभ्यो विशिष्टश्चेति हि विष्णुः । णकारो बलं षकारः प्राण आत्मेति व्याख्यानात् । तस्मान्मत्प्रेरिता एवैते अभिव्याहारादिशक्ता इत्यभिप्रायः ।

भगवति नाज्ञानदुःखादयः

पूर्णानन्दस्वरूपत्वान्नन्दनो भगवान् । प्रादुर्भावरूपेण जातोऽपि भगवान् सर्वभूतान्यभितः सर्वकालेषु विशेषेण पश्यत्येव । इह भूतेषु मत्तोऽन्यं प्रवर्तकं वदेत् किमित्याक्षेपः । अहमेव स्वतन्त्रः परिपूर्णगुण इति कृष्णराघवादिसर्वावताररूपेऽपि सर्वदानुभवत्येव ।

नायं दशरथाज्जातो न चापि वसुदेवतः ।
क्वास्याज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभोः ।।

प्रादुर्भूतश्चिदानन्दशरीरो राघवः स्वयम् ।
स्तम्भाद्वा नरदेहाद्वा नैवास्य प्राकृती तनुः ।।

दैत्यानां मोहनार्थाय सोऽज्ञानाद्यं प्रकाशयेत् ।
पूर्णचित्सुखरूपोऽपि सदा सर्वावतारगः ।। इत्यादि स्कान्दे ।

भगवान् सर्वदा स्वात्मानं पश्यति

एतमेव पुरुषं व्यासकृष्णकपिलराघवादिरूपं ततममपश्यत् । ततमं

परिपूर्णतमं ब्रह्माऽपश्यत् । इदं मे स्वरूपमदर्शमेवाहमिति । रङ्गस्त्ववधारणे । 'रङ्गोऽवधारणे चैव संवादे च प्रयुज्यते' इति पदविवेके । अपश्यदित्यत्र नातीतकालत्वं विवक्षितम् । अभिव्यैख्यदित्यभिशब्दस्यानुषङ्गात् । अपश्यत् पश्यतीति चैककालसम्बन्धं विना वक्तुमशक्यत्वात् तथा प्रयोगः ।

प्रयोग एककालीनः सर्वकालेऽनुषज्यते ।
ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ।। इत्यादि सत्तत्त्वे ।

परोक्षप्रिया इवेत्यसुराणां सम्यगदर्शनेन पतनं देवानां प्रियं तथाऽप्यपरोक्षदर्शिन्येव प्रीतिं कुर्वन्तीतीवशब्दः ।। ३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयारण्यके चतुर्थोऽध्यायः ।।

## ।। अथ द्वितीयारण्यके पञ्चमोऽध्यायः ।।

### गर्भोत्पत्तिर्नाम भगवदुत्पत्तिः

उप.– (अपक्रामन्तु गर्भिण्यः) ॐ पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतम् । आत्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति ।। तदस्य प्रथमं जन्म । तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा । तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानमत्र गतं भावयति । सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति । स यत्कुमारं

जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येतेषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः ।

भा.– अयं नारायणो देवः पुरुषे प्रथमं विशेत् ।
अन्नस्थोऽन्नेन सहितस्तस्मिन् रेतस्त्वमागते ॥

तस्मिन् स्थितं स्वरूपं स पुरुषस्थो बिभर्त्यजः ।
तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः ॥

स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः ।
प्रथमं जन्म विष्णोस्तु स तस्या अङ्गवत् प्रभुः ॥

नैनां हिनस्त्यानुकूल्यात् सा पुत्रं भावयत्यथ ।
पुत्रस्य भावना सैव तद्गत्वाद् हरिभावना ॥

सम्भावितव्या सा चैव भर्त्रा पुत्रश्च सादरम् ।
सम्भावनं कुमारस्य जानतः केशवे भवेत् ॥

तस्येत्यर्पणमात्रेण पूजितो हि भवेद्धरिः ।
पुत्रस्थस्य हरेः पूजां कुर्वतः पृथिवीस्थितिः ॥

स्वर्गस्थस्यापि भवति पुत्रपुण्यं यतोऽखिलम् ।
अत्यल्पपुण्यभाक् स स्यान्नार्चयेत् केशवं यदि ॥

भगवतो जन्मत्रयनिरूपणम्

उप.– तदस्य द्वितीयं जन्म । सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म ॥ तदुक्तमृषिणा–

गर्भे नु सन्नन्वेषाममवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति ।।

गर्भ एवैतच्छयानो वामदेव एवमुवाच । स एवं विद्वानस्मा-च्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामा-नाप्त्वाऽमृतः समभवत् समभवत् (यथास्थानं गर्भिण्यः) ।। १ ।।

भा.–पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि ।
एतद्रूपं निधायैव जीवार्थे धर्मकर्तवे ।।

पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः ।
पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः ।।

अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम् ।
सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम् ।।

नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम् ।
यो वेद देहबन्धात् स विमुक्तो नित्यमुत्तमान् ।।
भोगान् भुङ्क्ते यथायोग्यमिति वेदानुशासनम् ।।
इत्यैतरेयसंहितायाम् ।

जीवदेहजनने देवानामपि जननम्

नात्र जीवोत्पत्तिमात्रमुच्यते । न हि जीवोत्पत्तिमात्रपरिज्ञाना-दमृतत्वं भवति । ज्ञातमेव सर्वैः पितापुत्रसम्बन्धमात्रं पश्वादिभिरपि । 'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा' इत्युक्तार्थ उदाहृतमन्त्रे देवजन्मकथनाच्च । विष्णुर्हि परमो देवः । तेनैव सह सर्वेऽपि देवा जीवदेहजनने जायन्त इव । शरीरप्राप्तिरेव हि जन्मान्येषामपि । अयमेव विशेषो देवानां दुःखाभोगः । स्वातन्त्र्यं च विष्णोः ।

### भगवतः शरीरप्रवेशनिर्गमनस्वरूपनिरूपणम्

आत्मन्येवात्मानं बिभर्ति आत्मानमेव तद्भावयतीत्याद्यात्मशब्दश्च मुख्यतो विष्णावेव युज्यते । णकारो बलं षकारः प्राण आत्मेति विष्णुशब्दार्थैकदेशवाचित्वाच्चात्मशब्दस्य । एतया द्वारा प्रापद्यतेति तस्यैव शरीरप्रवेशस्य प्रस्तुतत्वाच्च । जीवशरीरं परित्यज्यान्यत्रगमन-मात्रं विष्णोरप्यस्तीति प्रैतीत्युक्तेऽप्यविरोधः । कृष्णराघवादिस्वरूपमेव ह्यसौ न परित्यजति ।

### कृष्णावतारस्य न समाप्तिस्सञ्जाता

कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहवदेव च ।
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ।।

येन रूपेण कंसादीन् जघ्ने तद्रूपमेव हि ।
पूज्यतेऽद्यापि शर्वाद्यैर्निर्मिताऽन्या शवाकृतिः ।।

स्वर्गारोहणकाले तु जनास्तेनैव मोहिताः ।
यत्तद्रूपं निजं विष्णोर्दृष्टं सर्वजनैर्भुवि ।।
अद्यापि तद्देवलोके पूज्यते सर्वदैवतैः ।। इत्यादि स्कान्दे ।

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ।।
इति च भागवते ।

प्रेतां यज्ञस्य शम्भुवेत्यादिवत् प्रकृष्टगतिवाच्येवायं शब्दः । प्रकृष्टगतित्वादेव च मरणेऽपि प्रयुज्यते ।

### जीवेश्वरभेदनिरूपणम्

एषामवेदमहमित्यत्रापि जीवभेद एवोक्तः । अन्यथा मम जनिमानीत्येवोच्येत । व्यर्थता चैषामित्यादिविशेषणानाम् । अवेदमित्यनेनैव स्वस्य सिद्धत्वादहमित्यप्यहेयत्वेनेति क्रियाविशेषणम् । जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामीत्यर्थः । तस्मादहं मनुरित्यादावप्यहेयगुणं भगवन्तमेवाहंशब्दो वक्ति । सर्वान्तरत्वात् तस्मिन्नेवाभवमित्युत्तमपुरुषशब्दोऽपि सर्वो वर्तते ।

अहेयत्वादहं विष्णुः स तु सर्वान्तरत्वतः ।
अस्यस्मीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः ।। इति ब्रह्मवैवर्ते ।

### न च मूढव्यवहारः वेदनिर्णयाय भवति

न च मूढव्यवहार एव वेदनिर्णयाय भवति । किन्तु सर्वेषामनुभवो युक्तयश्च वाक्यान्तरं च निर्णयकारणम् । तस्मात् सर्वजीवादिभ्योऽन्यः सर्वोत्तमो विष्णुरेवात्रोक्तः ।

न वेदेषु पदं किञ्चिद्वर्णो वा व्यर्थ इष्यते ।
यथायोग्यं चार्थभेद ऊह्यः सर्वत्र वेदिभिः ।। इति शब्दनिर्णये ।।

शब्दा रेतोन्नमित्याद्या अपि तत्र गतं हरिम् ।
वदन्त्यविष्णुवाची हि न शब्दः कचिदिष्यते ।। इति च ।

### जीवोत्पत्तिज्ञानं नहि मोक्षसाधनम्

भावयति सम्भावयति । सोऽग्र एव सोऽग्र्यो विष्णुरेव । पुत्रसम्भावनमपि तत्रस्थं विष्णुं सम्भावयामीति तत्तस्यैव भवति । एवं भावयताभेवैष पन्था उरुगाय इत्याद्यपि । तं पश्यन्ति पशव इत्याद्यपि दिव्यपश्वादीनामेव । अन्येषां स्वभावप्रवृत्तिः ।

## गर्भवासदुःखान्मुक्तिः

ता एव देवताः शतं पुर आयसीर्ज्ञानिन्यो विशेषतः । अय पय गताविति धातोः । मानुषानपेक्ष्य पूर्णत्वात् पुरः । विष्णुर्मुख्यत एव पूर्णः । न च शरीरैर्जीवो रक्षितः । मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः । शमस्य विद्यते इति शी विष्णुः । पूर्णानन्दत्वात् । स एव ज्ञानत्वाद्यश्चेति श्यः । सोऽस्य जीवस्येन इति श्येनः । विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । निरदीयं निष्क्रम्यातीतोऽस्मि गर्भवासम् ।

## सर्वाभीष्टप्राप्तिः मोक्षे एव

स्वर् आनन्दो विष्णुः । अत्रग इति स्वर्गलोको विष्णुलोकः । अमृतः सन् सर्वान् कामानाप्त्वा तानेव सर्वान् कामान् समभवदनुभवति । अपेक्षितवस्तुस्वीकारः आप्तिः । सम्भवो भोगः । तां समभवत् ततो मनुष्या आजायन्तेत्यादिवत् । मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः । मुख्य एव चार्थः स्वीकार्यः । अमुक्तानां विष्णुलोकगानामपि न सर्वकामावाप्तिः । जयविजयादीनामप्रियदर्शनात् । अतोऽमृतः सन् सर्वान् कामानाप्त्वेत्यर्थः ।

> मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेष्टतः ।
> सर्वानपि निरातङ्कः सर्वदा च हरेर्वशः ।। इति सत्तत्त्वे ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयारण्यके पञ्चमोऽध्यायः ।।

## ।। अथ द्वितीयारण्यके षष्ठोऽध्यायः ।।

### भगवतो लक्षणनिरूपणम्

उप.– ॐ कोऽयमात्मेति वयमुपास्महे । कतरः स आत्मा । येन वा पश्यति । येन वा शृणोति । येन वा गन्धानाजिघ्रति । येन वा वाचं व्याकरोति । येन वा स्वादु चास्वादु च विजानाति ।

भा.– अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः ।
इत्यपृच्छद् रमा देवी महिदासं जनार्दनम् ।।

आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति ।
उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः ।।
येन जीवो दर्शनादीन् प्रेरितः कुरुते सदा ।

### भगवतस्त्रयोविंशति नामधेयानि

उप.– यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामोऽवश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानिमवन्ति ।

भा.– यो विष्णुर्हृदयमिति हृद्गतत्वात् प्रकीर्तितः ।।

मन्तृत्वान्मन इत्येव यच्च ज्ञातृस्वरूपतः ।
एतत्सन्निहितत्वाच्च पूर्णत्वादेति कीर्तितः ।।

इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः ।
गुणानामुच्चयो यस्मात् स च इत्येवशब्दितः ।।

सम्यग्ज्ञानस्वरूपत्वात् संज्ञानमिति कीर्तितः ।
आततज्ञानरूपत्वादाज्ञानं भगवान् हरिः ।।

विविधज्ञानरूपत्वाद्विज्ञानमिति कीर्तितः ।
प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यते ।।

अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः ।
धृतिर्धारणरूपत्वात् मतिर्मासु ततत्वतः ।।

मनुनाम्नामजादीनां मनीषेशो यतो हरिः ।
सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते ।।

सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः ।
समं रमत इत्येव स्मृतिर्नाम जनार्दनः ।।

सर्वस्य क्लृप्तिकर्तृत्वात् सङ्कल्प इति गीयते ।
क्रतुः स सर्वकर्तृत्वादसुरप्यसनाद्धरिः ।।

अमेयानन्दरूपत्वात् काम इत्यभिधीयते ।
अवशः स स्वतन्त्रत्वात् त्रयोविंशतिनामकम् ।।

यो वेदैवं हरिं सम्यङ् मुच्यतेऽखिलसंमृतेः ।

सकलमुक्तामुक्तप्रपञ्चस्य भगवद्वशत्वनिरूपणम्

उप.– ऐष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव वीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं

प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञाननेत्रम् । प्रज्ञाने प्रतिष्ठितम् । प्रज्ञानेत्रोऽलोकः । प्रज्ञा प्रतिष्ठा । प्रज्ञानं ब्रह्म ।

भा.– ब्रह्मा शिवश्च शक्रश्च देवाश्चान्ये समस्तशः ।।

तथैव पञ्चभूतानि पुण्यपापविमिश्रिताः ।
क्षुद्रात्मानस्तु ये मर्त्या इतरे असुरा अपि ।।

सर्वं जगदिदं विष्णोर्वशे तिष्ठति सर्वदा ।
तेनैव नीयते नित्यं तस्मिन्नेव प्रतिष्ठितम् ।।

मुक्ता येऽलोकनामानो नीयन्ते तेऽपि विष्णुना ।
स्वयं चानन्यनिष्ठत्वात् प्रतिष्ठेत्यभिधीयते ।।

देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।
विष्णोर्ब्रह्मेति नामैतन्मुख्यतोऽन्यत्र न क्वचित् ।।

भगवदुपासनाफलनिरूपणम्

उप.– स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान् कामानास्वाऽमृतः समभवत् समभवत् ।।

भा.– सोऽलोकनामा मुक्तास्तु चितिमात्रस्वरूपतः ।
प्रकृष्टज्ञानरूपस्य प्रसादात् परमात्मनः ।।

अस्माद्देहात् समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम् ।
अमृतः सन् विष्णुलोके भोगान् सम्प्राप्य पुष्कलान् ।।

भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम् ।।
इत्याद्यैतरेयसंहितायाम् ।

### कतरोनाम पूर्णानन्दस्वरूपः

जानन्त्यापि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च कोऽयमात्मेति पृष्टः स भगवानाह । कतरः स आत्मेति । कतरः आनन्दतमः । 'यत्रोभयोः प्रयोगो न तत्रैकार्थो तरप्तमौ' इति शब्दनिर्णये ।

### दर्शनादिकारणत्वमेकैकमपि भगवतो लक्षणम्

यत्प्रेरणादयं जीवो दर्शनादीन् करोति च । रमाब्रह्मादीनामपि तत्प्रेरितत्वात् । सर्वेषां दर्शनादिकारणत्वमेकैकमपि तस्य लक्षणं भवतीति वाशब्दः सर्वत्रानुषज्यते ।

### लिङ्गाभिमानित्वात् प्रजापतेः शिवत्वम्

प्रजापतिः शिवः लिङ्गाभिमानित्वात् ।

प्रजापतिः शिवः शेपे लिङ्गमित्यभिधीयते ।
लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ।।
इति शैवपुराणे ।

सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः ।
वाक्यं शिवस्य तत् श्रुत्वा शक्रो नेत्याह सत्वरः ।। इति भारते ।

### जीवा भिन्नस्वभावका इति निरूपणम्

क्षुद्रमिश्राणीव वीजानि शाल्यादिवीजवत् । भिन्नस्वभावा व्रह्मादयः सर्वजीवाः ।

ब्रह्माद्याः सर्व एवैते जीवा भिन्नस्वभावकाः ।
यथा शाल्यादिबीजानि भिन्नवीर्यानि सर्वशः ।। इति सत्तत्त्वे ।

प्रथमेतराणीतिशब्दो मानुषाणाम् । द्वितीयो सुरादीनाम् ।

मुक्तानां अलोक्यत्वादलोकत्वम्

प्रज्ञानेत्रोऽलोक इति । अलोकशब्देन मुक्तसमुदाय उच्यते । ब्रह्मादिस्थावरान्तस्य लोकस्य सर्वं तत्प्रज्ञाननेत्रमिति विष्ण्वधीनत्वस्य पूर्वमेवोक्तत्वात् पुनः प्रज्ञाननोत्रोऽलोक इति मुक्तविषयमेव । मुक्तो ह्यलोक्यत्वादलोकः ।

अश्मादीनामपि प्राणित्वात् जीवत्वमिति निरूपणम्

अण्डजानि चेत्याद्युक्त्वा पुनरश्वा गाव इत्यादि देवादीनां मन आदेरेव जातानामपि स्वीकारार्थम् । अण्डजत्वाद्युत्पत्तिप्रकारोऽपि विष्ण्वधीन इति ज्ञापयितुं तत्कथनम् । 'तथाऽश्मानस्तृणकाष्ठाश्च सर्वे दिष्टक्षये स्वां प्रकृतिं भजन्ते' इति भारतवचनादश्मादीनामपि प्राणित्वात् तत्स्वीकारार्थं प्राणीति । गमनपतनस्थिरत्वादयोऽपि भावा विष्ण्वधीना इति ज्ञापयितुं जङ्गममित्यादिवचनम् ।

मुक्ताः सर्वात्मना भगवदधीनाः

स एतेनेत्यलोकशब्दोक्तो मुक्तः परामृश्यते । सकलकर्ममुक्त्यनन्तरं हि शरीरादुत्क्रामति । प्रकृष्टज्ञानरूपेण विष्णुना प्रेरितः प्रज्ञेनात्मनैवोत्क्रम्य तेनैव सर्वान् कामानाप्त्वा तेनैव सर्वान् कामान् स भुङ्क्ते इति सर्वत्रानुषज्यते । प्रज्ञानेत्रोऽलोक इत्युक्ते कथं प्रज्ञानेत्रो मुक्त इत्याकाङ्क्षायां तस्यैव व्याख्यानं स एतेन प्रज्ञेनात्मनेत्यादि ।

अनुक्तविशेषणानामपि भगवदधीनत्वज्ञापनार्थं प्रज्ञानेत्रो लोक इति सामान्यवचनम् ।

अनारब्धफलानां च प्रारब्धानां च सर्वशः ।
कर्मणां दाह एवायं मुक्तिरित्यभिधीयते ।।

स तु मुक्तस्ततो देहादुद्गच्छति परात्मना ।
प्रेरितो विष्णुलोकं च प्राप्य भोगानवाप्य च ।।

भुङ्क्ते विष्णुप्रसादेन न विष्णोरवशः क्वचित् ।
विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिलाः ।। इति ब्रह्माण्डे ।

सहि भगवान् स्वनेतृकोऽपि नानुग्राह्यः

ब्रह्मेन्द्रादिशब्दा विष्णावेव मुख्यत इति तद्व्यावृत्त्या जीवानां स्वीकारार्थमेष इत्यादिशब्दः । स हि भगवान् स्वनेत्रकोऽपि नानुग्राह्यः । अनुग्राह्यत्वं हि ब्रह्मादीनामत्र विवक्षितम् । 'नेयताऽनुग्राह्यतापि न सा विष्णोः स्वतोऽपि तु' इति शब्दतत्त्वे ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयारण्यके षष्ठोऽध्यायः ।।

## ।। अथ द्वितीयारण्यके सप्तमोऽध्यायः ।।

### विद्यार्थिना विष्णुप्रार्थना

उप.– ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणीस्थ श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं

वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।।

भा.– वाङ्मे मनसि प्रतिष्ठिता । अवबोधरूपे विष्णौ प्रतिष्ठिता । स च विष्णुर्मे वाचि स्थितः । यदेतद्धृदयं मनश्चेति विष्णुनामधेयेषूक्तत्वात् । आविराविर्म एधि हे विष्णो ममाविराविर्भव । आणीस्थित आण्यां स्थित विष्णो इति सम्बोधनम् ।

आधारः सर्ववेदानां वेदाणी प्राण उच्यते ।
तस्मिन् स्थितो हरिर्नित्यमाणीस्थ इति गीयते ।।

इति शब्दतत्त्वे ।

आविरावीरिति दैर्घ्यमतिशयार्थे । आधिक्येऽधिकमिति सूत्रात् । अणशब्दस्य गतिवाचित्वाच्चलमाणमुच्यते । तस्य धारणेन तद्वानाणी । स्थापक इत्यर्थः । मे श्रुतं मा प्रहासीः मम विद्यागोचर एव सर्वदा भव । विस्मृतो मा भव । हे विष्णो अनेन त्वद्विषयेणैवाधीतेनाहोरात्रान् सन्दधामि । सर्वाहोरात्रेष्वपि त्वद्विषयाध्ययनमेव करोमीत्यर्थः । ऋतं यथावदवगतं त्वां वदिष्यामि । सत्यं साधुगुणैस्ततं सर्वनियन्तारं च । तद्विष्ण्वाख्यं ब्रह्म मामवत्विति तस्यैव विष्णोः परोक्षत्वेनैव प्रार्थनम् ।

वाङ्म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम् ।
अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयारण्यके सप्तमोऽध्यायः ।।

।। इति द्वितीयारण्यकः ।।

# अथ तृतीयारण्यकः

## ।। अथ प्रथमोऽध्यायः ।।

### विष्णुनाम्नः पूर्वोत्तरवर्णसन्धीनां महिमानिरूपणम्

उप.– अथाऽतः संहितायाः उपनिषत् ।

भा.– विष्णुनाम्नि षकारस्य णकारस्य च संहिताम् ।
विष्णोस्तु बहुरूपाणां वाचिकामृषयो विदुः ।।

तौ च वर्णौ हरेः सम्यक्स्वरूपप्रतिपादकौ ।
बहुधैव स्थितस्यास्य सदैवैकस्वरूपिणः ।।

विष्णुनामार्थरूपत्वाद् वेदानामपि सर्वशः ।
अन्येषामपि शब्दानां संहिता विष्णुवाचिकाः ।।
तद्वाचकास्तथा वर्णाः सर्वे लौकिकवैदिकाः ।

### संहिताविद्यायां माण्डूकेयमुनेरुपासनम्

उप.– पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वायुस्संहितेति माण्डूकेयः ।

भा.– पृथिवीनामकं रूपं पृथुत्वात् पृथिवीस्थितम् ।।

देवता पूर्ववर्णस्य पूर्वरूपं तदुच्यते ।
देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम् ।।

दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते ।
वेदकत्वाच्चायनत्वाद्रूपं यद्वायुनामकम् ।।

विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम् ।
संहितानामकं तच्च रूपद्वयसहस्थितेः ।।

उपासनायाः अनेकविधत्वेऽपि सर्वा अप्युपादेयाः

वर्णद्वयं विकारं च षकारं केचिदब्रुवन् ।
षकारं मध्यमत्रैव णकारं केचिदुत्तरम् ।।

पृथक्करणमेवैषां वर्णयोर्मध्यमुच्यते ।
उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम् ।।

षकारं च णकारं च वर्णौ पूर्वोत्तरावपि ।
व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते ।।
सर्वेप्येत उपादेयाः पक्षा निर्दोषका यतः ।।

इत्याद्यैतरेयसंहितायाम् ।।

संहिताविद्यायां माक्षव्यमुनेरुपासनम्

**उप.– आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे । स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति । समाने वै तत्परिहृतो मेन इत्यागस्त्यः ।**

भा.– आकाशस्थ आकाशनामा भगवान् वर्णयोर्मध्यदेवतेति माक्षव्यः । उभयरूपसंहितत्वात् संहितानामकः । स माण्डूकेयस्तेन माक्षव्येणापरिहृतः स्वपक्षः इति मेने । मे मदीयेन मदुपासितेनास्याकाशस्य पुत्रेण वायुना न समागादसौ माक्षव्यः । वायुस्थविष्ण्वनुपासनात् । यद्यप्याकाशस्थो भगवान् संहितानामको भवति । तथापि न वायुस्थस्यासंहितात्वं भवतीत्यपरिहृतत्वम् । परिहृतो

माण्डूकेयपक्ष इत्यहं मेन इत्यागस्त्यः । आकाशे विष्णूपासनस्याधिक-फलत्वात् । पिता ह्याकाशो वायोः ।

माण्डूकेयमाक्षव्यमुनिपक्षयोः साम्यनिरूपणम्

उप.– समानं ह्येतद्भवति वायुश्चाकाशश्चेत्यधिदैवतम् ।

भा.– भगवतस्तु पक्षः समत्वमेव वाय्वाकाशयोरिति । आकाशस्य पितृत्वाद् वायोर्बलाधिकत्वाच्चोभयोरुपासनास्थानत्वे साम्यम् । तस्मादुभावपि ग्राह्यौ । त्वगिन्द्रियदेवतात्वेनाकाशात् पूर्वमेव वायोः सात्त्विकाहङ्कारजत्वाद् वायोराकाशाद्गुणाधिकत्वम् । तथाप्यत्राकाशस्य पितृत्वं व्याप्तिश्चाधिकेत्युपासनायां साम्यम् ।।

पितापुत्रयोरुपासनायां साम्यभेदनिरूपणम्

उप.– अथाध्यात्मम् । वाक्पूर्वरूपम् । मन उत्तररूपम् । प्राणस्संहितेति शूरवीरो माण्डूकेयः । अथ हास्य पुत्र आह ज्येष्ठः। मनः पूर्वरूपम् । वागुत्तररूपम् । मनसा वा अग्रे सङ्कल्पयति । अथ वाचा व्याहरति । तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपम् । प्राणस्त्वेव संहितेति । समानमेनयोरत्र पितुश्च पुत्रस्य च ।

भा.– अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यमेव । अन्यत्र तु पुत्रपक्ष एव बलीयान् । युक्ति-मत्वात् ।

देहस्य भगवद्रथत्वनिरूपणम्

उप.– स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेतीति नु माण्डूकेयानाम् ।। १ ।।

भा.– मनोवाक्प्राणनामाऽसौ मन आदिषु संस्थितः ।
विष्णुस्तस्य रथो देह इन्द्रियाश्वः प्रकीर्तितः ।। इति च ।

प्रष्टिः स पृच्छनीयत्वात् परमात्मा जनार्दनः ।
वक्तृत्वाच्चैव वाङ्नामा मनो मन्तृत्वहेतुतः ।। इति च ।

'प्राणन्नेव प्राणो नाम भवति । वदन् वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैव तानि कर्मनामान्येव' इति च श्रुतिः ।

उपासनायाः लौकिकालौकिकत्वेन फलद्वैविध्यनिरूपणम्

मुक्तिरेव स्वर्गलोकः । अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वेति प्रस्तुतत्वात् ।

मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा ।
नित्यायुषा च युक्तः स्यात् संहितारूपविद्धरेः ।। इति च ।

प्रकृष्टत्वेन जननात् प्रजेति ज्ञानम् । पान्ति शंसाधनाश्चेति पशवो वेदाः । परब्रह्मणो विष्णोर्वरणादेव सम्यक्चायितं स्वरूपं तेजः ब्रह्मवर्चसम् । लौकिकप्रजादिकमपि तदिच्छतां यथायोग्यं भवति । माण्डूकेयैर्ऋषिभिरुपाश्रिता एता विद्याः ।। १ ।।

संहिताविद्यायाम् अधिदैवे शाकल्यमुनेरुपासनम्

उप.– अथ शाकल्यस्य । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वृष्टिः सन्धिः । पर्जन्यः सन्धाता । तदुतापि यत्रैतद्बलवदनूद्गृह्णन् सन्दधदहोरात्रे वर्षति । द्यावापृथिव्यौ समधातामित्युताप्याहुरितीन्वधिदैवतम् ।

भा.–वराहो वामनः सिंह इति रूपत्रयं हरेः ।
पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम् ।।

माण्डूकेयैर्हि शाकल्यो वासुदेवादिरूपिणम् ।
तेषु चोच्चारके चैव स्थितमाह चतुर्विधम् ।।

तेषु चोच्चारके चैव स्थितमाह चतुर्विधम् ।
भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितम् ।।

आध्यात्मे शाकल्यमुनेरुपासनम्

उप.– अथाध्यात्मम् ।। पुरुषो ह वा अयं सर्व आनन्दं द्वे विदले भवत इत्याहुः । तस्येदमेव पृथिव्या रूपम् । इदं दिवः । तत्राय-मन्तरेणाकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाकाशः । तस्मि-न्हास्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तः । यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि । यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेव-मिदमात्मनि हृदयं यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेतः । एवमु ह स्म सर्वलोकमात्मानमनुविधायाहेदमेव पृथिव्या रूपमिदं दिवः । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।। २ ।।

भा.– उर्व्यादीनां चतुर्णां च देह एव स्थितिं पुनः ।
अधरार्धस्य चोर्व्याश्च साम्यमन्यस्य वै दिवा ।।

वाचो वृष्ट्यैव साम्यं च पर्जन्येनैव चात्मनः ।
तेषां तेषु स्थितिं चैव विष्णोश्च चतुरात्मनः ।।

आकाशस्यान्तराकाशे नृसिंहस्यात्र संस्थितिम् ।
वायोः प्राणात्मतां चैव तत्र दाशरथेः स्थितिम् ।।

सूर्यविद्युद्धुताशानां दृग्घृद्रेतःसु च स्थितिम् ।
कपिलस्य च हंसस्य जामदग्न्यस्य तेषु च ।।
स्थितिं वदति विद्येयमपि मोक्षप्रदायिनी ।। इत्यादि च ।

वर्षणाद् वृष्टिः । परं जनयतीति पर्जन्यनामा विष्णुः । सन्धिनोतीति सन्धिः । धिनु पृष्टाविति धातुः । सम्यग्धारणात् सन्धाता । वर्षणमेव द्यावापृथिव्योः सन्धानम् । पर्जन्यस्थो भगवांस्तत्कर्ता ।।२।।

संहिताद्यध्ययनकर्तुः निन्दा नोचिता

उप.– अथातो निर्भुजप्रवादाः । पृथिव्यायतनं निर्भुजम् । दिव्यायतनं प्रतृण्णम् । अन्तरिक्षायतनमुभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्ठाऽवराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । अथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेदच्योष्ठा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । यस्त्वेवोभयमन्तरेणाह तस्य नास्त्युपवादः ।

भा.– पृथिवीस्थो वराहस्तु संहितादेवतोदिता ।
दिविष्ठो वामनश्चैव सम्प्रोक्तः पददेवता ।।

नृसिंहस्त्वन्तरिक्षस्थो भगवान् क्रमदेवता ।
स्वाध्यायमेवं ध्यात्वा यः करोत्युपवदेन्न तम् ।।

तस्यापवदिता याति त्रैलोक्यादध एव हि ।
नाशमाप्नोति निरये तस्मादपवदेन्न तम् ।।

गच्छस्यध इति ब्रूयादन्यं ब्राह्मणतस्तथा ।
ब्रह्मप्राप्तेर्हि योग्यो यो ब्राह्मणः स न चेतरः ।। इति च ।।

संहितापदक्रमाणां लक्षणनिरूपणम्

भञ्जनवर्जितत्वान्निर्भुजं संहिता । तृण च्छेदन इति धातोः प्रतृण्णं पदम् । उभयमन्तरेण क्रमः । निर्भुजमूलत्वात् पदादीनां तद्विषयप्रवादा अपि निर्भुजप्रवादा इत्येवोच्यन्ते ।

क्रमस्वाध्यायकर्तुः निन्दा वह्वनर्थकरी

पृथिवीस्थितपृथिवीनामकविष्ण्वायतनं पृथिव्यायतनमित्यादि । अवराभ्यां पृथिव्यन्तरिक्षाभ्यां च्युतोऽसीति । उत्तराभ्यामन्तरिक्षद्युभ्याम् ।

क्रमस्वाध्यायकृद्यस्तं विशेषेण न निन्दयेत् ।
लोकत्रयादपि भ्रष्टो यस्मात् तन्निन्दको भवेत् ।। इति च ।

तस्मादतिदुष्टत्वात् तन्निन्दको नास्त्येवेत्युक्तं तस्य नास्त्युपवाद इति । 'तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान्' इत्यादिवत् ।

विष्णुनाम्नि संहिताक्रमपदनिरूपणम्

उप.– यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपम् । अथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य । अग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति । अन्नाद्यकामो निर्भुजं ब्रूयात् । स्वर्गकामः प्रतृण्णम् । उभयकाम उभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत् पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर

उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वाब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात् ।

तामसानां निन्दने शापः

भा.– उपवदेदित्युक्तो मनुष्यमात्रः । पर उपवदेदित्यसुरः । सर्वशत्रुत्वात् ।

अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते ।
ब्रूयाल्लोकच्युतोऽसीति निन्दितोऽसुरसर्गगैः ।।

नाशयिष्यति विष्णुस्त्वामन्धे तमसि पातयेत् ।
इति ब्रूयान्न तु ब्रूयाद्देवसर्गात्मकं क्वचित् ।। इति च ।

षणयोः सन्धिकरणात् संहिताध्ययनं भवेत् ।
विषणुस्त्विति यो ब्रूयात् पदाध्यायी भवेत सः ।।

सन्ध्युक्तिश्च विभागश्च द्वयं व्याप्तं क्रमेण तु ।
तस्माद् द्विधाऽपि वचनात् क्रमाध्यायी भवेत सः ।।

भोगवृद्धिं च यो मोक्ष इच्छेद्विष्णव इत्यसौ ।
मोक्षकामो विषणवे द्वयकामो द्वयं वदेत् ।।

विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः ।
सर्ववेदस्थिता मोक्षतद्भोगद्वयसाधकाः ।।

तज्ज्ञानामेव नान्येषामिति वेदानुशासनम् ।
संहिताद्या ब्रुवन् वाऽपि य एवंविन्न चाब्रुवन् ।।

परिवादं ब्रुवन्तं वा न ब्रुवन्तमथापि वा ।
यद्वदेत् तत्तथैव स्यात् क्षिप्रमेव न संशयः ।। इति च ।

अग्र एव । अग्रयमेवोभयमन्तरेण ।

सात्त्विकानां शापो नदेयः

उप.– न त्वेवान्यत्कुशलाद् ब्राह्मणं ब्रूयात् । अतियुम्न एव ब्राह्मणं ब्रूयात् । नातियुम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽऽह शूरवीरो माण्डूकेयः ।। ३ ।।

भा.– द्युम्नो द्युतिस्वरूपत्वाद् विष्णुरेव प्रकीर्तितः ।
योऽतिक्रमति तस्याज्ञामतिद्युम्नः प्रकीर्तितः ।।

मोक्षयोग्योऽपि यस्त्वेवमतिद्युम्नो भवेत् पुमान् ।
लोकच्युतोऽसीत्येवं तं ब्रूयान्नाज्ञास्थितं क्वचित् ।।

लोकच्युतो भवेत्येनमपि नैव वदेत् क्वचित् ।
च्युतोऽसीति तु शिक्षार्थं ब्रूयान्नैवान्यथा क्वचित् ।।
इति च ।। ३ ।।

उपासनाया एव निन्दने प्रत्युक्तिः कर्तव्या

उप.– अथातोऽनुव्याहाराः । प्राणो वंश इति विद्यात् । स य एनं प्राणं वंशमुपवदेच्छक्नुवन्तं चेन्मन्येत प्राणं वंशं समधां३ । प्राणं मा वंशं सन्दधतं न शक्नोषीत्याह । प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत् तथा स्यात् । न त्वेवान्यत्

कुशलाद् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ।। ४ ।।

पूर्वोत्तरखण्डयोः पुनरुक्तिपरिहारः

भा.– भगवदुपासकस्य यस्मिन् कस्मिंश्चिद्दोष उक्ते तं प्रत्युक्तिप्रकारः पूर्वं दर्शितः । अनुव्याहारशब्देन भगवदुपासनाविषय एवास्याशक्त्यादिदोषं वदतः प्रत्युक्तिरुच्यते । निर्भुजं वदन्तमित्यादि त्ववस्थामात्रदर्शनम् । आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्यत्वादनुव्याहारः ।

उपासनानिन्दनस्य प्रत्युत्तरम्

सर्वाधारत्वतो वंश इत्युपासीत यो हरिम् ।
वायुं च मुक्तिमाप्नोति य एवं तदुपासकम् ।।

निन्देत विष्णुविज्ञानविषये तं वदेत सः ।
विष्णुना वंशभूतेन वायुना सहितं तथा ।।

न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ ।
ज्ञानसामर्थ्यवानित्थं ब्रूयाद्देवादिरुत्तमः ।।

अन्यो गन्धर्वपित्रादिरल्पज्ञानबलो हि यः ।
स ब्रूयाद्विष्णुवायुभ्यां सन्धिमिच्छन्तमेव माम् ।।
सन्धातुं नाशको यस्माद्धास्यतस्त्वामतो हि तौ ।। इति च ।

स य एनं प्राणं वंशमुपवदेत् प्राणं प्रत्येनमुपासकमुपवदेत् । प्राणस्य विष्णोः प्रियत्वं तव न प्राप्स्यतीति । नाशकः सन्धातुं मया सह सन्धानं कर्तुं नाशकः । मम प्रीतिं कर्तुं नाशकः ।

तद्भक्तभक्तेष्वपि यो न कुर्यात् प्रीतिमञ्जसा ।
विष्णुर्जहाति तं पापमिह चामुत्र च प्रभुः ।।
इति च भारते ।। ४ ।।

संहिताविद्यायां निर्भुजवक्त्रोपासनम्

उप.– अथ खल्वाहुर्निर्भुजवक्त्राः । पूर्वमक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति ।। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः । पूर्वमेवाक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रः । अक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन् यथावर्णमाह । तद्याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी साम तद्भवति । सामैवाहं संहितां मन्य इति ।

भा.– पूर्ववर्णस्थितं यत्तद्रूपं पूर्वाक्षराभिधम् ।
वराहाख्यं हरेरन्यवर्णगं वामनाभिधम् ।।

उत्तराक्षरसंज्ञं च वर्णयोरन्तरस्थितम् ।
अवनात् काशनाच्चैतदवकाशाभिधं हरेः ।।

नृसिंहरूपमित्याहुर्निर्भुजास्यास्तथावदत् ।
ह्रस्वो येनाक्षरोच्चारो मात्रासन्धिस्वरात्मकः ।।

व्यासरूपो हरिः साक्षात् संहितानामकस्त्विति ।
तत्पुत्रो मध्यमः प्राह समोच्चारणकारणः ।।
सामनामा वासुदेवः संहितानामवानिति ।। इति च ।

मापयति त्रायति चेति मात्रा भगवान् । यथोच्चारितवर्णयोर्मध्यस्थितश्च ।

उप.– तदप्येतदृषिणोक्तं– बृहस्पते न परः साम्नो विदुरिति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।। ५ ।।

भा.– मानस्तेनेभ्यो ये अभि द्रुहस्पदे
निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किं च नैकं
ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ।।

अथो शमेनोपरता मनुष्याः ये
धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आदेवानामोहते वि व्रयो हृदि
बृहस्पते न परः साम्नो विदुः ।।

अभिद्रुहस्पदे अभितो द्रोहस्य नित्यनिरतिशयदुःखस्यान्धतमसो योग्याः शास्त्रदस्यवः ।

ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः ।।

कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।।

ब्रह्मस्तेना निरानन्दाः अपकमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ।।
तेषां तमःशरीराणां तम एव परायणम् ।।

इति मोक्षधर्मे भगवद्वचनादेवंविधा एव स्तेनाः । अभिद्रुहस्पद-स्थाश्च । निरामिणः रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपताज्ञानेन नीचताविदः । त एव रिपवश्च तस्य ।

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ।।

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।।
इत्यादिवचनादसुरादयः ।

अन्नेषु जागृधुः भोगमात्रगृध्नवः । येषामेतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः । ईशितव्ये विद्यमाने हीश्वरो भवतीति । न चापरं किञ्चित् परमापेक्षया ह्यपरमिति । किं तर्हि किञ्चनैकं किमप्येकमेव वस्त्वस्ति न परमपरं चेति तेषां पक्षः ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहेतुकम् ।।

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।।
इत्यादि वचनात् ।

ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो । 'अथ हेममासन्यं प्राणमूचुः । एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्माद् ब्रह्मणस्पतिः' इत्यादि श्रुतेरेतादृशेभ्यो मा ब्रूहि । शमेन विष्णुनिष्ठया उप समीपे तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः । तदेव देवानां व्रयः । सर्वदेवानां परतमं विष्णवाख्यं ब्रह्म हृदा व्योहते । वासुदेवादि-रूपेण वरं नियामकं चेति व्रयः । तेभ्यो ब्रूहि ।

वायुं विद्याः समासाद्य सर्वासां पतिमूचिरे ।
स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च ।। इति च ।

सामनाम्ना श्रुतिर्यस्माद्विष्णुमाह ततः प्रियम् ।
तन्नाम विष्णोरिह तु संहितार्थं वदेद्यतः ।। इति वचनात् ।

सामनाम्नः संहिताशब्दार्थत्वाद्विष्णोस्तस्य नाम्नः श्रुतिसिद्धत्वाच्च सामनाम्नो वासुदेवरूपसमाख्यासु पञ्चरात्रे पठितत्वाच्च तद्रूपं संहिता-नामकमिति युक्तमित्यभिप्रायः ।। ५ ।।

संहिताविद्यायां ताक्ष्र्यमुनेरुपासनम्

उप.– बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति ताक्ष्र्यः वाग्वै-रथन्तरस्य रूपम् । प्राणो बृहतः । उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन च । एतस्यां ह स्मोपनिषदि संवत्सरं

गा रक्षयते तार्क्ष्यः । एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्यः । तदप्येतदृषिणोक्तं– रथन्तरमाजभारा वसिष्ठः । भरद्वाजो बृहदाचक्रे अग्नेरिति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।

भा.– देवता पूर्ववर्णस्य लक्ष्मीरेव प्रकीर्तिता ।
नारायणस्तूत्तरस्य तौ वाक्प्राणाभिधौ मतौ ।।

मध्यस्थः संहितानामा सोऽर्धनारीपुमात्मकः ।
वेदात्मकत्वाद् वाङ्नाम्नी लक्ष्मीरेव प्रकीर्तिता ।।

प्राणनामा प्रणेतृत्वात् साक्षान्नारायणः स्वयम् ।
रमित्यानन्द उद्दिष्टः सम्भोग्यं थमुदाहृतम् ।।

विष्णुभोग्या रतितरा लक्ष्मीरेव रथन्तरम् ।
नारायणो बृहत्वात्तु बृहन्नामा प्रकीर्तितः ।।

रथन्तरस्य बृहतो देवते चैव तावुभौ ।
वाक्प्राणसंस्थितौ चैव ताभ्यामेव हि सन्धितम् ।।

लक्ष्मीनारायणं रूपं संहितानामकं शुभम् ।
एतां विद्यामवाप्तुं हि वत्सरं गा अरक्षत ।।
तार्क्ष्य एतावन्मात्रं च समुद्दिश्य न चापरम् ।

संहिताविद्यायां कौण्ठरव्यमुनेरुपासनम्

उप.– वाक्प्राणेन संहितेति कौण्ठरव्यः । प्राणः पवमानेन पवमानो विश्वैर्देवैः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा । सैषाऽवरपरा

संहिता । स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभि-र्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते यथैषा संहिता ।

भा.– संहितादेवता वह्व्य इति कुण्ठरवात्मजः ।।

द्वयं द्वयं देवतानां मिलितं हरिशर्ववत् ।
संहितानामकं तत्र वर्णमध्यस्य देवता ।।

तयोरेकं देवतयोः परमन्यत् तथाऽवरम् ।
अवरस्य परस्यापि संयोगात् संहिता तु सा ।।

प्रोक्ताऽवरपरेत्येव वाक्प्राणाख्यौ रमाच्युतौ ।
संहितैका तथैवान्या केशवो वायुसंयुतः ।।

वायुः स पवमानाख्यो देवताश्चाखिला अपि ।
तृतीया संहिता प्रोक्ता देवतास्ताः सशङ्कराः ।।

चतुर्थी संहिता प्रोक्ता शङ्करो ब्रह्मणा सह ।
पञ्चमी संहिता चैव संहिता मोक्षदा इमाः ।।

प्रथमायां द्वितीयायां विष्णुरेव परो मतः ।
तृतीयायां वायुरेव चतुर्थ्यां सर्वदेवताः ।।

विरिञ्च एव पञ्चम्यामवरा इतरे ततः ।
प्रथमायां संहितायामवरो वामभागगः ।।

द्वितीयायां तु परमस्तृतीयायां तथाऽवरः ।
चतुर्थ्यां परमश्चैव पञ्चम्यां वामगोऽवरः ।।

अवराद्याः परान्ता यदेताः सर्वाश्च संहिताः ।
ततोऽवरपराः प्रोक्ता नैवोक्तास्ताः परावराः ।।

अभिमानी द्युलोकस्य शिवः सर्वस्य लोकनात् ।
द्योतनाच्च ......... .......... ..............

देवानामेव संहितोपासनायाः पूर्णं फलम्

उप.– स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदभि-व्याहार्षन्नेव विद्याद्दिवं संहिताऽगमद्विदुषां देवानामेवं भविष्यतीति । शश्वत् तथा स्यात् । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।

भा.– ........ यदि ब्रूयान्मन्त्रमेतमथापि वा ।।

आत्मार्थेऽथ परार्थे वा चिन्तयेदेवमञ्जसा ।
विद्वांसो देवता यस्मात् सम्यक्तेन महत्फलम् ।।

तेषामेव हरिश्चैव संहितारूपकः प्रभुः ।
अगमद्देवलोकं हि कर्तुं देवेष्वनुग्रहम् ।।
इति चिन्तयतस्तेषां प्रसादात् फलमञ्जसा ।

संहिताविद्यायां पञ्चालचण्डमुनेरुपासनम्

उप.– वाक्संहितेति पञ्चालचण्डः वाचा वै वेदास्सन्धीयन्ते । वाचा च्छन्दांसि । वाचा मित्राणि सन्दधति । वाचा सर्वाणि भूतानि । अथो वागेवेदं सर्वमिति । तद्यत्रैतदधीयते वा भाषते वा वाचि तदा प्राणो भवति । वाक् तदा प्राणं रेळ्हि । अथ यत्र तूष्णीं वा

भवति स्वपिति वा प्राणे तदा वाग्भवति । प्राणस्तदा वाचं रेळ्हि । तावन्योन्यं रीळ्हः । वाग्वै माता । प्राणः पुत्रः । तदप्येतदृषिणोक्तम्–

एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ।। इति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।

भा.– पश्चालचण्डो वाचं तु ब्रह्माणीं हि सरस्वतीम् ।।

मन्यतेऽस्याः पुत्रवच्च देवं नारायणं प्रभुम् ।
वेदैर्हि व्यज्यते विष्णुः सा च वेदाभिमानिनी ।।

प्राणस्थो भगवान् विष्णुः प्राणनामा प्रणेतृतः ।
ब्रह्मणोऽपि पिता नित्यं भगवान् पुरुषोत्तमः ।।

उपचर्यते पुत्र इति वेदैर्यद्व्यज्यते हरिः ।
सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि ।।

### शिवकर्तृका संहितोपासना

उप.– अथातः प्रजापतिसंहिता । जाया पूर्वरूपम् । पतिरुत्तररूपम् । पुत्रः सन्धिः । प्रजननं सन्धानम् । सैषाऽदितिः संहिता । अदितिर्हीदं सर्वं यदिदं किञ्च । पिता च माता च पुत्रश्च प्रजननं च तदप्येतदृषिणोक्तम्– अदितिर्माता स पिता स पुत्र इति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ।। ६ ।।

भा.– प्रजापत्याख्यशर्वेण प्रोक्ताऽन्या संहितापि हि ।
विष्णुरेवादितिर्नाम सर्वस्यात्ता यतः प्रभुः ।।

स एव पितृसंस्थस्तु पातृत्वात् पितृनामकः ।
देवतोत्तरवर्णस्य मातृस्थो मातृनामकः ।।

माननात् पूर्ववर्णस्य देवतेति प्रकीर्तितः ।
पोषकत्वात् सन्धिनामा वर्णयोरन्तरस्थितः ।।

स एव पुत्रसंस्थश्च पुत्रनामा जनार्दनः ।
त्राणात् पूर्तित एवासौ वर्णसन्धानकर्मणि ।।

सन्धाननामा सन्धानकर्तृत्वात् पुरुषोत्तमः ।
प्रजातिकर्मसंस्थश्च स एव प्रजनाभिधः ।।

जनकत्वात् परो विष्णुरेवं विष्णुर्हि संहिता ।
वासुदेवादिरूपेण चतुर्धैवं व्यवस्थितः ।।

अदितिर्द्यौरिति मन्त्रव्याख्यानम्

स एव दिवि संस्थश्च द्युनामा क्रीडनात् प्रभुः ।
अन्तरेवेक्षणाच्चैव सोऽन्तरिक्षोऽन्तरिक्षगः ।।

पृथिवी पृथिवीस्थश्च प्रथितत्वाज्जनार्दनः ।
मुख्यार्थत्वात् सर्वनाम्नां सर्वदेवाभिधो हरिः ।।

विश्वे देवा इति प्रोक्तो बहुधा तेषु संस्थितः ।
ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः ।।

गां धारयंश्च गन्धर्वो गन्धर्वेषु व्यवस्थितः ।
माननान्मानुषो नाम मानुषेषु स्थितो हरिः ॥

पालनात् पितृनामासौ पितृष्वेव व्यवस्थितः ।
रतेः प्राणेऽसुराख्यश्च सोऽसुरेषु व्यवस्थितः ॥

एवं पञ्चजनेषुस्थो हरिः पञ्चजनाभिधः ।
जातनामा जातसंस्थः प्रादुर्भूतगुणत्वतः ॥

जनिक्रियास्थितश्चासौ जनित्वमिति गीयते ।
जनिं यस्मात् तवयति तवनं हि प्रकाशनम् ॥ इति च ।

प्रथश्च यस्य सप्रथश्चेति मन्त्रव्याख्यानम्

प्रथश्च सप्रथश्चैव राजानौ मत्स्यदेशजौ ।
यापयामासतुर्विष्णोर्हविर्नाम्नो हविर्मुखे ॥

अनुष्टुब्देवता यस्तु नृसिंहो जगतोऽस्य च ।
स्वमुखे हवनादेव हविरित्यभिधीयते ॥

तस्मिन् यज्ञे वसिष्ठस्तु चतूरूपाज्जनार्दनात् ।
आजहार श्रियं देवीं रथन्तरवराभिधाम् ॥

चतुर्मूर्तिः स्तुतस्तेन प्रेषयामास तां श्रियम् ।
सा चास्मै प्रददौ विद्यां प्रययौ च पुनर्हरिम् ॥

धातेत्युक्तोऽनिरुद्धस्तु प्रद्युम्नस्तु द्युनामकः ।
वासुदेवः प्रसविता सर्वस्य प्रसवाद्विभुः ॥

सङ्कर्षणो विष्णुनामा प्रणेतृत्वाद् बलादपि ।

तेऽविन्दन् मनसेति मन्त्रव्याख्यानम्

चतूरूपं परं विष्णुं राजानौ प्रथसप्रथौ ।।

भरद्वाजौ वसिष्ठश्च ध्यात्वाऽविन्दन् परात् परम् ।
यजनीयो यजुर्नामा विष्णुः सङ्कर्षणाभिधः ।।

जीवानां स्कन्दनादेव स्कन्नः प्रद्युम्न उच्यते ।
प्रथमो वासुदेवस्तु देवयानोऽनिरुद्धकः ।।

प्राप्यो देवैर्यतो नित्यमनिरुद्धाभिधो हरिः ।
तस्मादेवं चतुर्मूर्तेः स्तुतिसन्तोषिताद्धरेः ।।

आजहार भरद्वाजो रूपं नारायणाभिधम् ।
तद्बृहन्नामकं विष्णोश्चातुरात्म्यात् समुद्गतम् ।।

भरद्वाजमुपागम्य प्रादान्मोक्षवरं परम् ।
चतुर्मूर्तिः स भगवानग्निरित्यभिधीयते ।।
अग्रयत्वात् सर्वभूतानाम् ................

अविन्दन् ते अतिहितमिति मन्त्रव्याख्यानम्

........ ........ एवं चत्वार एव ते ।
अविन्दंस्तं चतुर्मूर्तिं साक्षान्नारायणं प्रभुम् ।।

गुहायां संस्थितमपि ह्यतीव हितमस्य च ।
सर्वज्ञत्वाद्यज्ञनाम्नो विष्णोस्तेजः परं हि तत् ।।

तस्मादेव चतुर्मूर्तेः सूरिप्राप्यत्वहेतुतः ।
सूर्यनाम्नोऽहरन् घर्मनामानं तं नृसिंहकम् ।।

घर्षणात् सर्वलोकस्य नृसिंहो घर्म उच्यते ।
निर्गत्य स चतुर्मूर्तेर्विप्रक्षत्राभिसंस्तुतात् ।।

प्रथादीनां चतुर्णां च पुरुषार्थचतुष्टयम् ।
दत्वा जगाम भगवान् स्वकीयां तनुमेव च ।।

वसिष्ठाच्च भरद्वाजाद्धोत्रध्वर्य्वोर्नृपौ तु तौ ।
यथेष्टसिद्धिं संप्राप्तौ सम्यगिष्टाज्जनार्दनात् ।।

इत्याद्यृग्वेदसंहितायाम् ।

यस्य प्रथ इति नाम स च हविर्नाम्नो विष्णोर्हविर्यत् अयत् । अटो लोपेनान्तर्णीतणिच्त्वेन अयापयदित्यर्थः । एवं सप्रथ इति यस्य नामासौ । हविर्यदिति पृथक्सम्बन्धः । आचक्रे आकारयामास । अविन्दन् ते ते अविन्दन्नित्यध्यात्माधिदैवतयोरुभयत्रापि भगवन्तमविन्दन्नित्यर्थः । देवयानं गुहा यदिति वचनात् ।

चतुष्कपर्दायुवतिरिति मन्त्रव्याख्यानम्

चतुःशिखण्डां तु रमां द्विरूपो भगवान् हरिः ।
परमानन्दरूपत्वात् सुपर्ण इति नामकः ।।

रमयामास तस्यां च निषण्णः सर्वदैव सः ।
एक एव च विष्णुः स प्रविष्टः क्षीरसागरम् ।।

सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।
परिपक्वेन मनसाऽपश्यमित्याह तं त्वजः ।।

मातेव व्यञ्जकत्वात् तं प्राणस्थं वाक् सरस्वती ।
लिहते लिह्यत इव प्राणस्थेन तु सा सदा ।।

स्वयं तु भगवान् विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि ।
नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि च ।।
इत्यादि च ।। ६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महैतरेयोपनिषद्भाष्ये तृतीयारण्यके प्रथमोऽध्यायः ।।

## अथ तृतीयारण्यके द्वितीयोऽध्यायः ।।

उप.– ॐ प्राणो वंश इति स्थविरः शाकल्यः । तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितस्तस्यैतस्यात्मनः प्राण ऊष्मरूपम् । अस्थीनि स्पर्शरूपम् । मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्थरूपम् ।

भा.– गृहस्याच्छादनादीनां मध्यवंशो यथाऽऽश्रयः ।
तथेन्द्रियाभिमान्यादिदेवानां वायुराश्रयः ।।

तेषु सर्वेषु भगवान् बहुरूपो हरिः स्थितः ।
विष्णुनामाऽक्षरेष्वेवमन्येष्वपि तदर्थतः ।।

प्राणनामापि भगवान् प्राणस्थश्चोष्मसु स्थितः ।
ऊष्मनामा समर्थत्वात् स एव भगवान् हरिः ।।

पूर्णत्वादात्मनामासौ प्रतिमात्वादमुष्य तु ।
सङ्घात आत्मशब्दोक्तो ह्यस्थिरश्चास्थिनामकः ।।

अस्थिस्थितो हरिः स्पर्शसंस्थितः स्पर्शनामकः ।
स्पर्शहेतुत्वतः स्पर्शनामा स भगवान् हरिः ।।

मज्जासुस्थो स मज्जाख्यो मदं जनयतीति ह ।
स एव स्वरसंस्थश्च स्वराख्यः स्वरतेः प्रभुः ।।

प्रमाणं सारयेद्यस्मान्मांसाख्यो मांससंस्थितः ।
लोहिताख्यो रक्तवर्णो लोहितस्थो जनार्दनः ।।

ह्रस्वमाण्डूकेयमुनेः अध्यात्मोपासनम्

उप.– इति ह स्माह ह्रस्वो माण्डूकेयः । त्रयं त्वेव न एतत्प्रोक्तम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टि शतानि त्रीणीतः । तानि सप्तविंशति शतानि भवन्ति ।

भा.– अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः ।
तत एव विभक्तानि सङ्ख्या तेषां पृथङ् न तत् ।।

तस्मात् सप्तशतान्येव देहे विंशच्च तस्य हि ।
रूपाणि विष्णोर्भागे तु षष्ट्युत्तरशतत्रयम् ।।

उप.– सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसंमानश्चक्षुर्मयः । श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्वां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ।। १ ।।

भा.– तान्येव विष्णो रूपाणि वत्सराहस्सु सर्वशः ।
अहर्नामा च भगवानहार्यत्वात् प्रकीर्तितः ।।

अहोभिः समसङ्ख्यानि यस्मादध्यात्मगानि तु ।
रूपाणि विष्णोस्तेनायमहस्संमान उच्यते ।।

पूर्णदर्शनशक्तित्वाच्चक्षुर्मय उदीरितः ।
तादृक् श्रवणशक्तित्वात् तथा श्रोत्रमयः स्मृतः ।।

छन्दोमयः सत्यकामो मन्तृवक्तृबलात्मकः ।
एवं विद्वांस्तस्य रूपाण्याप्नोति ज्ञानपुत्रवान् ।।
पीयमानं शमाप्नोति प्राप्याहर्नामकं हरिम् ।। १ ।।

कौण्ठरव्यमुनेरधिदैवतोपासनम्

उप.– अथ कौण्ठरव्यः । त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टि शतान्यूष्मणां त्रीणि षष्टि शतानि सन्धीनाम् । यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान् सन्धीनवोचामाहोरात्राणां ते सन्धय इत्यधिदैवतम् ।

कौण्ठरव्यमुनेरध्यात्मोपासनम्

अथाध्यात्मं यान्यक्षराण्यधिदैवतमवोचामस्थीनि तान्यध्यात्मम् । यानूष्मणोऽधिदैवतमवोचाम मज्ञानस्तेऽध्यात्मम् । एष ह वै सम्प्रति प्राणो यन्मज्जा । एतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते । यद्वा ऋते प्राणाद्रेतः सिच्येत । पूयेन्न सम्भवेत् । यान्सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति । पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतः तदशीतिसहस्रं भवति । अशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसम्पादयन्ति ।

कौण्ठरव्यमुनेरुपासनम्

स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकता-मश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ।। २ ।।

मुनिमतेषु विवक्षाभेद एव नतु विरोधः

भा.– एवमुक्तप्रकारेण तस्य ह्यक्षरनामकम् ।
अशीत्युत्तरसाहस्ररूपं वर्णेषु संस्थितम् ।।

विष्णुनाम्नोऽथवान्येषु पञ्चाशत्सङ्ख्यकेष्वपि ।
तावत् सङ्ख्यानि देहेषु पृथङ्मज्जास्थिपर्वसु ।।

रूपाणि विष्णोस्तावन्ति चेष्टकानि पृथक् पृथक् ।
अर्कस्थितबृहत्याख्यरूपाण्यह्नां च सर्वशः ।।

सम्पादकानि तान्येव तान्यक्षरमितानि च ।
अस्थ्यादिस्थितरूपाणि तान्युपास्य विमुच्यते ।। इति च ।

अस्थिमज्जादिशब्दैर्वाच्यो भगवान्

तस्यैतस्यात्मनस्तस्य शरीराख्यस्यात्मनो य आत्मा आदानादिकर्ता तस्य परमात्मन एतस्य । अस्थ्नां मज्ज्ञां पर्वणां च मिलितानामपि विंशोत्तरसप्तशतत्वोक्तेस्तत्रस्थविष्णुरूपाण्येवोच्यन्त इति सिद्धम् । अस्थ्यादीन्येव चेदशीत्युत्तरसहस्राणि सन्ति हि ।

### विष्णुनाम्नि भगवद्रूपाणि

षृण्ष्णुरित्येतानि विष्णुनामगतान्यूष्णाक्षरसन्धिनामकानि तद्गत-भगवद्रूपाणि मुख्यतस्तन्नामकानि ।

### स्मृतिग्रन्थेषु कौण्ठरव्यमुनेरुपासनम्

अहार्यत्वादहर्नामा रात्रिनामा रतिप्रदः ।
सन्धानात् सन्धिनामासौ स्वयं नारायणः प्रभुः ।।

सन्ध्यूष्माक्षरगाण्यस्य विष्णो रूपाणि सर्वशः ।
सन्ध्यारात्रिदिवास्थानि साशीतिकसहस्रकम् ।।

तान्येवास्थिषु मज्जासु पर्वस्वपि च सर्वशः ।
परज्ञानात् तु पर्वाणि विष्णो रूपाणि तानि हि ।।

अस्थानान्मदनाच्चैव ह्यस्थिमज्जाभिधानि च ।
व्यक्तिर्मज्जासु तस्यैव प्राणो मज्जासु संस्थितः ।।

मज्जैव रेतो भवति रेतसिस्थो विशेषतः ।
प्राणस्तेन हि तद्रेतोयुक्तं प्राणेन सर्वदा ।।

यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत् क्वचित् ।
विशेषप्राणसम्बन्धवर्जितान्यत एव हि ।।

न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि ।
विशेषेण स्थितः प्राणः प्राणे चैव विशेषतः ।।
स्थितो नारायणो देवस्तस्मान्मज्जासु च स्थितः ।। इति च ।

मज्जास्वधिकसन्निधानज्ञापनार्थमिदं वचनम् । अशीत्युत्तरसहस्र-वर्णानामभावाच्च तत्स्थविष्णुरूपाण्येव तत्सङ्ख्यानीति सिद्धम् । अर्के निलीनत्वेनादृश्यत्वेन स्थिता भगवत्प्रादुर्भावा अर्कलिनः । त एव शरीरे स्थित्वा सहस्रं बृहतीः सम्पादयन्ति । वाक्प्रेरकत्वाद् विष्णु-नामार्थवत्वादेव च बृहतीसहस्रस्य तद्देवताश्चैतान्येवाशीत्युत्तरसहस्र-रूपाणि । एतान्येवाहःप्रवर्तकानि च । अहःशब्देन यज्ञो दिवसश्चो-भावप्यभिप्रेतौ ।

> यज्ञानां दिवसानां च साशीतिकसहस्रकैः ।
> विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा ।।
> बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः ।। इति च ।।२।।

## वायुदेवस्य पुरुषोपासनम्

उप.– चत्वारः पुरुषाः इति बाध्वः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा । तस्य योऽयमशरीरः प्रज्ञात्मा स रसः । छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव । तस्यैतस्याकारो रसः । वेदपुरुष इति यमवोचाम येन वेदान् वेद । ऋग्वेदं यजुर्वेदं सामवेदम् । तस्यैतस्य ब्रह्मा रसः । तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत । यो यज्ञस्योल्बणं पश्येत् । महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन् अन्यानि भूतान्यैक्याभावयन्नन्यानि । तस्यैतस्यासावादित्यो रसः ।

भा.– संसारबाधितैः प्राप्यो बाध्वो वायुरुदाहृतः ।
स हि मोक्षप्रदो विष्णोराज्ञया स उवाच ह ।।

सर्वदेहाभिमानी तु शरीरपुरुषः शिवः ।
सर्ववर्णाभिमानी च शेषोऽसौ छान्दसः पुमान् ।।

सर्ववेदाभिमान्येव गरुडो वेदपूरुषः ।
संवत्सराभिमानी तु ब्रह्मैव हि महापुमान् ।।

सारः शिवस्यानिरुद्धनामा देहस्थितो हरिः ।
अ इत्याक्रियते यस्माद् वासुदेवो ह्यकारकः ।।

शेषस्य सारः स विभुर्ब्रह्माख्यो ज्ञानवृंहणात् ।
सङ्कर्षणाख्यस्तु हरिः सारः स गरुडस्य च ।।

ब्रह्मर्त्विक्संस्थितश्चासौ तस्माद् ब्रह्मिष्ठमेव हि ।
कुर्याद् ब्रह्मर्त्विजं तस्मिन् विशेषेण स्थितो हरिः ।।

ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः ।
स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ।।
ततश्च सर्वभूतेषु जीवानां विनियामकः ।

प्रतिपुरुषं सूर्यस्याभिमुखत्वे कारणनिरूपणम्

उप.– स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एतमेतदिति विद्यात् । तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तं–

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ।।
इति ।

भा.– स एवादित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ।।

स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।
सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ।।

प्रतिपूरुषमेतस्मात् स्थितो विष्णुर्नियामकः ।
आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रति प्रति ।।

स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ।
मुख्यत्वात् सर्वदेवानामननादीशितृत्वतः ।।

कर्तृत्वादप्यनीकं स उदैत् सूर्यस्थितो हरिः ।
ज्ञानदत्वाच्च देवानां चक्षुरेनेन दर्शनात् ।।

आपूरयत्सर्वलोकान् प्रकाशेन जनार्दनः ।
आदानात् सर्वजीवानामत्तृत्वात् प्रलयेऽपि च ।।
आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च ।

अयोग्योपदेशे अनिष्टः

उप.– एतामनुविधां संहितां सन्धीयमानां मन्य इति ह स्माऽह बाध्वः । एतां ह्येव बह्वृचा महत्युक्थे मीमांसन्ते । एतमग्रा-वध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्यामेतं दिव्येतं वायावेत-माकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेषु । एतमेव ब्रह्मेत्याचक्षते । स एष संवत्सर-संमानश्चक्षुर्मयः श्रोत्रमयः छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं

वाङ्मयमात्मानं परस्मै शंसति, दुग्धदोहा अस्य वेदा भवन्ति । न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थानमिति ।

भा.– एवं चतुर्विधो विष्णुः संहितादेवता यदा ।।
ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम् ।
प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः ।।

तदा तु संहितां सम्यङ् मन्येऽहं सन्धितामिति ।
आह वायुरिमं विष्णुं बृहत्युक्थस्य देवताम् ।।

महाव्रताख्यस्तोत्रस्य चेष्टकानां च देवताम् ।
एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम् ।।

संवसद्रतिदातृत्वाद् ब्रह्मा संवत्सराभिधः ।
नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः ।।

अनन्तमूर्तिर्ब्रह्मासावनन्तजगदास्थितः ।
नियामकस्तस्य विष्णुस्तावद्रूपेषु संस्थितः ।।
तत्संवत्सरसम्मानः स विष्णुः परमेश्वरः ।। ३ ।।

य एनं वक्त्ययोग्येभ्यो योऽथ चैनं महाव्रते ।
कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथवा ।।

महाव्रतेन स्तोत्रेण स्तुवीतैनमथापि वा ।
महाव्रते चितिं वापि कुर्यान्नास्य फलं श्रुतेः ।।

सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति ।
प्रत्यक्षज्ञानिनोऽप्येतदानन्दह्रासकृद्भवेत् ।।

प्रत्यक्षज्ञानिनो मोक्षो न कथञ्चिद्धि हीयते ।
आचार्यमेव तं विद्याद् गुणैर्यः स्वात्मनोऽधिकः ।।

गुणाधिकस्य तेनैव शंसनादि न दुष्यति ।
अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपि वा ।।

प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम् ।
अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत् ।।

योग्या अस्याश्च विद्याया देवा ऋषय एव च ।
एकदेशज्ञानयोग्या मानुषा उत्तमा यदि ।।

अयोग्योपदेशः परमात्मनः सन्त्यागरूपः

उप.– तदप्येतदृषिणोक्तम्–

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ।। इति ।

न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवति । तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत । न परस्मा एतदहः शंसेत् । कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति ।

भा.– कर्मसश्रयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात् सखायमिति चोदितम् ।।

न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात् परमात्मनः ।।

वाङ्मयमात्मानं परस्मै शंसति, दुग्धदोहा अस्य वेदा भवन्ति । न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थानमिति ।

भा.– एवं चतुर्विधो विष्णुः संहितादेवता यदा ।।
ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम् ।
प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः ।।

तदा तु संहितां सम्यङ् मन्येऽहं सन्धितामिति ।
आह वायुरिमं विष्णुं बृहत्युक्थस्य देवताम् ।।

महाव्रताख्यस्तोत्रस्य चेष्टकानां च देवताम् ।
एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम् ।।

संवसद्रतिदातृत्वाद् ब्रह्मा संवत्सराभिधः ।
नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः ।।

अनन्तमूर्तिर्ब्रह्मासावनन्तजगदास्थितः ।
नियामकस्तस्य विष्णुस्तावद्रूपेषु संस्थितः ।।
तत्संवत्सरसम्मानः स विष्णुः परमेश्वरः ।। ३ ।।

य एनं वक्त्ययोग्येभ्यो योऽथ चैनं महाव्रते ।
कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथवा ।।

महाव्रतेन स्तोत्रेण स्तुवीतैनमथापि वा ।
महाव्रते चितिं वापि कुर्यान्नास्य फलं श्रुतेः ।।

सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति ।
प्रत्यक्षज्ञानिनोऽप्येतदानन्दह्रासकृद्भवेत् ।।

प्रत्यक्षज्ञानिनो मोक्षो न कथञ्चिद्धि हीयते ।
आचार्यमेव तं विद्याद् गुणैर्यः स्वात्मनोऽधिकः ।।

गुणाधिकस्य तेनैव शंसनादि न दुष्यति ।
अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपि वा ।।

प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम् ।
अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत् ।।

योग्या अस्याश्च विद्याया देवा ऋषय एव च ।
एकदेशज्ञानयोग्या मानुषा उत्तमा यदि ।।

अयोग्योपदेशः परमात्मनः सन्त्यागरूपः

उप.– तदप्येतदृषिणोक्तम्–

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ।। इति ।

न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवति । तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत । न परस्मा एतदहः शंसेत् । कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति ।

भा.– कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात् सखायमिति चोदितम् ।।

न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात् परमात्मनः ।।

अयमेकविधः परमात्मनस्त्यागः

मुख्यत्यागो हरेरेव यन्नास्तीति वदेदमुम् ।
तत्समं वाऽधिकं वाऽपि ब्रूयादैक्यमथापि वा ।।

ऐश्वर्यादिगुणानां वा ह्रासं नास्तित्वमेव वा ।
तत्प्रसादं विना मोक्षं ब्रूयाद्वा कस्यचित् क्वचित् ।।

ऐक्यं वा ब्रह्मशर्वादेर्मुक्तावैक्यमथापि वा ।
व्यत्यासं चावताराणां जीवाभेदममुष्य वा ।।

भेदज्ञानं तद्गुणानां तेन वाऽथ मिथोऽपि वा ।
तथैव तत्क्रियाणां च तद्रूपाणामथापि वा ।।

असाम्यदर्शनं वापि तद्गुणानां परस्परम् ।
देहदेहिविभेदं च तस्मिन्नवयवेषु वा ।।

परस्परं भेददृष्टिं तेन वा कुत्रचित् क्वचित् ।
दोषसंसर्गमस्यापि स्वतः परत एव वा ।।

अज्ञानतो ज्ञानतो वा निर्देहत्वममुष्य च ।
तद्देहस्य प्राकृतत्वमचिदानन्ददेहताम् ।।

प्रादुर्भावेष्वपि विभोर्देहत्यागोद्भवादिकम् ।
अज्ञानदुःखासामर्थ्यपारवश्यादिकं तथा ।।

अतद्वशत्वं कस्यापि कदाचित् क्वचिदप्युत ।
परिमाणं बलादेर्वा तस्य विष्णोर्महात्मनः ।।

भेदाभेददृशिर्वास्य जीवैर्वा स्वगुणादिभिः ।
तर्कैस्तस्यापलापो वा तत्र रक्तेन चेतसा ।।

त्यागानामेवमुक्तानां तर्काद्यैः साधनं तथा ।
अचिन्त्यविभवेऽप्यस्मिन्नसम्भवनिरूपणम् ।।

स एव मुख्यतस्त्यागो वासुदेवस्य कीर्तितः ।

द्वितीयविधः परमात्मनस्त्यागः

रमाब्रह्मादिकानां च तारतम्यानभिज्ञता ।।

संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम् ।
अस्मृतिर्वासुदेवस्य तद्भक्तानां च निन्दनम् ।।

द्वितीय एष त्यागस्तु विष्णोरेव प्रकीर्तितः ।

परमात्मनस्त्यागे तृतीयतुरीयविधाः

निषिद्धकर्मकरणं विहितस्य च वर्जनम् ।।

त्यागस्तृतीयो हि हरेश्चतुर्थोऽयोग्यपूरुषे ।
उपदेशः केशवस्य यथाशास्त्रोदितक्रमात् ।।

आचार्यपित्रोरन्यत्र तथैव च महाव्रते ।
हौत्रौद्गात्राध्वर्यवाणि त्याग एव चतुर्विधः ।।

परमात्मनस्त्यागे फलभेदनिरूपणम्

त्यागद्वयात् तु प्रथमात् प्राप्यतेऽन्धन्तमः क्रमात् ।
तृतीयान्निरयप्राप्तिश्चतुर्थान्न दिवं व्रजेत् ।।

उपदिष्टेऽपि यस्तत्त्वे संशयं कुरुते पुमान् ।
सोऽन्धन्तमो व्रजेदन्यो निरयायैव गच्छति ।।

स एव भगवान् विष्णुरेतैर्दोषैर्विना यदि ।
ज्ञायते मुक्तिदः साक्षान्नात्र कार्या विचारणा ।।
यदि ज्ञानं नातिपक्वं सरागं च मनो भवेत् ।

नित्यसंसारतमोमुक्तिषु स्वरूपभेदः अधिकारिभेदश्च

तदा स्वर्गादिलोकाप्तिः संशयश्चेत् क्वचित् क्वचित् ।।

आवृत्तिरेव संसारे यावन्निःसशंयो भवेत् ।
पुनरावृत्तिहीनं तु तमोऽन्धं मुक्तिरेव च ।।

पूर्वं तु निःसुखं तत्र निर्दुःखं चापरं मतम् ।
निश्शेषगुणहीनं च पूर्वं निर्दोषकं परम् ।।

विमिश्रगतयस्त्वन्याः पुनरावृत्तिसंयुताः ।
असुरा देवता मर्त्या योग्या एतेषु च क्रमात् ।।

न च तेषां सङ्करोऽस्ति यथायोग्या हि तद्गतिः ।
मानुषेषूत्तमा मुक्तिमधमा निरयं तथा ।।
आप्नुवन्ति मनुष्येषु मध्यमाः सृतिभागिनः ।

सृष्टिस्थितिलयादीनां कदाऽपि नोच्छेदः

नियमोऽयं नान्यथा स्यादच्छिद्रत्वं यथा भवेत् ।।

दोषेऽथवा गुणे वापि तदा दैत्याः सुरा अपि ।
स्वां स्वां गतिं समायान्ति तावत् संसारभागिनः ।।

अच्छिद्रत्वं नैव सर्वैः कदाचित् प्राप्यते यतः ।
सृष्टिस्थितिलयादीनां नोच्छेदस्तेन कुत्रचित् ।।

तस्माद्दोषान् प्रहायैव विष्णुं सर्वोत्तमोत्तमम् ।
जानीयात् तेन मुक्तिः स्यादपरोक्षदृशेरनु ।।

मरणसूचकानि दुर्निमित्तानि तत्परिहारश्च

उप.– स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विहीयेते चन्द्रमा इवाऽदित्यो दृश्यते । न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठाः । व्यस्तः पायुः । काककुलायगन्धिकमस्य शिरो वायति । सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत्करणीयं मन्येत तत्कुर्वीत । यदन्ति यच्च दूरके इति सप्त जपेत् । आदित्प्रत्नस्य रेतस इत्येका । यत्र ब्रह्मा पवमानेति षट् । उद्वयं तमसस्परीत्येका ।

भा.– सूर्यमण्डलगो विष्णुर्देहे चक्षुषि संस्थितः ।
अनिरुद्धश्च हृदये न च भेदोऽनयोः क्वचित् ।।

अन्येषामपि रूपाणामिति विद्याद् विचक्षणः ।
द्विरूपः स यदा विष्णुरपगच्छति देहतः ।।

तदैव दुर्निमित्तानि जायन्ते नान्यदा क्वचित् ।
तस्मात् तेषां दर्शने तु कर्तव्यं पारलौकिकम् ।।

सर्वमेव जपेच्चैव यदन्तीत्यादिका ऋचः ।

अरिष्टपरिहारकमन्त्राः

ऋग्भिः षड्भिर्वायुरेव पवमानादिना मतः ।।

स्तूयते सोऽङ्गनेतृत्वादग्निरित्यभिधीयते ।
परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः ।।

वायुः पुनाति यल्लोकान् सविता तेन कथ्यते ।
पवित्रं नाम साक्षात् तत्परं ब्रह्म जनार्दनः ।।

प्रसादयित्वा तं विष्णुं तेन लोकान् पुनात्यसुः ।
ज्ञानाख्यप्रसवेनापि स्वयं वायुः पुनात्ययम् ।
प्राणाग्नेरर्चिषो देहे विततास्तेषु केशवः ।।

अचिष्मान् विततो नित्यं वायुस्तेन पुनात्ययम् ।
यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः ।।

मोचयित्वैव संसारद्विष्णोर्लोके कृधीति च ।
आदित्प्रत्नस्येति विष्णुः स्तुत्यो वैकुण्ठलोकगः ।।

आदित्यमण्डलस्थश्च साक्षान्नारायणः प्रभुः ।
उद्वयं त्वितिमन्त्रेण स्तुत्यो वायोरपीश्वरः ।।

अपमृत्युभयं तस्य यदन्तीत्यृग्जपाद् व्रजेत् ।
कालमृत्युर्यदि भवेत् तथा जन्मादिकं भयम् ।।

अन्याभिः कर्मतः पूतो यत्र ब्रह्मेति वैष्णवम् ।
लोकं व्रजेत् तथाऽन्याभ्यां विष्णुर्मोक्षसुखप्रदः ।।

इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च ।
सोमः सौम्यस्वरूपत्वात् पवमानश्च पावनात् ।।

विष्णुः पुरातनत्वात् तु प्रत्नो रेतो महारतिः ।
देवत्रा देव एवासौ सर्वदेवेश्वरो यतः ।।
सूर्यश्च सूरिभिः प्राप्यो नित्यानन्दो रमापतिः ।

### मरणसूचकदुर्निमित्तानि

उप.– अथापि यत्र च्छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत च्छिद्रां वा छायां पश्येत् तदप्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा वटरकाणि संपतन्तीव दृश्यन्ते तानि यदा न पश्येत् तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णा उपशृणुयात् स एषोऽग्निरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात् तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा मेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरिचीरिव पश्येत तदप्येवमेव विद्यात् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात् । इति प्रत्यक्षदर्शनानि ।

### मरणसूचका दुःस्वप्नाः तत्परिहारश्च

अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति

खरैर्वराहैर्युक्तैर्याति कृष्णं धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति । स यद्येतेषां किञ्चित् पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् ।

दुर्निमित्तेषु दुःस्वप्नेषु च भगवद्गुणोपासनमावश्यकम्

स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ।। ४ ।।

भा.– देशतः कालतश्चैव गुणतश्चापि पूर्तितः ।।

अत इत्युच्यते विष्णुः सन्ततो ह्यत उच्यते ।
तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा ।।

अत इत्युच्यते विष्णुः सम्यक्श्रुत्याद्यशक्यतः ।
पूर्णत्वाद् भगवान् विष्णुरश्रुतत्वादिनोदितः ।।

अन्तस्थः सर्वजीवानां पूर्णत्वात् पुरुषाभिधः ।
समः स सर्वरूपेषु सर्वजीवनियामकः ।।
इति विद्यात् परं विष्णुं मुच्यते तेन संसृतेः ।। इत्यादि च ।

शरीरपुरुषादीनां प्राप्यत्वात् तदुपास्यत्वात् तेषां नियामकत्वेन तेभ्योऽप्युत्तमत्वेन तेषु स्थितत्वाच्च तेषां सार इत्युच्यते भगवान् । यदी एव अलकं अरकम् । यत्किञ्चिच्छृणोति तत्सर्वमरतिरूपान्धतमः-प्राप्तिकारणमेव तस्य भवति । तत्र हि सर्वरत्यभावो रतिविरुद्धदुःखं च पूर्णम् । परस्मै शंसनमात्रादरतिरेवेत्यतः प्रस्तुते चतुर्थत्यागेन न

तस्य वाच्यपि भागो अस्ति । न हि प्रवेद सुकृतस्य पन्थामिति दोषद्वय-मेवेत्यवधारयति । न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थान-मित्येतत् तदुक्तं भवतीति । अलकं शृणोतीति त्यागद्वयस्य मुख्यतः । तृतीयस्यापि नरकं शृणोतीति किञ्चिद्भवति । तौ यदाऽस्माच्छरीराद् विहीयेते तदैवैतानि निमित्तानि पश्यन्तीति नियमः । न च तदा पश्यत्येवेति ।

यदन्तीत्यादि ऋचां तात्पर्यनिरूपणम्

वासेन रमयतीति वासरं विष्णुर्ज्योतिः ।

यत्र ब्रह्मा वेदवाक्यं व्याचक्षाणो मखैर्यजन् ।
सोमेन च सुतेनेशमास्ते लोके हरेर्हि सः ।। इति स्कान्दे ।

ग्राव्णा सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्यानन्दं जनयन् । स्वरानन्दरूपो विष्णुः । दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः । द्यौर्नाम वायुपत्नी । अजनयो मरुतो वक्षणाभ्यो दिव आवक्षणाभ्य इत्यादेः । यह्वतीः स्यन्दमानाः ।

सर्वेष्टद जगत्प्राण मामादाय परिस्रव ।
यत्रासौ भगवान् विष्णुस्त्वं हि मोक्षप्रदः सदा ।। इति च ।

इन्दुरिष्टप्रदत्वाद्यो वायुरादाय गच्छति ।
इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा ।। इति च ।

मुन्मोदप्रमोदानन्दशब्दानां अर्थभेदः

अनन्यहेतुकं साक्षाद्भगवद्भक्तिरूपकम् ।
सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः ।।

प्रमोदस्तद्विशेषोत्थो मुन्नामात्यल्पभोगतः ॥
इत्यृग्वेदसंहितायाम् ।

मन्त्रेषु न पौनरुक्त्यम्

तमसः सकाशात् उद्गता वयमुत्तरं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तस्तमेव देवत्रा देवं देवविषयेऽपि देवमगन्म । तदेव ज्योतिष्ट्वेनोत्तरत्वेन च पश्यन्त इति दर्शने इत्थंभावविधानार्थं पूर्वम् । तथैवासौ भगवानुत्तमज्योतिः न राजादिष्विवाविद्यमानभक्तिमात्रमिदमिति ज्ञापयितुमगन्म ज्योतिरुत्तममिति पुनर्वचनम् ।

'अर्चिषोंऽशा वर्तुलास्तु नाम्ना वटरकाः स्मृताः' इति शब्दनिर्णये ।

वृहत्तमं मधु यदि सहापूपं प्रभक्षयेत् ।
स्वप्ने तस्याचिरान्मृत्यू रक्ताब्जे वा शिरोधृते ॥
इति ब्रह्माण्डे ।

रात्र्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता ।
पायसेन हरेन्मृत्युं रात्रिसूक्तादकालिकम् ॥

यदि कालिकमृत्युः स्यात् पदं सा परमं नयेत् ।
सहैव विष्णुना भक्तं विष्णोस्तद्वेदिनं तथा ॥

रतिदत्वात् परो विष्णुर्मुख्यतो रात्रिरुच्यते ।
तदाश्रयत्वाद् दुर्गाऽपि रात्रिरित्यभिधीयते ॥

स्त्रीरूपः स परो विष्णुः पायसेष्टो हि मोक्षदः ।
तस्मादुभौ सहैवेज्यौ भक्त्या दुःस्वप्नदर्शने ॥

रात्रिसूक्तस्य प्रथमऋग्व्याख्यानम्

बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्श ह ।
आयन् सर्वेषु लोकेषु धृतास्तेनैव हि श्रियः ।।

द्वितीयऋग्व्याख्यानम्

नीचानुच्चांश्च जीवान् स ब्रह्मादीनुर्वपूरयत् ।
ज्ञानेन बाधतेऽज्ञानं ......... ......

तृतीयऋग्व्याख्यानम्

....... .......स्वसारं स्वं तथाऽकरोत् ।।

उषआख्यं शुक्लवर्णं प्रमदारूपमेव च ।
तमश्चापाकरोत्येव तदा सूर्यादिषु स्थितः ।।

चतुर्थऋग्व्याख्यानम्

स नः स्वामी यदुदरे यमनाद्यमनामके ।
अविक्ष्महि वयं सर्वे वृक्षे यद्वत्पतत्रिणः ।।

पञ्चमीऋग्व्याख्यानम्

श्येनाख्यास्तु सुखीनत्वादासमन्तात् सुरोत्तमाः ।
पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिनः ।।

ग्रामाख्या बहुलत्वात्तु दैत्या एव प्रकीर्तिताः ।
अर्थिनस्तु कृतार्थत्वात् मुक्ता एव श्रुताः श्रुतौ ।।

षष्ठऋग्व्याख्यानम्

ऊरीकृतप्रमाणत्वादूर्म्यः स भगवान् हरिः ।
वृकास्तेनैव निर्याप्याः वृकाः क्रूरत्वतोऽसुराः ।।

तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः ।
ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः ।।

विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः ।

सप्तमीऋग्व्याख्यानम्

कृष्णं व्यक्तं तमोऽज्ञानमज्ञानां पेशलं हि तत् ।।

तद्यातयत्यृणमिव भगवान् पुरुषोत्तमः ।
स एव चोषाः कथितः प्रकाशत्वाज्जनार्दनः ।।

अष्टमीऋग्व्याख्यानम्

जयिनः स्तोममिव च ब्राह्मणाय यथा च गाः ।
उपाकरं तथा स्तोमं तवाहं तद्वृणीष्व च ।।

द्यौरिति ज्ञानमुद्दिष्टं तद्यङ्गत्वाज्जनार्दनः ।
दुहिता दिव इत्युक्तः ...... .........

रात्रिसूक्तोपासनं मोक्षसाधनं

......... ......... एवमर्थेन पूज्यते ।।

रात्रीसूक्तेन भगवान् साक्षान्नारायणः प्रभुः ।
तत्सन्निधानाद् दुर्गाया एषोऽर्थ उपचारतः ।।
एवं स्तुतस्तथैवेष्टो भगवान् मोक्षदो भवेत् ।

सन्न्यासिभिरपि रात्रिसूक्तं जप्यम्

यदन्तीत्याद्यृचः सर्वा अपि दुःस्वप्नदर्शने ।।

जप्या एव विशेषोऽयं होमो दुःस्वप्नदर्शने ।
परोक्षज्ञानिनो विष्णुरापरोक्ष्यं व्रजेत् त्वरन् ।।

अपरोक्षदृशः प्रीतः सुखाधिक्यं करोत्यतः ।
मुक्तस्य द्विविधैस्तस्माज्जपो योगश्च सर्वथा ।।
कर्तव्यो न्यासिभी रात्रिसूक्तं जप्यं त्रिशोऽञ्जसा ।।
इत्यैतरेयसंहितायाम् ।। ४ ।।

सर्वशब्दोपासनम्

उप.– अथ खल्वियं सर्वस्यै वाच उपनिषत् । सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदः । इमां त्वेवाऽऽचक्षते । पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वराः । अग्ने रूपं स्पर्शा वायोरुष्माण आदित्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराः । चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः । प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः ।

भा.– अथ सर्ववाग्विषया विद्योच्यते । विष्णुशब्दार्थत्वात् सर्ववाचाम् । पूर्वोक्ता अपि सर्ववागुपनिषद एव । तथापि मुख्यत एव सर्ववाग्विषयत्वाद् वक्ष्यमाणामेव सर्वस्यै वाच उपनिषदिति सर्वेऽप्याचक्षते ।

पृथिव्यादिस्थितो विष्णुः पृथिव्याद्यभिधानवान् ।
स्पर्शादीनां देवताऽसौ क्रमेणैव प्रकीर्तितः ।।

मानुषी तनुः दैवी वीणा भवति

उप.– अथ खल्वियं दैवी वीणा भवति । तदनुकृतिरसौ मानुषी वीणा भवति । यथाऽस्याः शिर एवममुष्याः शिरः । यथाऽस्याः उदरमेवममुष्या अम्भणम् । यथाऽस्यै जिह्वैवममुष्यै वादनम् । यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयः । यथाऽस्याः स्वरा एव-ममुष्याः स्वराः । यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शाः । यथा ह्येवेयं शब्दवती तर्ह्मवत्येवमसौ शब्दवती तर्ह्मवती । यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता । लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति । स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्राऽस्य कीर्तिर्भवति यत्र क्व चार्या वाचो भाषन्ते विदुरेनं तत्र ।

भा.– तस्य विष्णोरयं देहो वीणा साक्षात् प्रकीर्तिता ।
दैवी वीणा ततः सेयं लोकसिद्धा तु मानुषी ।।

ब्रह्मादिदेहान् यो वेद विष्णोर्वीणेति भक्तितः ।
विद्यापूर्णसुखः स स्याद्भूमिपूरितकीर्तिमान् ।।

वाक्सिद्धिमन्त्रः

उप.– अथातो वाग्रसः । यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत । तत्रैतामृचं जपेत् ।

ओष्ठापिधाना नकुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ।

इति वाग्रसः ।। ५ ।।

भा.– विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत् ।
ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम् ॥

ओष्ठा पिधानेत्येषा ह्यृक्सारो वाचः प्रकीर्तितः ।
विष्णोर्हि वाचि संस्थस्यैवोष्ठावेतौ पिधानवत् ॥

कुलीति चोक्तो भगवान् प्रलीनाशेषकुत्सितः ।
पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः ॥
सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत् ॥ इति च ।

हरिरेव वाग्देवता

नेत्युपमानार्थम् । ओष्ठावपिधानवदस्येति । न च विष्णोरन्या सर्वस्या वाच ईशाना । स हि मुख्यतः सर्वेश्वरः । तस्यैव प्रस्तुतत्वात् वक्ष्यमाणत्वाच्च । 'श्रियःपतिर्यज्ञपतिर्जगत्पतिर्गिरांपतिर्लोकपतिर्धरापतिः' इति भागवते । 'यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद' इत्यादि-श्रुतिश्च । स्त्रीलिङ्गत्वं देवतेत्यादिवदपि युज्यते । स्त्रीरूपत्वाच्च ॥५॥

वाग्देवतया शरीरपुष्टिः

उप.– अथ हास्मा एतत्कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः । स च्छन्दोभिरात्मानं समदधात् । यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता ।

भा.– संवत्सर इति विशेषणाद्विरिञ्च एवात्र प्रजापतिः । 'ब्रह्मा विश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सरः' इत्यादि श्रुतेः ।

श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम् ।
तेनैव सम्यक्सन्धाय दार्ढ्यं देहस्य सोऽकरोत् ॥
सन्धानात् संहितेत्युक्तो विष्णुरेव सनातनः ।

मानुषी तनुः दैवी वीणा भवति

उप.– अथ खल्वियं दैवी वीणा भवति । तदनुकृतिरसौ मानुषी वीणा भवति । यथाऽस्याः शिर एवममुष्याः शिरः । यथाऽस्याः उदरमेवममुष्या अम्भणम् । यथाऽस्यै जिह्वैवममुष्यै वादनम् । यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयः । यथाऽस्याः स्वरा एवममुष्याः स्वराः । यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शाः । यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती । यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता । लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति । स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्राऽस्य कीर्तिर्भवति यत्र क्व चार्या वाचो भाषन्ते विदुरेनं तत्र ।

भा.– तस्य विष्णोरयं देहो वीणा साक्षात् प्रकीर्तिता ।
दैवी वीणा ततः सेयं लोकसिद्धा तु मानुषी ।।

ब्रह्मादिदेहान् यो वेद विष्णोर्वीणेति भक्तितः ।
विद्यापूर्णसुखः स स्याद्भूमिपूरितकीर्तिमान् ।।

वाक्सिद्धिमन्त्रः

उप.– अथातो वाग्रसः । यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत । तत्रैतामृचं जपेत् ।

ओष्ठापिधाना नकुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ।

इति वाग्रसः ।। ५ ।।

भा.– विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत् ।
ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम् ।।

ओष्ठा पिधानेत्येषा ह्यृक्सारो वाचः प्रकीर्तितः ।
विष्णोर्हि वाचि संस्थस्यैवोष्ठावेतौ पिधानवत् ।।

कुलीति चोक्तो भगवान् प्रलीनाशेषकुत्सितः ।
पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः ।।
सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत् ।। इति च ।

हरिरेव वाग्देवता

नेत्युपमानार्थम् । ओष्ठावपिधानवदस्येति । न च विष्णोरन्या सर्वस्या वाच ईशाना । स हि मुख्यतः सर्वेश्वरः । तस्यैव प्रस्तुतत्वात् वक्ष्यमाणत्वाच्च । 'श्रियःपतिर्यज्ञपतिर्जगत्पतिर्गिरांपतिर्लोकपतिर्धरापतिः' इति भागवते । 'यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद' इत्यादि-श्रुतिश्च । स्त्रीलिङ्गत्वं देवतेत्यादिवदपि युज्यते । स्त्रीरूपत्वाच्च ।।५।।

वाग्देवतया शरीरपुष्टिः

उप.– अथ हास्मा एतत्कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः । स च्छन्दोभिरात्मानं समदधात् । यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता ।

भा.– संवत्सर इति विशेषणाद्विरिञ्च एवात्र प्रजापतिः । 'ब्रह्मा विश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सरः' इत्यादि श्रुतेः ।

श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम् ।
तेनैव सम्यक्सन्धाय दार्ढ्यं देहस्य सोऽकरोत् ।।
सन्धानात् संहितेत्युक्तो विष्णुरेव सनातनः ।

उप.– तस्यै वा एतस्यै संहितायै णकारो बलम् । षकारः प्राण आत्मा । स यो हैतो णकारषकारावनुसंहितमृचो वेद । सबलां सप्राणां संहितां वेद । आयुष्यमिति विद्यात् ।

अक्षरद्वयसंयोगे भगवद्गुणगानम्

भा.– विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते ।।
ण इत्याक्रियमाणत्वात् णकारोऽस्य बलं मतम् ।
विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः ।।

प्रणेतृताऽखिलस्यैव विष्णोरुक्ता तथात्मता ।
आततत्वं सर्वगुणैर्देशतः कालतस्तथा ।।

आत्मशब्दोदितं तच्च षशब्देनाभिधीयते ।
ष इत्याक्रियमाणत्वं प्रणेतृत्वं च पूर्णता ।।

विष्णोः षकार इत्युक्ता वीत्युक्तस्य विशिष्टता ।
अन्त्यस्थित उकारस्तु ताच्छील्यादि हरेर्वदेत् ।।

एवं विशिष्टप्राणत्वमाततत्वं च सर्वतः ।
विशिष्टं च बलं विष्णोः सर्वस्माच्छीलमित्यपि ।।

उदितं विष्णुशब्देन तस्मादृक्संहितामनु ।
वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु ।।

विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः ।
स एव विष्णोर्बलवित् तथा प्राणत्वविद्भवेत् ।।

स एव मुक्तः संसारान्नित्यायुष्मान् भविष्यति ।

उप.– स यदि विचिकित्सेत् सणकारं ब्रवाणीं३ अणकारा९ ३ इति सणकारमेव ब्रूयात् । सषकारं ब्रवाणीं ३ अषकारा९ इति । सषकारमेव ब्रूयात् । ते यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः । अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माह स्थविरः शाकल्यः ।

वेदपुराणानि संहिताप्रतिपादकानि

भा.– संहितासहितत्वेन यदृचो धीमहे वयम् ।।

वेदानन्यान्पुराणं वा तेन विष्णुपदोदितः ।
अवाप्तो भगवान् स्यान्नस्तन्नामार्था यतोऽखिलाः ।।

इत्याहुर्ऋषयः सर्वे ........................

विष्णुनामव्याख्यानत्वाद्वेदादयोऽस्माभिरध्येयाः

उप.– एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे । किमर्था वयं यक्ष्यामहे । वाचि हि प्राणं जुहुमः प्राणे वा वाचम् । यो ह्येव प्रभवः स एवाप्ययः ।

भा.– ........ ........ किमन्याध्ययनाद् भवेत् ।
यज्ञैर्वेत्यृषयोऽप्यन्ये कावषेया वदन्ति हि ।।

मौनेन विष्णुशब्दार्थं ध्यायन्तो वाचमेव वा ।
जुहुमो विष्णुनामाख्यां जपन्तो मन्त्रमेव वा ।।

नमस्कारसमायुक्तं जुहुमः प्राणमत्र हि ।
किमन्यैर्बहुभिः कार्यैरेतस्यैवाधिकत्वतः ।।

एतदर्थानुसन्धानपूर्वं वेदानथापि वा ।
अधीमहे यजामो वा नान्यथा तु कथश्चन ।।

एष एव हि सर्वेषां वेदानामर्थ ईरितः ।
विष्णुनामोदितो योऽर्थस्तद्व्याख्याऽन्यद्वचोऽखिलम् ।।

एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः ।
पूर्णस्वभावः सर्वेषां वचसामर्थ ईरितः ।।

वेदोपदेशः एषां न कार्यः

उप.– ता एताः संहिता नानन्तेवासिने प्रब्रूयात् । नासंवत्सवासिने नाप्रवक्त्रे इत्याचार्या आचार्याः ।। ६ ।।

।। इति श्रीमन्महैतरेयोपनिषत्सु तृतीयारण्यके द्वितीयाध्यायः ।।

।। तृतीयारण्यकं सम्पूर्णम् ।।

भा.– संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः ।
अन्यविद्यास्वशिष्यस्य न ब्रूयात् प्रथमं क्वचित् ।।

व्याख्यानशक्तिहीनाय नैव ब्रूयात् कथश्चन ।
वैष्णवाय सुवृत्ताय सुव्रताय सुशिक्षिणे ।।

शान्ताय सुविशुद्धाय मेधाश्रद्धायुताय च ।
गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम् ।। इति च ।

सर्वशब्दा विष्णुनामव्याख्यानरूपा एव

य एतेन ण इति शब्देनाक्रियमाणं विष्णोः पूर्णबलं षशब्देनाक्रियमाणं देशतः कालतो गुणतश्चातततत्वं सर्वर्चां सर्वासां संहितामनु तदर्थत्वेन वेद । अक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति, स सम्पूर्णवलं सर्वप्रणेतृत्वशक्त्यादियुक्तं विष्णुं वेद । अथेत्यादिका अपि संहितारूपा एव । पदवर्णयोः पृथगनभिव्याहारात् । तस्मात् सर्वशब्दा विष्णुनामव्याख्यानरूपा एव ।

विष्णुनाम्नि षणकारावेव मुख्यौ

यद्वयं संहितायुक्तत्वेनर्चोधीमहे तेनास्माकं णशब्दषशब्दार्थरूपो विष्णुरुपात्तः । तद्व्याख्यानत्वात् सर्ववाचाम् । वीत्युपसर्गत्वादुकारस्य च ताच्छील्यार्थत्वादुक्तार्थविशेषणरूपत्वेन प्रसिद्धत्वान्न पृथक्तयोर्व्याख्यानमत्र कृतम् । ऋच इति सर्ववाचामुपलक्षणम् । अतः सर्ववेदादिशब्दोदितः सर्वगुणपरिपूर्णो भगवान्नारायण इति सिद्धम् ।।६।।

सर्वशब्दवाच्यो नारायणो मम सदैव सुतुष्टिमेतु

सर्वैश्च वैदिकपदैरपि लोकशब्दैर्मे-<br>
घाग्निवारिधितलादिरवैश्च सर्वैः ।<br>
एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं<br>
नारायणो मम सदैव सुतुष्टिमेतु ।।

वायोस्त्रीणि अवताराणि

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं<br>
बट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।<br>
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं<br>
वपुर्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ।।

भाववृत्ते बळित्थासूक्तव्याख्यानम्

हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।।

भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृतः ।
ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।।

प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।।

मध्व आनन्दतीर्थः स्यात् तृतीया मारुतीतनुः ।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।।
यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ।। इति च ।

यजुःशाखायां बळित्थासूक्तव्याख्यानम्

साधको रामवाक्यानां तत्समीपगतः सदा ।
हनुमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।।

पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ।।

दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।।

आसमन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं तु जगदेतदनीश्वरम् ।।

वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।
येन विष्णोर्हि वर्पाख्यान् गुणानज्ञासिषुः परान् ।।

ईशानासः सूरयश्च निगूढाभिर्गुणोक्तिभिः ।
त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।।

येषां हि परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयम्भुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ।। इति च ।

भाष्ये अन्तिमं मङ्गलाचरणम्

पूर्णानन्दगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ऐतरेयोपनिषद्भाष्ये तृतीयारण्यके द्वितीयोऽध्यायः ।।

।। इति श्रीमदैतरेयोपनिषद्भाष्यम् ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ छान्दोग्योपनिषत्

## अथ प्रथमोध्यायः

### उद्गीथोपासना

उप.– ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति तस्योपव्याख्यानम् ।। १ ।।

# अथ छान्दोग्योपनिषद्भाष्यम्

### मङ्गलाचरणम्

अत्युद्रिक्तविदोषसत्सुखमहाज्ञानैकतानप्रभा-
सर्वप्राभवशक्तिभोगबलसत्सारात्मदिव्याकृतिम् ।
सृष्टिस्थाननिरोधनित्यनियतिज्ञानप्रकाशावृति-
ध्वान्तामोक्षविमोक्षदं हरिमजं नित्यं सदोपास्महे ।।

### उपोद्घातभाष्यम्

हयग्रीवमुखोद्गीर्णगीर्भिर्देवी रमा पतिम् ।
अस्तुवद् विस्तृतगुणं भोगिप्रस्तरशायिनम् ।।

ओमितिनामकमक्षरं सर्वसन्निहितत्वादेतत् । उच्चत्वाद्गीतत्वात् सर्वस्थानत्वाच्चोद्गीथं भगवन्तमुपासीत । उक्तं च महासंहितायाम्–

हयग्रीवोद्गीतवाक्यैः रमा देवी रमापतिम् ।
ओमित्येतन्मुखैर्देवमस्तुवत्सामवेदगैः ।। इति ।

ओंनामानमुपासीत तदर्थगुणपूर्वकम् ।
ओतत्वादवनान्मानादधिकोच्चत्वकारणात् ।।
आनन्दादोजसश्चैव भरणादोमुदाहृतः ।। इति समन्वये ।

ओतमस्मिन् जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः ।
इत्योमिति सदोपास्यः सोऽक्षरः पुरुषोत्तमः ।।
उच्चत्वाद्गीयमानत्वात् स्थानादुद्गीथ उच्यते ।

भगवतः ओङ्कारवाच्यत्वकथनम्

ओमित्येनं समुद्दिश्य ह्युद्गाता गायति स्फुटम् ।।

विष्णोरोमितिनाम्नोऽस्य व्याख्यानमधिकोच्चता ।
अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ।।

तथा मितं सर्ववेदैर्मकारेणाभिधीयते ।
अधिकोच्चमिति ज्ञातमोमित्यस्यार्थ ईरितः ।।
तदेतत्परमत्वं तु यथाक्रममुदीर्यते ।

मुक्तये तारतम्यज्ञानमावश्यकम्

देवतानुक्रमज्ञाश्च विष्णोः परमताविदः ।।

एकान्तिनस्ते विज्ञेया यथाक्रमपरास्तथा ।
अस्मादसावुच्च इति क्रमस्यान्तगतं हरिम् ।।

एकमेव तु ये विद्युस्ते ह्येकान्तिन ईरिताः ।
एवं यथाक्रमज्ञाश्च सदैकान्तपरायणाः ।।

प्रविशन्ति परं देवं नारायणमनामयम् ।
उच्चक्रमान्तगत्वेन कुर्युः पूजां हरेः सदा ।।

लक्ष्म्यादेः क्रमशः पूजां ज्ञात्वा भागवता इति ।
स्वतन्त्रपूज्यताबुद्ध्या न दद्युः किञ्च कस्यचित् ।।

ब्रह्माद्या मनुसञ्ज्ञा ये वर्णत्वेनोदिताः श्रुतौ ।
मानवाख्याश्च मुनयस्तान्यजन्ति न चेतरान् ।।

पितृत्वेन गुरुत्वेन साक्षाद्भागवतत्वतः ।
अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि ।।

देवसञ्ज्ञाश्च दीनत्वात् पूजयेयुर्न तान् क्वचित् ।
यद्भागवतबुद्ध्यैव दत्तं ब्रह्मादयः सुराः ।।

वैदिकाः प्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ।
यथाक्रमपरिज्ञानादेकान्तित्वाच्च केवलम् ।।
अच्छिद्रत्वाच्च नियतो मोक्षोऽन्यत्तु विडम्बनम् ।

भक्तिविरक्ती अपि मोक्षसाधने

विष्णौ भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् ।।

तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरम् ।
तृतीयमपि वैराग्यं न चान्यन्मोक्षकारणम् ।।

एतत्साधनताहेतोस्तदन्यद्धि विधीयते ।
अतोऽन्यत्सर्वकृच्चापि गच्छेदेवाधरं तमः ।।

अस्मिन्सुनिष्ठितो नित्यं मोक्ष्येवान्योज्झकोऽपि सन् ।
अतस्तेषां क्रमं वक्ष्ये देवानां यः श्रुतौ श्रुतः ।।

देवतातारतम्यनिरूपणम्

उप.– एषां भूतानां पृथिवी रसः । पृथिव्या आपो रसः । अपामोषधयो रसः । ओषधीनां पुरुषो रसः । पुरुषस्य वाग्रसो

वाच ऋग्रसः । ऋचः साम रसः । साम्न उद्गीथो रसः । स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः ।। २ ।।

भा.– पृथिवी सर्वभूतेभ्यः सदा सर्वगुणैर्वरा ।
रसः सारो वरश्चेति शब्दा एकार्थवाचकाः ।।

पृथिव्या वरुणः श्रेष्ठस्तस्मादोषधिदेवता ।
सोमस्तस्मात्तु पुरुषो रुद्रो यत्पौंस्यदेवता ।।

तस्मात् सरस्वती वाग्घि श्रेष्ठाऽस्या ऋक्स्वरूपिणी ।
सैव श्रेष्ठा ततो वायुर्वरिष्ठस्सामगायकः ।।

समत्वात् सर्वभूतेषु साम साम्नां च देवता ।
ततः श्रेष्ठतमो विष्णुः श्रेष्ठश्रेष्ठतमः सदा ।।

श्रेष्ठाच्छ्रेष्ठतमाच्चापि परमात्परमो विभुः ।
परमर्धियुतत्वाच्च परार्ध्य इति कीर्तितः ।। इति सारनिर्णये ।

अतिशयं परमर्धिगुणः परमः परार्ध्यः । उत्तमेभ्योऽप्यतिपरमोत्तमोत्तमो रसानां रसतमः परमः परार्ध्यः । रसानां सकाशादपि परमपरार्ध्यरसतम इत्यर्थः । प्राणादीनां भूतादिभ्यः श्रेष्ठत्ववदस्य श्रेष्ठत्वं न भवति । किन्तु महान् विशेष इति ज्ञापयितुं रसानां रसतम इत्यादिबहुविशेषणम् । भूतेभ्यः पृथिव्या रसत्वं तेभ्यो वरुणस्य रसतरत्वं सोमस्य रसतमत्वं रुद्रस्य परमरसतमत्वं वाचः परमर्द्धरसतमत्वं प्राणस्य परमपरार्धरसतमत्वम् । अयं तु भगवान् प्राणादपि परमपरार्द्धरसतममात्रो न भवति । किन्तु प्राणस्यापि रसभूताया रमाया अपि परमपरार्ध्यरसतमः । अस्मादप्यतिशयेन परमित्यसङ्ख्यागोचरत्वेन परार्धेन ज्ञेयं हि परार्ध्यम् । ऋग्रूपाया वाचः पृथक् परत्वाङ्गीकारेऽपि भूतेभ्यः

प्राणस्य परमपरार्धरसतमत्वमेव । न तु परमपरार्धिरसतमत्वम् । परस्मादप्या समन्तादृद्धं हि परार्धम् । तेनासङ्ख्यागोचरत्वेन ज्ञेयं परार्ध्यम् । परार्धोत्तमं परार्धि । तेनासङ्ख्यागोचरत्वेन ज्ञेयं परार्ध्यमित्यतः परार्धित्वं श्रियो भवति । श्रियोऽपि परार्ध्यो भगवान् । अतो रसानां रसतमः परमः परार्ध्यः ।

ऋक्सामोद्गीथपदानामर्थकथनम्

उप.– कतमा कतमर्क्, कतमत् कतमत् साम, कतमः कतम उद्गीथ इति विमृष्टं भवति । वागेवर्क्, प्राणः सामोमित्येतदक्षरमुद्गीथः ।। ३ ।।

भा.– पृथिव्याः सोमवरुणयोश्चौषध्यब्देवतात्वेन रुद्रस्य च लिङ्गदेवतात्वेन प्रसिद्धेः ऋगादीनामेव विमर्शः क्रियते कतमा कतमर्गित्यादिना । तज्ज्ञानस्य विशिष्टफलत्वाच्च । वाचश्च सरस्वतीत्वेन प्रसिद्धेर्वागृचोरैक्याच्च न विमर्शः कृतः ।

विशेषात् प्राणसंयुक्ता वागृगित्यभिधीयते ।
ऋ गताविति धातोर्हि ऋक्त्वं सर्गाभिमानिनी ।।

विशेषसंयोगहीना यदा सैव सरस्वती ।
तदा तस्यावरा सैव प्राणसंयोगिनी मता ।।

प्राणयोगवियोगाभ्यां सैषैकाऽपि विभिद्यते ।
वागेवार्क्तच्छ्रुतौ प्रोक्ता प्राणः सामेति कीर्तितः ।।

अक्षयाद्रतिरूपत्वादक्षेषु रमणादपि ।
अक्षरं भगवान् विष्णुरोमित्युच्चत्वहेतुतः ।।

इतिशब्दोऽन्यथाभावनिवृत्त्यर्थ उदाहृतः ।
एवमत्युच्च एवासौ सर्वैदेतद्धृदि स्थितः ।।
उद्गीयमान उद्गीथो भगवान् पुरुषोत्तमः ।

विष्णुः सरस्वतीचतुर्मुखब्रह्माभ्यामुत्तमः

उप.– तद्वा एतन्मिथुनं यद्वाक्च प्राणश्च ऋक् च साम च । तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते ।। ४ ।।

यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य काममापयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ।।५।।

ओङ्कारार्थपूर्णो हरिः

तद्वा एतदनुज्ञाक्षरम् । यद्धि किञ्चानुजानात्योमित्येव तदा हैष उ एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ।। ६ ।।

भा.– तस्मादोमित्यनुज्ञानं कुर्वन्त्येते जनाः सदा ।।

त्वदुक्तं तत्तथा कुर्याद्भगवानेव केशवः ।
इत्यभिप्रायतः शब्दः प्रवृत्तः स पुरातनैः ।।

तदेतदज्ञैस्तु जनैः स्वानुज्ञेति प्रदीयते ।
ओमित्ययं पूर्णवाची समृद्धिर्ह्योमितीरिता ।।

समृद्धस्ते हि कामोऽयमित्यनुज्ञाऽथवा भवेत् ।
अतस्समृद्धिवाची स्याद्धरेरोंशब्द ईरितः ।।

इति वा दीयतेऽनुज्ञा हरिस्तव समृद्धिदः ।
वाक्प्राणौ दम्पती चापि संसृज्येते जनार्दने ।।

मुक्तौ तु तत्प्रसादेन संसृज्यन्ते ततः परे ।
तद्वारेणैव साक्षात्तु प्राणः संसृज्यते हरौ ।।

उप.– तेनेयं त्रयी विद्या वर्तते । ओमित्याश्रावयत्योमिति श९-सत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै । महिम्ना रसेन तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ।। ७ ।।

नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति । इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति । अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत । तस्येतरैः प्राणैरुपव्याख्यानं भवति ।। ८-१ ।।

भा.– तेनैव विष्णुनेयं च त्रयीविद्या प्रवर्तते ।
ओमित्युक्त्वा हि तद्व्याख्या सर्वैर्मन्त्रैः प्रवर्तते ।।

ओंनामकस्य पूजार्थं विष्णोरेव सदैव हि ।
महिम्ना सारभूतेन विष्णुना ज्ञोऽज्ञ एव च ।।

कुरुतः कर्म नाज्ञस्य मुक्तिर्ज्ञस्य भवेत्तु सा ।
स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतम् ।।

अक्षरं भगवान् विष्णुस्तस्योपप्रणवः स्मृतः ।
उपव्याख्या तु तद्व्याख्येत्येवमाह श्रुतिः परा ।। इति तार्तीये ।

परर्धं परमादुच्चं परार्धं तु ततोऽधिकम् ।
ततोऽधिकं परार्धिः स्यात् परार्ध्यमिति तत्परम् ।।

परतः परमाच्चैव परार्धो वायुरीरितः ।
परार्धिनी श्रीरुद्दिष्टा पराध्यों भगवान् हरिः ।।
इति शब्दनिर्णये ।। १ ।।

प्राणप्रतीके देवकृताध्यात्मभगवदुपासना

उप.– देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुः । अनेनैनानभिभविष्याम इति ।। १ ।।

ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तꣳहासुराः पाप्मना विविधुस्तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ।। २ ।।

अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात् तेनोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ।।३।।

अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतत् विद्धम् ।। ४ ।।

अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतत् विद्धम् ।। ५ ।।

अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतत् विद्धम् ।। ६ ।।

अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे त९ हासुराः ऋत्वा विदध्व९सुर्यथाऽश्मानमाखणमृत्वा विध्व९सेतैवम् ।।७।।

### प्राणज्ञानस्य फलम्

स यथाऽश्मानमाखणमृत्वा विध्व९सत एव९ हैव स विध्व९सते य एवं विदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माऽऽखणः ।। ८ ।।

### मुख्यप्राणस्य महिमा

नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येषः । तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवत्येतमु एवान्ततो वित्त्वोत्क्रामति व्याददात्येवान्तत इति ।। ९ ।।

### देवर्षिभिः मुख्यप्राणे कृताया भगवदुपासनायाः फलनिरूपणम्

त९ हाङ्गिरा उद्गीथमुपासाञ्चक्रे एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेन ।। १० ।।

त९ ह बृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते । वाग्घि बृहती तस्या एष पतिस्तेन ।। ११ ।।

त९ हायास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते तेन ।। १२ ।।

तेन तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ।। १३ ।।

आगता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ।। १४,२ ।।

भा.– उद्गीथाख्यस्य विष्णोर्विशिष्टप्रतिमा वायुरेव । अतस्तस्य सर्वोत्तमत्वज्ञानपूर्वकं तस्मिंस्ततोऽप्युत्तमत्वेनोपासित एव भगवान् सम्यक् फलं ददातीति दर्शयति । 'वायौ मुख्यधिया' इति च इति भगवद्वचनम् ।

यस्माद्वायौ स्मृतो विष्णुर्वायोर्मुख्यतयाऽखिलात् ।
स्वस्य मुख्यतया तस्मात् परां तुष्टिं गमिष्यति ।।

अतो विचार्य सकलैर्देवैः प्राणे जनार्दनः ।
उपासितो दैत्यजयकारणात् पापवर्जिते ।।

वायुपुत्रं च नासिक्यमग्निं वागात्मकं तथा ।
सोमं श्रोत्रात्मकं चैव सूर्यं चक्षुःस्वरूपिणम् ।।

रुद्रं मनःस्वरूपं च शेषं चाहंस्वरूपिणम् ।
चित्तात्मकं च गरुडं पापेन विविधुः सुरान् ।।

असुरास्तैर्यतो विद्धास्तस्मात् ते दोषयोगिनः ।
मुख्यवायौ यदा देवाः शरीरस्थे च सूर्यगे ।।

विष्णुमुद्गीथनामानं तदा तं च विदध्वसुः ।
यदा विदध्वसुः प्राणं विध्वास्तास्ते तदाऽसुराः ।।

अखन्याश्मानमेवाप्य लोष्टो विध्वंसते यथा ।
प्रतिमां प्रेयसीं प्राप्य विष्णोः प्राणं तथाऽसुराः ।।

तस्मादादित्यसंस्थे वा शरीरस्थेऽपि वानिले ।
बलज्ञानात्मके दिव्याकृतिमत्युज्ज्वलात्मनि ।।

सर्वदेवोत्तमे विष्णुमुपासीत ततोऽधिकम् ।
अस्योपासनया देवास्सर्वे नामानि भेजिरे ।।

इन्द्रो बृहस्पतिः शम्भुरित्याद्याः प्राणगा यतः ।
प्राणस्य नामशब्दाश्च मुख्यतो विष्णुसंस्थिताः ।।
इति प्रध्याने ।

उद्गीथाख्यं परं विष्णुमुपास्त्याऽजहुरञ्जसा ।
तथापि प्राण एवासौ प्रीतिमागादुपासितः ।। इति च ।

प्राणं प्राप्यैव विध्वस्ता यथा सर्वेऽसुरास्तथा ।
तदुपासकस्य यश्चापि प्रतीपं दातुमिच्छति ।। इति च ।

एवं विदित्वा संसारान्मुक्तिमेष्यत्यसंशयम् ।
विष्णुमप्यन्ततो वेत्ति प्राणवेत्ता यतः स्फुटम् ।।

वीति विष्णुः समुद्दिष्टो विशिष्टत्वात्तु सर्वतः ।
आददात्येव तं प्राणवेत्ताऽन्ते तत्प्रसादतः ।।

प्राणात् परं तु ये विष्णुं जीवांश्चैवावरांस्ततः ।
ये विदुस्ते विदुः प्राणं नान्यथा तु कथञ्चन ।। इति च ।

प्राण उद्गीथ इत्याद्या नाम ब्रह्मादिकास्तथा ।
सप्तम्यर्थाः समुद्दिष्टाः सप्तसु प्रथमा यतः ।।
प्राणमुद्गीथमित्याद्याः द्वितीया सप्तमी मता ।। इति च ।।२।।

अधिदैवं मुख्यप्राणे भगवदुपासना

उप.– अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीत । उद्यन् वा एष प्रजाभ्य उद्गायत्युद्यंस्तमो भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ।। १ ।।

भा.– आदित्यसंस्थितो नित्यं प्राणस्तपति नापरः ।
प्रकाशनं च तपनं काष्ठवत्सूर्यगं भवेत् ।।

सूर्यमण्डलगो वायुरुदयास्तमयोज्झितः ।
अपि प्रजाभ्य उद्यंश्चैवोद्गायति जनार्दनम् ।।

शरीरस्थप्राणे सूर्यमण्डलस्थप्राणे च भगवदुपासना

उप.– समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ।। २ ।।

भा.– आदित्यमण्डलस्थश्च सर्वप्राणिगतस्तथा ।
वायुस्समान एवायमुष्णोऽसावपि च स्फुटम् ।।

तस्मादस्मिन्नमुष्मिन् वाऽप्युद्गीथाख्यं जनार्दनम् ।
उपासीत विमोक्षाय सर्वकामाप्तये तथा ।। इति च ।

केशवः स्वः स्वतन्त्रत्वात् तद्रतेर्मारुतः स्वरः ।
शरीरस्थश्च सूर्यस्थः प्रतिप्रत्या समन्ततः ।।
मां प्रतीत्यत एवासौ प्रत्यास्वर उदाहृतः ।

व्याननामके वायौ भगवदुपासना

उप.– अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरति या वाक् सा ऋक् तस्मात् अप्राणन्ननपानन् ऋचमभिव्याहरति या ऋक् तत्साम तस्मादप्राणन्ननपानन् साम गायति यत्साम स उद्गीथ-स्तस्मादप्राणन्ननपानन् उद्गायति ।। ३ ।।

त्रिविधप्राणादिपञ्चकनिरूपणम्

भा.– प्राणाद्यास्त्रिविधाः पञ्चप्रधानो वायुरेव च ।।

मुख्यपञ्चकरूपस्सन् गरुडो मध्यपञ्चकः ।
अवमः पञ्चकस्त्वन्ये प्राणाद्यास्तस्य सूनवः ।।

इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः ।
प्राणापानौ शेषवीन्द्रौ तथोदानसमानकौ ।।

रुद्रेन्द्रौ तत्परः श्रेष्ठो वायुर्व्यान उदाहृतः ।
तस्मिन्नुद्गीथनामानमुपासीत हरिं परम् ।।

योऽसौ व्यानगतो विष्णुः स वागृक्सामगः सदा ।
उद्गीथे च स एवैकस्तस्माद् व्यानाद्धि तत्क्रियाः ।।

उप.– अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानन् तानि करोत्येतस्य हेतोर्व्यानमोवोद्गीथमुपासीत ।। ४ ।।

भा.– उद्गीथनामा भगवान् स्थितो व्यानादिपञ्चके ।
वीर्यवत्कर्मकृत् तस्माद्व्यान एव ह्युदाहृतः ।।

तस्माद् व्यानगतं विष्णुमुपासीतैव नित्यशः ।
यद्यप्येको हि भगवान् सर्वदा सर्ववस्तुगः ।।

अनूनोद्रिक्तमहिमो निर्विशेषस्सदैव च ।
तथापि तत्क्रियाभेदान्नामरूपादिकं पृथक् ।।

उच्यते ह्यपृथक्त्वेऽपि पूर्णैश्वर्यैकहेतुतः ।
अविशेषोऽपि भगवान् सर्वशक्तित्वहेतुतः ।।
विशेषहेतुकं सर्वं करोत्यविकृतः सदा ।

उद्गीथाक्षरोपासना

उप.– अथ खलूद्गीथाक्षराण्युपासीतोद् गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो हि गिर इत्याचक्षतेऽन्नं थमन्ने हीदं सर्वं स्थितं द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थं सामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ।। ५ ।।

काम्यसाधकवस्तुषु भगवदुपासना

उप.– अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात् तत्सामोपधावेद्यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन् स्यात् तां देवतामुपधावेद्येन च्छन्दसा स्तोष्यन् स्यात् तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात् त९

स्तोममुपधावेद्यां दिशमभिष्टोष्यन् स्यात् तां दिशमुपधावेदात्मान-मन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ।।६,३।।

भा.– उद्गीथाक्षरगं चैव प्राणादिषु च संस्थितम् ।।

आशीःसमृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् ।
एकमेव हरिं वेद यः स सर्वेष्टमाप्नुयात् ।। इति च ।

उच्छब्दवाच्याः प्राणाद्याः वागाद्या गीरितीरिताः ।
अन्नाद्यास्थमिति प्रोक्तास्तेषूद्गीथो हरिः स्थितः ।। इति च ।

आत्मानं परमात्मानमन्ततः सर्वोत्तमत्वेन सर्वत्रोपसृत्य ।।३।।

प्रणवोपासना तत्फलं च

उप.– ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योप-व्याख्यानम् । देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविश९स्ते छन्दोभिराच्छादयन्यदेभिराच्छादय९स्तच्छन्दसां छन्दस्त्वं तान् उ तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि तेऽनुवित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ।। १ ।।

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येव९ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षर९ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ।। २, ४ ।।

भा.– स्वरतेस्तु स्वरो विष्णुस्तद्रतेर्वायुरुच्यते ।
वायुस्वरे स्वरं विष्णुमोमाख्यं समुपासिरे ।।

देवास्तेनामृतं प्राप्ता मुक्त्याख्यं मृत्युवर्जिताः ।
मारणान्मृत्युरित्युक्ता दुर्गा तद्भयतः सुराः ।।
ओमित्युपास्य तं विष्णुं परमामृतमापिरे ।। इति सन्ध्याने ।

ऊर्ध्वा उत्तमाः ।। ४ ।।

उद्गीथः प्रणवश्चैक एव

उप.– अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वाऽऽदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ।। १ ।।

सूर्यकिरणगतवायौ भगवदुपासनाफलम्

एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣲस्त्वं पर्यावर्तयताद् बहवो वै ते भविष्यन्तीत्यधिदैवतम् ।। २ ।।

इन्द्रियगतवायौ भगवदुपासनाफलम्

उप.– अथाध्यात्मं य एवायं मुख्यप्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ।। ३ ।।

एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद् बहवो वै ते भविष्यन्तीति ।। ४ ।।

अग्निस्थभगवदुपासनया सामगानदोषस्य प्रायश्चित्तनिरूपणम्

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ।। ५ ।। ५ ।।

भा.– आदित्यसंस्थितो वायुः प्रणवस्तद्गतो हरिः ।
प्रकृष्टत्वाच्च नेतृत्वाद्गतित्वादखिलस्य च ॥

उद्गीथ उच्चैर्गीयत्वात् स एव पुरुषोत्तमः ।
स एव प्राणगो देहे ओमित्येव सदा जपन् ॥

एत्येष भगवान् विष्णुर्ध्यायन्नेकं तमक्षरम् ।
एकपुत्रो मुक्तिमेति ध्यायन् प्राणेषु रश्मिषु ॥
बहुपुत्रो विमुक्तः स्यात् तस्माद्ध्यायेत् तथा परम् ॥ इति च ।

प्राणस्थं भूमानमभिगायदुरुद्गीतमनुसमाहरति । अनुरूपमेव करोति । होतृसदनस्थमग्निस्थं भगवन्तं ध्यात्वा ।

अन्यथागानजं दोषमग्नौ ध्यात्वा हरिं परम् ।
अपाकरोति तस्मात् तं ध्यायेदेवाग्निगं सदा ॥

इति त्रैविद्ये ॥ ५ ॥

सरस्वतीवाय्वोरुपासना

उप.– इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते इयमेव साग्निरमस्तत्साम ॥ १ ॥

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम ॥ २ ॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते द्यौरेव सादित्योऽमस्तत् साम ॥ ३ ॥

नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत् साम ॥४॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढ९ꣳ साम तस्मादृच्यध्यूढ९ꣳ साम गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव साम यन्नीलं परः कृष्णं तदमस्तत् साम ।। ५ ।।

भा.– अग्नीरसूर्यनीलेषु वायुस्थः सामदेवता ।
उर्वीवियद्द्युशुक्लेषु ऋग्देवीस्था सरस्वती ।।

सेति भार्या हि वाग्देवी प्राणोऽमः पतिरीरितः ।
एवं तौ सामनामानावुभावेवाप्युदाहृतौ ।।
अतो हि सामवेदोयं ऋक्सामात्मक ईरितः ।

सूर्यान्तर्गतप्राणस्थभगवन्महिमा

उप.– अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः ।। ६ ।।

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति । नाम स एषः सर्वेभ्यः पाप्मभ्यः उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ।। ७ ।।

तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात् त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ।। ८, ९ ।।

भा.– वागादिष्वेवमेवैतौ वाक्प्राणौ सर्वदा स्थितौ ।।

तयोरन्तःस्थितो विष्णुर्गायको तस्य तावुभौ ।
ऋक्सामाभ्यां स उन्नामा पापोद्गश्चोच्च एव च ॥
इत्यादि सत्तत्त्वे ।

कप्यासरक्तपद्माक्षः सूर्यगश्चाक्षिगश्च सः ।
गायकस्तस्य विष्णोर्यः स स्वर्ग्यांश्च नृलोकगान् ॥

कामान् दद्यान्नरश्चेत् स्यात् सुराणां च नृणामपि ।
मोक्षदो यदि वायुः स्यान्मुख्योद्गाता ततोऽनिलः ॥ इति च ।

'तस्मादुद्गीथ उच्चोऽसौ गीयते च' इति ।

देहगतऋक्साम्नोरुपासना

उप.– अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते वागेव सा प्राणोऽमस्तत् साम ॥ १ ॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते चक्षुरेव साप्राणोऽमस्तत् साम ॥ २ ॥

भा.–आत्मा जीवः ।

सरस्वती हि चक्षुःस्था जीवस्थो वायुरीरितः ।
विदित्वा तावुभौ देवी तद्गं ध्यायेद्धरिं सदा ॥ इति मानसे ।

उप.– श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते श्रोत्रमेव सा मनोऽमस्तत् साम ॥३॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम

तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ।। ४ ।।

अक्षिस्थोद्गीथमहिमा

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावदमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ।। ५ ।।

भा.– दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि चैकराट् ।
ऋङ्नामा ज्ञानरूपत्वात् साम नित्यसमत्वतः ।।
उक्थमुत्थापकत्वाच्च यजुर्याज्यस्वरूपतः ।
ब्रह्मासौ पूर्णरूपत्वादेवं सर्वाभिधानवान् ।। इति च ।।

उप.– स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयः ।। ६ ।।

अथ य देतदेवं विद्वान् साम गायत्युभौ साम गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ता९श्चाप्नोति देवकामास्ता९श्च ।। ७ ।।

अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ता९श्चाप्नोति मनुष्यकामा९श्च तस्मादु हैवंविदुद्गाता ब्रूयात् ।। ८ ।।

कं ते काममागायानीत्येष ह्येष कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ।। ९ ।। ७ ।।

भा.– यथा वदरिकानाथो द्वारकानाथ इत्यपि ।
अर्वाङ्नाथः पराङ्नाथ इति तद्वहिहोच्यते ॥
सर्वनाथोऽपि भगवान् सन्निधानविशेषतः ॥ इति च
॥ ६-९ ॥ ७ ॥

### उद्गीथनामकभगवद्विषये कथा

उप.– त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यः चैकितायनो दाल्भ्यः प्रवाहणो जैबिलिरिति । ते होचुरुद्गीथे ये कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥

तथेति ह समुपविविशुः स ह प्रवाहणो जैबिलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाच९ श्रोष्यामीति स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति ॥ २ ॥

### शिलककृतप्रश्नानां दाल्भ्याभिहितोत्तराणि

स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति ॥ ३ ॥

न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसंस्तावं हि सामेति । तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं उवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान् मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥४॥

दाल्भ्यकृतप्रश्नानां शिलकाभिहितोत्तराणि

हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ।

प्रवाहणस्याशयः

तं ह प्रवाहणो जैबिलिरुवाचान्तवद्वै किल ते शालावत्य साम यत्स्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ।। ५ ।। ८ ।।

भा.– अग्निः सामाभिमानी स्याद् वरुणस्तु स्वरात्मकः ।
प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः ।।

अन्नाभिमानी दक्षश्च शक्रस्त्वबभिमानवान् ।
द्व्यात्मकश्च शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः ।
क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः ।। इति निवृत्ते ।

अग्नेर्वागात्मकत्वात् ।उदकात्मकत्वात् स्वरस्य । 'आदित्य एव प्राणोऽन्नं वै प्रजापतिः' इति श्रुतेः । 'आप एवेन्द्रो द्यौर्वाव रुद्रः' इत्यादेश्च ।

कथाया उद्देशः

विशेषज्ञानसंप्राप्त्यै जानन्तोऽपि परं हरिम् ।
ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम् ।। इति ब्रह्मतर्के ।

स्वर्गाभिमानिरुद्रं प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम । मूर्धा ते विपतेदिति यः कश्चिद् ब्रूयाच्चेत् विपतिष्यति ।

ब्रह्मैव हि पृथिव्यात्मा ....... ...... ।

उद्गीथनामकभगवानेव सर्वोत्तमः

उप.– अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः ।। १ ।।

हरिसर्वोत्तमत्वज्ञानफलम्

परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतमेवं विद्वान् परोवरीयांसमुद्गीथमुपास्ते । तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रयाजमुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथामुष्मिँल्लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति

।। २ ।। ९ ।।

भा.– ........ ..... विष्णुराकाशनामकः ।
आदीप्तत्वाद्वरीयांश्च परमो हरिरेव हि ।। इति सत्तत्त्वे ।

शुभाशुभानां दाहादौ साम्यात् सामाग्निरीरितः ।
स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः ।।

उदयाज्जगत्प्रणेतृत्वात् सूर्यः प्राण उदाहृतः ।
अत्ता रुद्रस्तद्विरोधाद् दक्षः स्यादन्ननामकः ।।

स्वो विष्णुस्तद्रतिर्वायुस्तद्गो मुक्तौ सदाशिवः ।
अतः स्वर्गोसुसंस्थत्वादसाविति च कीर्तितः ।।

सर्वदेवान्तरत्वात् तु ब्रह्मायं समुदाहृतः ।
लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः ।। इति ब्रह्मतर्के ।

आपालनादाप इन्द्रः । अधिकं वरीयान् परोवरीयान् । तत्परोवरीयोऽस्य रक्षकं भवति । यावत्तः द्वापरादिपर्यन्तम् ।। ८ ।। ९ ।।

उषस्तेर्वृत्तान्तः

उप.– मटचीहतेषु कुरुष्वाटक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे ।। १ ।।

भा.– उपला इष्टकाः स्थूला मटचीति प्रकीर्तिताः । इति शब्दनिर्णये ।

आसन्नयौवना योषिदाटकीत्यभिधीयते । इति च ।

प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः । इति च ।। १० ।।

उप.– त९ होवाच नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीत९ स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति ।। २ ।।

न वा अजीविष्यमिमान् अखादन्निति होवाच कामो म उदपानमिति स ह खादित्वातिशेषान् जायाय आजहार साग्र एव सुभिक्षा बभूव

तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ।। ३ ।।

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वामुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोप विवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ।। ४ ।। १० ।।

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैशिषं भगवतो वा अहमवित्त्याऽन्यानवृषि भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति ।। १ ।।

तथेत्यथ तर्ह्येत एव महतिसृष्टास्तुवन्तां यावत्तेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ।। २ ।।

अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ।। ३ ।।

प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभि-संविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेद-विद्वान् प्रस्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति ।।४।।

अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वान् उद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्य-मुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद-गास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोप-ससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रति-हरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यन्नमिति होवाच ।। ५ ।।

सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ।। ६,११।।

भा.— प्राणस्थविष्णुना सर्वे प्रसूयन्ते यतस्ततः ।
प्रस्तावदेवता स स्यात् प्रस्तावस्तु जनिर्यतः ।।

आदित्यसंस्थितो विष्णुर्यत्सदा सर्वगीतभुक् ।
राजादौ गीतमप्यङ्गैर्भुङ्क्ते गानस्य देवता ।।

उद्गीथदेवता तस्मात् स एव पुरुषोत्तमः ।
अन्नस्थेनैव जीवन्ति भूतान्येतानि विष्णुना ।।
प्रतिहारदेवताऽतः स प्रतिहारो हि भोजनम् ।। इति च ।

उच्चैः सन्तमुत्तमं सन्तम् ।। ११ ।।

## शौवोद्गीथोपासना

उप.– अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उप-समेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ।। १ ।।

तान् होवाचेहैव सा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ते ह यथैवेदं बहिष्पवमानेन स्तोष्य-माणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिङ्चक्रुरो-३मदा३मोंपिबा३मों देवो वरुणः प्रजापतिः सविता३न्नमिहा-३हरदन्नपते३न्नमिहा३हराऽहरोमिति ।। २ ।। १२ ।।

भा.– दल्भपुत्रो बको मित्रया पुत्रार्थे स्वीकृतो ग्लाववत् तूष्णीं स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जातः । अत उभयथाऽस्य निर्देशो भवतीत्यर्थः ।

प्रसादार्थं बकस्यापि वायुनोक्तः श्वरूपिणा ।
शौवोद्गीथ इति प्रोक्तो रुद्रादीनां श्वरूपिणाम् ।।

उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः ।
सर्वाभीष्टं ददातीति प्रातरित्याह मारुतः ।।

ओमदामादिकं मन्त्रं वायुनोक्तं तु देवताः ।
वायुस्थविष्णुमुद्दिश्य हिङ्कृत्य प्रापुरीप्सितम् ।।

देवौ विष्णुश्च वायुश्च सर्वज्ञत्वात् क्रमेण तु ।
वरुणौ वरणीयत्वात् सवितारौ प्रसूतितः ।।
प्रजानां च पती तद्वत् क्रमादेव प्रकीर्तितौ ।। इति च ।।१२।।

स्तोभाक्षरेषु देवतोपासना

उप.– अयं वाव लोको हावुकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकार आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं याया वाग्विराड-निरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुप्कारो दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ।। १ ।। १३ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि प्रथमोऽध्यायः ।।

भा.– हूयतेऽत्राग्निहोत्रादिर्हावुकारस्त्वियं ततः ।
हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः ।।

हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् ।
आनन्तर्यात् प्रकाशस्य सूर्याचन्द्रस्तथेरितः ।।

सर्वसामीप्यतो विष्णुरिहेति कथितः सदा ।
इन्धनादग्निरीकार ऊकारस्सूर्य उच्चितः ।।

नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः ।
एतीत्येकार एवासौ औहोयीत्यखिलाः सुराः ।।

उच्चत्वाद्विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः ।
मुक्तावौहोयिनस्तस्मात् सर्वदेवाः प्रकीर्तिताः ।।

हीति निश्चय उद्दिष्टो निश्चयज्ञानतस्सदा ।
ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः ।।

स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः ।
ययिर्नित्यगतेर्वायुस्तद्भायाया सरस्वती ।।

सैवान्नदेवता प्रोक्ता याऽत्रा प्राणेन नीयते ।
सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् ।।

विराडुक्ता निरुक्तस्तु व्याप्तो नारायणस्तु यः ।
आहूत एव पातीति हुप्कार इति कीर्तितः ।।

हुवित्याक्रियते यस्माद् हुप्कारस्तु जनार्दनः ।
अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः ।। इति माहात्म्ये ।

सम्यक् चरतीति स एव सञ्चरः ।। १३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः ।।

## अथ द्वितीयोऽध्यायः

### साधुसामपदयोः समानार्थकत्वम्

उप.– ॐ समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ।। १ ।।

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नै-नमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ।। २ ।।

अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ।।३।।

स य एतदेवंविद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेन९ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ।। ४ ।। १ ।।

भा.– समस्तस्य पूर्णस्य साधुत्वात् सामनाम्नो विष्णोरुपासनं साधु । सारत्वेन मेयं साम । सारत्वेन धार्यं साध्वित्येक एवार्थः ।

साधुत्वात् सामनामानं समस्तगुणपूर्तितः ।
समस्तं य उपासीत नारायणमनामयम् ।।
सर्वसाम्नां देवतेति स मुक्तः साधुधर्मभाग् ।।
इति सामसंहितायाम् ।। १ ।।

## लोकेषु भगवदुपासना

उप.– लोकेषु पञ्चविध९ सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ।।१।।

अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ।। २ ।।

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वा९ल्लोकेषु पञ्चविध९ सामोपास्ते ।। ३ ।। २ ।।

भा.– नारायणाख्य उद्गीथ उद्गेयः प्रणवेन यत् ।
उद्गच्छन्ति यतोऽस्माद्वा वासुदेवादिमूर्तयः ।।

प्रथमावताररूपत्वाद् वासुदेवः परः पुमान् ।
प्रस्तावो निधनं चापि सङ्कर्षण उदाहृतः ।।

सङ्कर्षणो हि संहर्ता प्रद्युम्नः परमेश्वरः ।
हिङ्कार इति सम्प्रोक्तो हीति सृष्टिरुदीर्यते ।।

प्रसिद्धता हि सृष्टिः स्यादनिरुद्धः परो विभुः ।
प्रतिहार इति प्रोक्तः स हि कार्येष्विदं जगत् ।।

प्रतिप्रति हरेर्नित्यं मूर्तिप्रतिहृतेस्तथा ।
ते पृथिव्यादिषु सदा तन्नामानः प्रतिष्ठिताः ।।

पृथिवीत्याादिशब्दार्थास्ते हि मुख्यत ईरिताः ।
तत्सम्बन्धात् तदर्थत्वं पृथिव्यादेरमुख्यतः ।।

प्रथनादेव सस्यादेः पृथिवीत्वमुदाहृतम् ।
अग्नित्वमदनाच्चैव ह्यन्तरीक्षणयोगतः ।।

अभावाद्व्यवधानस्य त्वन्तरिक्षमितीर्यते ।
आदानादायुषश्चैव स आदित्य उदीरितः ।।
द्यौः क्रीडाकारणत्वाच्च तत्सर्वं हि परे हरौ ।। इति च ।

पञ्चात्मकं यो लोकेषु सदोपास्ते हरिं परम् ।
ऊर्ध्वाधःसंस्थितास्तस्य पञ्चैव दशमूर्तयः ।।
मोक्षादिकमभीष्टं यत्कल्पन्तेऽस्य सदैव हि ।। इति च ।।२।।

वृष्टौ भगवदुपासना

उप.– वृष्टौ पञ्चविध९ सामोपासीत । पुरो वातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ।। १ ।।

उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविध९ सामोपास्ते ।। २ ।। ३ ।।

भा.– पञ्चरूपं तु यो विष्णुं पुरोवातादिषु स्थितम् ।
उपास्ते वृष्टिरस्मै स्याद्वर्षयत्यस्य मुक्तिगान् ।।
सर्वभोगांश्च भगवान् पञ्चरूपी जनार्दनः ।। इति च ।।३।।

### अप्सु भगवदुपासना

उप.– सर्वास्वप्सु पञ्चविधꣳ सामोपासीत । मेघो यत्संप्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ।। १ ।।

न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवंविद्वान् सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ।। २ ।। ४ ।।

भा.– अप्सु पञ्चविधोपासी यो नारायणवान् भवेत् ।
न चास्य मृतिरप्सु स्यादप्सुषड्गवान् हरिः ।। इति च ।

अप्सु स्थितनारायणवान् मुक्तो भवतीत्यर्थः ।

अपः सूत इत्यप्सूर्भगवान् । दीर्घलोपेनाप्सुमानिति वा ।। ४ ।।

### ऋतुषु भगवदुपासना

उप.– ऋतुषु पञ्चविधꣳ सामोपासीत । वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ।। १ ।।

कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ।। २ ।। ५ ।।

भा.– हेमन्तशिशिरयोरैक्येन पञ्चत्वम् ।

ऋतुनामानमृतुगमृतत्वादृतुनामकः ।
इत्युपासीत यो विष्णुं पश्चात्मानममुष्य हि ।।

मोक्षादीन् कल्पते चास्य ऋतुसंस्थो जनार्दनः ।
रक्ष्यत्वात् तेन तद्वांश्च सदैव स्यादुपासकः ।। इति च ।

वासस्य सुखकारित्वात् वसन्तः पुरुषोत्तमः ।
नीरादेर्गरणाद् ग्रीष्मो वर्षणाद्वर्ष उच्यते ।।
शं रातीति शरत्प्रोक्तो हेमन्तो हिमकारणात् ।। इति च ।।५।।

पशुषु भगवदुपासना

उप.– पशुषु पञ्चविधꣳ सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवन्ति हास्य पशवः पशुमान् भवति य एतदेवंविद्वान् पशुषु पञ्चविधꣳ सामोपास्ते ।। ६ ।।

भा.– पालनात् सुखरूपत्वात् पशुनामा जनार्दनः ।
मुक्तस्तद्वान् भवत्येव पशुषूपासको हरेः ।। इति च ।

यज्ञेनाश्नहेतुत्वादजस्थो भगवानजः ।
अविस्थस्त्वविरेवोक्तो ऊर्णया शीततोऽवनात् ।।

गौश्च सद्गतिहेतुत्वाद् गोस्थः स पुरुषोत्तमः ।
अश्वश्चैवाशुगन्तृत्वात् पुरुषः पूर्तिहेतुतः ।। इति च ।

भवन्ति हास्य पशव इति प्रसिद्धपशव एव । अजा इत्यादिवहुवचनं वहुरूपत्वाद्भगवतः ।। ६ ।।

इन्द्रियेषु भगवदुपासना

उप.– प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारः

**वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयांसि वैतानि परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ।। ७ ।।**

भा.– परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम् ।।

परोवरीयांस्येतानि विष्णो रूपाणि सर्वशः ।
तेषां विशेषो नैवास्ति सदा तानि समानि हि ।।
अत्युत्तमोत्तमान्येतान्यन्यस्मात् सर्वतोऽपि तु ।। इति च ।

प्राणो नेतृत्वतो विष्णुर्वाक्सर्ववचनात् सदा ।
चक्षुश्च दर्शनान्नित्यं श्रोत्रं श्रवणहेतुतः ।।
मनो मन्तृत्वतश्चास्य ह्येक एव तु पञ्चधा ।। इति च ।

परोवरीयो ब्रह्मास्य भवति सर्वापेक्षितदातृत्वात् ।। ७ ।।

वाक्येषु सप्तविधसामप्रतिपाद्यभगवदुपासना

**उप.– अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते ।। ८ ।। १ ।।**

भा.– आदिः कल्पादिहेतुत्वात् क्रोडात्मा केशवः स्वयम् ।
दुष्टोपद्रवकर्तृत्वान्नरसिंह उपद्रवः ।। इति च ।

हुङ्कारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः ।
आकारयुक्ते वाराहो वासुदेवः प्रसंयुते ॥

नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः ।
उपयुक्ते नृसिंहश्च नीतिसङ्कर्षणस्तथा ॥

अभावे यावदेते स्युस्तावत् तद्दैवतं स्मृतम् ।
एवं सप्तविधं विष्णुं य उपास्ते परं विभुम् ॥
वाङ्नामा भगवांस्तस्य भवेत् सर्वार्थदोहकृत् ॥ इति च ॥८॥

आदित्ये सप्तरूपिभगवदुपासना

उप.– अथ खल्वमुमादित्य९ सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् ।

भा.– आदित्यस्थं परं विष्णुं ध्यायेदादित्यनामकम् ।
सप्तरूपं साम चासौ सर्वदा समरूपतः ॥

सर्वेषां मां प्रतीत्येव दृष्टिसाम्याच्च साम सः ।
दृष्टिसाम्यं मण्डलस्य विष्णुस्तस्य च कारणम् ॥
तस्मिन्निमानि भूतानि सर्वाण्येवाश्रितानि हि ।

उप.– तस्य यत्पुरोदयात् स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात् ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥

अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात् ते प्रस्तुतिकामाः प्रश९साकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

अथ यत्सङ्गववेलायाꣳ स आदिस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात् तान्यन्तरिक्षेऽनारम्भणान्यादायात्मानं परिपतन्त्यादि-भाजीनो ह्येतस्य साम्नः ।। ४ ।।

अथ यत्सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात् ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ।। ५ ।।

अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्मात् ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ।। ६ ।।

अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्यारण्या अन्वा-यत्तास्तस्मात् ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ।। ७ ।।

अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात् तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ।। ८ ।। ९ ।।

भा.– उदयात् पूर्वमेवासौ भवेत् प्रद्युम्ननामकः ।।

पश्वाधारस्तदात्माऽसौ वासुदेवस्तथोदये ।
आश्रयश्च नृणां तत्र वराहः सङ्गवे तु सः ।।

तत्र पक्ष्याश्रयो विष्णुस्तथा नारायणाभिधः ।
मध्यन्दिने स आधारो देवानां च ततः परम् ।।

अनिरुद्धस्स आधारो गर्भस्थानां सदैव हि ।
ततः परं नृसिंहाख्यः स आरण्याश्रयो मतः ।।

अथास्तमितवेलायां स सङ्कर्षण ईरितः ।
आश्रयः स पितॄणां च सप्तात्मकमुपास्य तम् ।।
प्राप्नोति परमं स्थानं मुक्तः संसारसागरात् ।। इति च ।।

हिङ्कारनामानमाश्रितत्वाद्धिङ्कुर्वन्ति । प्रस्तावाश्रयात् प्रस्तुतिकामाः प्रारम्भकामाः प्रशंसाकामाश्च । प्रारम्भावतारत्वात् प्रशंसादेवतात्वाच्च तस्य । सर्वाधारत्वाद् वराहस्य तदाधाराणां पक्षिणामनाधारेणैव गमनम् । नारायणनामार्थत्वेन सर्वगुणपूर्त्योपासनात् सर्वोत्तमा देवाः । इतरमूर्तीनामपि सर्वगुणपूर्त्योपासने नारायणोपासनमेव भवति । सर्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य । अनिरुद्धाश्रयत्वाद् गर्भाणां पितुः शरीरादन्यत्र प्रतिहृता अपि न विनश्यन्ति । वर्धन्ते च तत्रैव । अन्यद्धि भुक्तं जीर्यत एव । 'धाता गर्भं दधातु ते' इति च श्रुतिः । धाता हि भगवाननिरुद्धः । विष्णुस्त्वष्टा प्रजापतिर्धाता इति च चतुर्मूर्तयो ह्युच्यन्ते ।

योनिक्लृप्तिर्वासुदेवाद्रूपं सङ्कर्षणाद्भवेत् ।
आसेककर्मा प्रद्युम्नादनिरुद्धाच्च धारणम् ।। इति च ।

व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टा त्वेषाद्द्वितीयकः ।
प्रजापतिः प्रजापातान्निषेकः पातनं ततः ।।

प्रजापतिस्तु प्रद्युम्नो धाता धारणकर्मतः ।
अनिरुद्ध इति प्रोक्तः कृष्णरामौ तथाश्विनौ ।। इति च ।

कक्षश्वभ्रे नृसिंहस्य सदावस्थितिकारणात् ।
द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञानेऽपि रक्षणात् ।।

मृगा भीता यतस्तेषां नृसिंहस्त्वाश्रयः सदा ।
पितॄणामाश्रयो यस्मात् सङ्कर्षण उदाहृतः ।।

अतस्तान् प्रति पिण्डादीन् निदधत्यज्ञका अपि ।
अन्यथा तन्मृतानां तु कुत एवोपतिष्ठति ।। इति च ।

न रूपाणां विशेषोऽस्ति गुणतो नामतोऽपि वा ।
तथापि तत्प्रियं नाम नारायण इति स्म ह ।।

विशेषतः समस्तानां नाम्नां तस्यार्थ एव तु ।
विज्ञायते गुणैः पूर्तिर्नामसाम्यं तदा तथा ।। इति च ।

नाम्नो नारायणाख्यस्य गुणैः पूर्तिं हि देवताः ।
विज्ञायार्थमुपास्यैव सर्वाधिक्यमथापिरे ।। इति च ।। ९ ।।

सप्तविधसामप्रतिपाद्यभगवतो रूपाणि समानि

उप.– अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ।। १ ।।

आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ।।२।।

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षर-मतिशिष्यते त्र्यक्षरं तत्समम् ।। ३ ।।

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ।। ४ ।।

भा.– यस्यान्यः सदृशो नास्ति स्वरूपाणि समानि च ।
स आत्मसंमितो विष्णुरतिमृत्युरमृत्युतः ॥

प्रद्युम्नादिस्वरूपेण स विष्णुः सप्तधा स्थितः ।
समानि तानि सर्वाणि ज्ञानानन्दबलैस्तथा ॥

ज्ञानादित्रयवाचीनि त्र्यक्षराण्यपि सर्वशः ।
हिङ्कारादीनि नामानि सर्वेषामपि सर्वशः ॥

आदिनाम्नः प्रकारस्तु योज्यः स्यात् प्रतिहारतः ।
तेन त्र्यक्षरमेव स्यान्नामद्वयमपि प्रभोः ॥

उपद्रवे तु वःकारो यद्यपि व्यतिरिच्यते ।
नाम नारायणस्यैव सोऽपि क्षीराब्धिशायिनः ॥

व्यञ्जनस्वरसर्गैस्तु सोऽपि ज्ञानादिवाचकः ।
त्रिवर्णत्वात् समः सोऽपि ज्ञानाद्यैः पुरुषोत्तमः ॥

उप.– एकवि॰शत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वावि॰शेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥

भा.– वःकारार्थपरिज्ञानात् प्राप्योऽब्धिशयनः प्रभुः ।
एकविंशार्णविज्ञानात् प्राप्योऽसौ सूर्यमण्डले ॥

हिङ्काराद्यक्षरप्रतिपाद्यानि भगवतो द्वाविंशद्रूपाणि

स एव भगवान् विष्णुर्द्वाविंशद्रूपवान् यतः ।
तान्येव सप्तरूपाणि विभिद्यन्ते त्रिधा त्रिधा ॥

एकः पयोब्धिशयन इति द्वाविंशतिः प्रभोः ।
प्रद्युम्नाद्यास्तु चत्वारो द्विषण्मासेषु संस्थिताः ॥

त्रिशस्त्रिशः केशवाद्या वसन्तादिषु पञ्चमः ।
रूपद्वयं च षष्ठस्य स्थितं मत्स्यादिपञ्चकम् ।।

तृतीयं पृथिवीसंस्थं जामदग्न्याख्यमेव तत् ।
अन्तरिक्षद्युसूर्येषु सप्तमस्य त्रिधा तनुः ।।

रामः कृष्णः कल्किरिति तज्ज्ञानात् तान्यवाप्य च ।
द्वाविंशेन पयोब्धिस्थं प्राप्यते रूपमक्षरम् ।।

एतद् द्वाविंशकं रूपं नाकं चासुखवर्जनात् ।
पूर्णानन्दस्वरूपत्वाद्विशोकं शोकनाशनात् ।।
इति सामसंहितायाम् ।

उप.– आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ।। ६ ।। १० ।।

भा.– प्राप्नोतीहादित्यस्य जयम् । इह पृथिव्यादिषु स्थितभगवत्प्राप्तावप्यादित्यस्थ एव प्राप्यते । ऐक्यात् । परो हास्यादित्यजयाज्जयो भवति । आदित्यस्थस्यादित्यनाम्नो भगवतः प्राप्त्या परो जयः रूपान्तर प्राप्तिरपि भवति ।

स्वरूपमेकं प्राप्तस्तु विष्णोः स्यात् सर्वरूपगः ।
ऐक्यात् तथापि सम्प्राप्तिर्बहूपास्त्या सुखाधिका ।। इति च ।

जयो नाम प्राप्तिरेव । धनजिते स्वर्जिते सत्राजित इत्यादिवत् । केशवदिरूपेण ललाटादिषु स्थितेरित एकविंश इत्युच्यते ।

चित्रादियोगदातृत्वान्मासनामा स्वयं हरिः ।
लोकः प्रकाशरूपत्वादादित्यश्चादनादपाम् ।। इति च ।।१०।।

## गायत्रसामप्रतिपाद्यभगवदुपासना

उप.– मनो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतꣳ स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात् तद् व्रतम् ।। ११ ।।

भा.– प्राणसंस्थे हरौ प्रोतं गायत्रं साम सर्वदा ।
तद्वाचकं नियम्यं चेत्यतः प्रोतमितीर्यते ।।

प्राणस्थविष्णोः सामीप्यात् तत्स्थमेतदितीर्यते ।
क्वचिन्निर्देशसामीप्याद्विष्णोरेतदितीर्यते ।। इति च ।

प्राणस्थविष्णुलाल्यत्वात् प्राणीत्येवाभिधीयते ।
मोक्षस्तु सर्वमायुस्तु स्यान्नित्यत्वाज्ज्योक्समस्तवित् ।।
इति च ।। ११ ।।

## रथन्तरसामप्रतिपाद्यभगवदुपासना

उप.– अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ।। १ ।।

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत् तद् व्रतम् ।। २ ।। १२ ।।

भा.– मन्थनादिस्थितं यस्तु तन्नामानं हरिं परम् ।
तत्तत्क्रियैकहेतुत्वाद्योऽग्नौ ध्यायेज्जनार्दनम् ।।
रथन्तराश्रयं पञ्चरूपं स च विमुच्यते ।। इति च ।। १२ ।।

वामदेव्यसामप्रतिपाद्यभगवदुपासना

उप.– उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्री सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ।। १ ।।

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद् व्रतम् ।। २ ।।१३।।

भा.– मिथुनस्थं पञ्चरूपं ध्यात्वैव पुरुषोत्तमम् ।
अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः ।। इति च ।

मिथो नयतीति मिथुनं भगवान् ।। १३ ।।

बृहत्सामप्रतिपाद्यभगवदुपासना

उप.– उद्यन् हिङ्कारः उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥ स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत् तद् व्रतम् ।।१४।।

वैरूपसामप्रतिपाद्यभगवदुपासनम्

अभ्राणि संप्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स

उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोत२ँ स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपा२ँश्च सुरूपा२ँश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत् तद् व्रतम् ।।१५।।

वैराजसामप्रतिपाद्यभगवदुपासनम्

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतत् वैराजमृतुषु प्रोत२ँ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जी-वति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ऋतून् न निन्देत् तद् व्रतम् ।। १६ ।।

शक्करीसामप्रतिपाद्यभगवदुपासनम्

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्कर्यो लोकेषु प्रोताः स य एवमेताः शक्कर्यो लोकेषु प्रोता वेद लोकीभवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान्न निन्देत् तद् व्रतम् ।।१७।।

रेवतीसामप्रतिपाद्यभगवदुपासनम्

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या पशून्न निन्देत् तद् व्रतम् ।। १८ ।।

### यज्ञायज्ञीयसामवेद्यभगवदुपासनम्

लोम हिङ्कारस्त्वक् प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयेषु प्रोतꣳ स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतꣳ वेदाङ्गीभवति नाङ्गेन विमूर्च्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात् तद् व्रतं मज्ज्ञु नाश्नीयादिति वा ।। १९ ।।

### राजनसामप्रतिपाद्यभगवदुपासनम्

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतꣳ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान्न निन्देत् तद् व्रतम् ।। २० ।।

### इतरसर्वसामप्रतिपाद्यभगवदुपासनम्

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत् साम सर्वस्मिन् प्रोतꣳ स य एवमेतत्साम सर्वस्मिन् प्रोतꣳ वेद सर्वꣳ ह भवति ।। १ ।।

तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति । यस्तद्वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति । सर्वमस्मीत्युपासीत तद् व्रतं तद् व्रतम् ।। २ ।। २१।।

भा.– आदित्यनाम्नि पश्चात्मन्यभिध्याते जनार्दने ।
पर्जन्यनाम्नि चत्वार्ख्ये लोकाख्ये पशुसञ्ज्ञके ।।

अङ्गाख्ये देवताख्ये च सर्वाख्ये च प्रतिष्ठितम् ।
वृहदायं च यो वेद मुच्यते नात्र संशयः ।।

समुद्रेकात् समुद्रस्तु देशनाद्दिश उच्यते ।
लोपकत्वाल्लोम च स्यात्तवोरूपस्त्वगुच्यते ।।

मादनात् साररूपत्वात् मांसोऽस्थि त्वासनात् स्थिरम् ।
मदस्य जननान्मज्जा सोऽङ्गमन्तिगतत्वतः ।।

वायुर्ज्ञानात्तथायुष्ट्वान्नक्षत्रं च स्वतन्त्रतः ।
चन्द्रमाः परमानन्दात् त्रैविद्यो ज्ञानरूपतः ।।

वयांसि व्ययनाच्चैव वीत्याकाशस्तथोच्यते ।
तत्रायनाद्वयः प्रोक्तो मरीचिर्मितरुत्त्वतः ।।

सर्पस्सर्पणहेतुत्वात् गन्धर्वो गोधरत्वतः ।
पिता स सृष्टिहेतुत्वात् सर्वं पूर्णगुणत्वतः ।।
एतैर्नामभिरुद्दिष्टो भगवान् पुरुषोत्तमः ।। इति च ।

''सर्वं ह भवति'' इति वाक्यस्यैक्यप्रतिपादकत्वाभावकथनम्

याद‍ृश्येवोन्नतिर्योग्या तस्याः सर्वात्मनाऽऽयतिः ।
सर्वभावस्तु विज्ञेयो न तु सर्वस्वरूपता ।। इति च ।

न च सर्वस्वरूपता पुरुषार्थः । नारकित्वादेरपि प्राप्तेः । न चार्थान्तरकल्पना युक्ता । प्रमाणाभावात् ।

असनान्मितिरूपत्वादस्मीत्युक्तः परो हरिः ।
तं सर्व इत्युपासीत पूर्णता सर्वता स्मृता ।। इति च ।

सर्वमस्मीत्युत्तमपुरुषत्वे तेभ्यो न ज्यायःपरमन्यदस्तीति ज्यायःपर-शब्दौ व्यर्थौ । अन्यस्यैवाभावात् । अतस्ततोऽन्यदस्तीति सिद्धम् । अतस्ततोऽन्यत् परमज्याय एव नास्ति । ज्यायो लक्ष्मीर्विद्यते । परमज्यायस्तु भगवानेव ।

''सर्वमस्मि'' इति वाक्यस्यापि ऐक्यपरतानिरासः

जीवैक्याङ्गीकारे यस्तद्वेदेति तच्छब्दोऽप्ययुक्तः । तदा स्वात्मानं वेदेत्येव स्यात् । न च प्रसिद्धभेदानुवादः । श्रुतिं विना तत्स्वरूप-स्यैवासिद्धेः तद्भेदस्यातिशयेनासिद्धिः । ऐक्य ईश्वरस्य स्वज्ञानमस्तीति न तद्रूपस्य जीवस्याज्ञानादिकं युज्यते । औपाधिकभेदाङ्गीकारेऽ-प्युपाधिरुभयोरैक्यादुभयोरप्यज्ञत्वं कुर्यात् । उपाधिनिमित्तदोषाश्चो-भयोरपि स्युः । उपाधिसम्बन्धस्य समत्वात् । उपाधिसम्बन्धस्यास्मिन्न-न्यथा तस्मिन्नन्यथेति विशेषार्थमयमसाविति भेदस्योपाधिं विना स्वत एवापेक्षितत्वात् । अतः स्वतो भिन्नस्यैवोपाधिना विशेषो भवति ।

यस्तु भिन्नः स्वतः खादिस्तस्य भेदो ह्यबुद्धिनाम् ।
उपाधिभिर्ज्ञाप्य एव न तु भेदं स्वयं सृजेत् ।।

उपाधिरप्यभिन्नस्य भेदं साधयितुं क्वचित् ।
न क्षमः सिद्धभेदस्य ज्ञापकः स्यादबुद्धिनाम् ।।
आकाशा अप्यतस्त्वेते अनन्ता अप्कणादिवत् ।।

इति ब्रह्मतर्के ।

अतो न जीवेशाभेदः ।

न तु देवः स्वयं भूत्वा देवदेवं समर्चयेत् ।
समानव्यवहारे हि न पूज्यः पूजको भवेत् ।।
इति च परमसंहितायाम् ।

जीवब्रह्मैक्यस्य प्रमाणविरुद्धतोपपादनम्

'अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ'

'अन्यदेव तद्विदितादथो अविदितादधि' ।

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यति तद्वद ।।'

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' ।

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' ।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' ।

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।
आधिपत्यमृते चैव भोगेन विषयेण च ।।
आनन्दादीनृते मुक्तास्सर्वे ते ब्रह्मणस्समाः ।।' इत्यादेश्च ।

सत्यपि अधिष्ठानभेदे भगवद्रूपाणां भेदाभावनिरूपणम्

प्रद्युम्नादीनि रूपाणि त्रीणि त्रीण्येव पञ्च च ।
ऋगादिस्थानभेदेन नित्याभिन्नानि चेशनात् ।।
इति सामसंहितायाम् ।

### भेदस्य मिथ्यात्वनिरासः

दृष्टवस्तुनो मिथ्यात्वाङ्गीकारे च युक्त्यपेक्षा । न तु सत्यत्वे ।

दृष्टस्य सत्यतायां तु युक्तिर्वाऽयुक्तिरेव वा ।
भूषणं तस्य मिथ्यात्वे युक्त्यभावोऽतिदूषणम् ।।
युक्तिश्च दोष एव स्याद्बलवन्मानवर्जिता ।। इति ब्रह्मतर्के ।

न च शून्यत्वमिथ्यात्वयोः कश्चिद्विशेषः । तत्प्रमाणाभावात् । अतः सत्य एव भेदः ।

### भेदसत्यतायाः प्रामाणिकत्वनिरूपणम्

न च कदाचित् कस्यापि नासीदस्ति भविष्यतीति बुद्ध्यभावे व्यावहारिकसत्यमित्यत्रास्माकं विरोधः । तद्भावे च न शून्याद्विशेषः । 'सत्यमेनमनुविश्वे मदन्ति' इत्यादिश्रुतेश्च सत्यो भेदः ।

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।।

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते ।। इत्यादिश्रुतेश्च ।

प्रपञ्चो भेदः यदि विद्येत भवेत उत्पद्येत तर्हि निवर्तेत । अतो न जीवेश्वरादिभेद उत्पद्यते किन्तु नित्य एव । अतो मायया भगवत् प्रज्ञानेन मातं रतं च मात्रम् । भगवाञ्जानाति रमते चास्मिन् भेद इति । तच्च भगवद्रूपमद्वैतम् । परमार्थो भगवांस्तद्रूपेणाद्वैतम् । यदद्वैतं नामोच्यते तत्परमार्थभगवदपेक्षयेत्यर्थः । स्वगतभेदो भगवति नास्ती-त्युक्तम् । न च कल्पनामात्रो भेदः । यदि केनचित् कल्पितो विकल्प-

स्तथापि निवर्तेत । तस्मादुपदेशादयमेव वादः । केनापि तत्प्रसादं विनाऽविज्ञातत्वादज्ञातो भगवांस्तद्गतो भेदो न विद्यते इति ।

जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः ।
जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः ।।

प्रकृष्टमोक्षहेतुत्वात् तज्ज्ञानं प्रेति कथ्यते ।
प्रकृष्टपञ्चकत्वाद्वा प्रपञ्चोऽयं प्रकीर्तितः ।।

यद्ययं सादिरेव स्यान्निवर्तेत कदाचन ।
न निवर्तते यतस्तेन नायं सादिर्भवेत् क्वचित् ।।

मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित् ।
भ्रान्तत्वमस्य यद्विष्णोर्नैव भ्रान्तिः कदाचन ।।

रमते चात्र यद्विष्णुर्न हि भ्रान्तौ रमेद्धरिः ।
परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् ।।

यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते ।
तस्माद्भूतभविष्याख्यभवदाख्यपराभिधाः ।।

तदन्ये चैक एवास्मिन्नोङ्काराख्ये जनार्दने ।
अज्ञातनामके तस्मिन्न भेदोऽस्ति कथञ्चन ।। इति ब्रह्मतर्के ।

विदिः कादाचित्कस्वरूपलाभ इति च धातुः । भिद्येतेतिवद्विद्येतेति-शब्दः । परमार्थत इति विश्वतश्चक्षुरितिवत् सप्तम्यर्थे । परमार्थे द्वैतभाव एवेत्यर्थः । परमार्थः परमात्माऽद्वैत इति प्रथमार्थो वा । न हि विद्यमानं निवर्तत इति नियमः । उत्पद्यमानं हि प्रायो निवर्तते । जीवेश्वर-प्रकृत्यादिकं बहुलं हि विद्यमानं न निवर्तते । न च कल्पितो विकल्प

इति पक्षे कल्पितो यदीति यदिशब्दो युज्यते । न च ''निवर्तेत न संशयः'' विकल्पो विनिवर्तेत कल्पितो यदि इत्यादिनाऽनिष्टापादनरूपः शब्दो युज्यते । कल्पितत्वं चेच्छ्रुतेरभिप्रायः अविद्यमानोऽयं प्रपञ्चो निवर्तते कल्पितो विकल्पो विनिवर्तत इत्येव शब्दः स्यात् । न तु निवर्तेतेति । अतः सत्यताविषयमिदं वाक्यम् ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।। इति निन्दनाच्च ।

'विद्यात्मनि भिदाबोधः' 'जुष्टं यदा पश्यत्यन्यमीशमस्य' इत्यादिभेदज्ञानस्य प्रशंसनाच्च । अतोऽसनान्मितत्वाच्चास्मीति भगवान्नामैवैतत् ।। २१ ।।

सामगानस्य ध्वनिप्रभेदाः

उप.– विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ।। १ ।।

भा.– सर्वदा समत्वात् साम भगवान् । तस्योद्गानप्रकारो विनर्दिवृषभस्वरवन्मेघनर्दनवद्वा । तदेव वृणे । सर्वोत्तमत्वात् ।

विष्णोः स्वरो वृषभवन्मेघनादवदेव वा ।
स्त्रीपशुस्वरवद् वह्नेर्गम्भीरोऽनुपमो विभोः ।।

ब्रह्मणस्त्वथ सोमस्य साक्षाद्घण्टानिनादवत् ।
मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत् ।।

स्तथापि निवर्तेत । तस्मादुपदेशादयमेव वादः । केनापि तत्प्रसादं विनाऽविज्ञातत्वादज्ञातो भगवांस्तद्गतो भेदो न विद्यते इति ।

जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः ।
जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः ।।

प्रकृष्टमोक्षहेतुत्वात् तज्ज्ञानं प्रेति कथ्यते ।
प्रकृष्टपञ्चकत्वाद्वा प्रपञ्चोऽयं प्रकीर्तितः ।।

यद्ययं सादिरेव स्यान्निवर्तेत कदाचन ।
न निवर्तते यतस्तेन नायं सादिर्भवेत् क्वचित् ।।

मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित् ।
भ्रान्तत्वमस्य यद्विष्णोर्नैव भ्रान्तिः कदाचन ।।

रमते चात्र यद्विष्णुर्न हि भ्रान्तौ रमेद्धरिः ।
परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् ।।

यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते ।
तस्माद्भूतभविष्याख्यभवदाख्यपराभिधाः ।।

तदन्ये चैक एवास्मिन्नोङ्काराख्ये जनार्दने ।
अज्ञातनामके तस्मिन्न भेदोऽस्ति कथञ्चन ।। इति ब्रह्मतर्के ।

विदिः कादाचित्कस्वरूपलाभ इति च धातुः । भिद्येतेतिवद्विद्येतेति-शब्दः । परमार्थत इति विश्वतश्चक्षुरितिवत् सप्तम्यर्थे । परमार्थे द्वैतभाव एवेत्यर्थः । परमार्थः परमात्माऽद्वैत इति प्रथमार्थो वा । न हि विद्यमानं निवर्तत इति नियमः । उत्पद्यमानं हि प्रायो निवर्तते । जीवेश्वर-प्रकृत्यादिकं बहुलं हि विद्यमानं न निवर्तते । न च कल्पितो विकल्प

इति पक्षे कल्पितो यदीति यदिशब्दो युज्यते । न च ''निवर्तेत न संशयः'' विकल्पो विनिवर्तेत कल्पितो यदि इत्यादिनाऽनिष्टापादनरूपः शब्दो युज्यते । कल्पितत्वं चेच्छ्रुतेरभिप्रायः अविद्यमानोऽयं प्रपञ्चो निवर्तते कल्पितो विकल्पो विनिवर्तत इत्येव शब्दः स्यात् । न तु निवर्तेतेति । अतः सत्यताविषयमिदं वाक्यम् ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।। इति निन्दनाच्च ।

'विद्यात्मनि भिदाबोधः' 'जुष्टं यदा पश्यत्यन्यमीशमस्य' इत्यादिभेदज्ञानस्य प्रशंसनाच्च । अतोऽसनान्मितत्वाच्चास्मीति भगवान्नामैवैतत् ।। २१ ।।

सामगानस्य ध्वनिप्रभेदाः

उप.– विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ।। १ ।।

भा.– सर्वदा समत्वात् साम भगवान् । तस्योद्गानप्रकारो विनर्दिवृषभस्वरवन्मेघनर्दनवद्वा । तदेव वृणे । सर्वोत्तमत्वात् ।

विष्णोः स्वरो वृषभवन्मेघनादवदेव वा ।
स्त्रीपशुस्वरवद् वह्नेर्गम्भीरोऽनुपमो विभोः ।।

ब्रह्मणस्त्वथ सोमस्य साक्षाद्घण्टानिनादवत् ।
मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत् ।।

बृहस्पतेः क्रोश्चवच्च वरुणस्य तु विस्वरः ।
एकस्य पादवर्षस्य स्वरो विष्णोरुदाहृतः ।।
वायोर्विंशतिवर्षस्य ब्रह्मणस्तु तदन्तरा ।। इति च ।
गायेदेतैः स्वरैस्तस्माद्यथाशक्ति न विस्वरम् ।

उप.– अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ।। २ ।।

भा.– अधिकारी सदौद्गात्रे मुख्यतः प्राण एव यत् ।।

अतो मोक्षादिदाने स देवादीनां क्षमो भवेत् ।
अन्येषां स ददातीह मद्धृदिस्थ इति स्मृतिः ।।

कार्या हि नान्यथा कुर्यादवमन्ताऽन्यथा भवेत् ।
देवानां मोक्षदानादौ न हि मानुष ईश्वरः ।।

अतः प्राणो हृदिस्थो मे ददातीति स्मृतिर्भवेत् ।
सङ्कल्पोक्त्यादिकर्ता च प्राण एव यतः सदा ।।

आगायानीति युज्येत तस्मात् तस्मिन् हि मुख्यतः ।
आत्मेति भगवान् विष्णुः प्राणस्थः पुरुषोत्तमः ।।

तस्मा अन्नं ह्यर्थतस्तु प्राणस्यान्नभुजिर्भवेत् ।
प्राणस्याप्यमृतत्वं हि मुख्यमेव फलं यतः ।।
देवान्तर्भावतो विष्णोर्नामृतत्वं क चादिमत् ।

सामगानकालीनानुसन्धानकथनम्

उप.– सर्वे स्वरा इन्द्रस्यात्मनः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ।। ३ ।।

अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ।। ४ ।।

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ।। ५ ।। २२ ।।

भा.– इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान् ।।

ब्रूयादग्रस्तानिरस्तानूष्मणः स्पर्शानपि ।
समस्तान् बलदानार्थमिन्द्रे चैव प्रजापतेः ।।

विष्णोः स्वात्मानमेवाहमर्पये मृत्युवर्जितम् ।
मोक्षयोग्यान् करिष्यामीत्येवं स प्राण एव तु ।।

कुर्यादन्यस्तु मत्स्थस्तु प्राण एवेदृशः क्षमः ।
करोतीति स्मरेन्नित्यं नान्यथा तु कथञ्चन ।।

देवावमन्ता हि तमो यात्यसंशयतो यतः ।
अत इन्द्रं प्रजापाख्यं विष्णुं मृत्युं च सर्वदा ।।

शरणं गतोऽहमिति च ध्यायेत् सर्वत्र सर्वदा ।
ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः सदा ।।

ऊष्माधिपस्तु भगवान् विष्णुरेव प्रजापतिः ।
मृत्युनामा तु संहाराद्रुद्रः स्पर्शाधिपः स्मृतः ।।

मानुषाणां तु शरणमितरेषां तु वायुतः ।
वायोस्तु बलदानाद्यं मोक्षदानादिकं हरेः ।।

यस्माद् वायुपदे योग्या बहवस्त्विन्द्रनामकाः ।
अत इन्द्रे ददानीति स्मृतिः प्राणस्य युज्यते ।।
इति सामसंहितायाम् ।।

सर्वोपद्रवकर्तॄणामसुराणां कुबुद्धिनाम् ।
उपालम्भे कृते युक्तं विष्णुस्त्वां प्रतिपेक्ष्यति ।।
रुद्रस्त्वां धक्ष्यतीत्यादि नान्यथा तु कथञ्चन ।। इति च ।

मृत्योस्सकाशादात्मानं परिहराणीति ।
ब्रह्मा प्रजापतिश्चेति विष्णुरन्यं प्रबोधयन् ।
तथेन्द्रनामा वायुश्च परेषां बोधको यदा ।। इति च ।

वृंहयति, प्रजाः पाति, इदं रातीति व्युत्पत्तिभिः ।। २२ ।।

धर्मब्रह्मज्ञानयोः फलनिरूपणम्

उप.– त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ।। १ ।।

भा.– सर्वधर्मैः पुण्यलोको ब्रह्मज्ञानाद्विमुच्यते ।

दृष्टान्तपूर्वकं ओङ्कारस्य सर्ववेदसारत्वकथनम्

उप.– प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत् । तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त । भूर्भुवः स्वरिति । तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत् । तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमेतेनोङ्कारेण सर्वा वाक्सन्तृण्णोङ्कार एवेद९ सर्वमोङ्कार एवेद९ सर्वम् ।। २ ।। २३ ।।

भा.– ओङ्कारो ब्रह्मणो नाम सर्ववागात्मकश्च सः ।।
तद्व्याख्यात्वात् सर्ववाचां सर्ववागात्मता भवेत् ।
इदं तु प्रस्तुतत्वात् स सर्वं चाप्यर्थपूर्णतः ।।

सर्वशब्दान्वितत्वाच्च न लिङ्गव्यत्ययो भवेत् ।
आधिक्यं चैव सर्वत्वं प्रस्तुतं तद्यथेति तत् ।। इति च ।

अकाराद्याः क्रमेणैव भूरादेः साररूपिणः ।
अस्मादयं सार इति ज्ञानमेवाभितापनम् ।।

सम्प्रस्रावश्च तद्दृष्टिर्ब्रह्मणः परमस्य हि ।
नित्यज्ञानोऽपि भगवान् क्रीडयाऽचीक्लृपद्यदा ।।
तदाभितापशब्दोऽयं वर्तते परमात्मनि ।। इति च ।

तपःशब्देनैव यतिधर्मश्चोक्तः ।

सर्वेषामाश्रमस्थानामज्ञानां पुण्यलोकता ।
अपरोक्षदृशां विष्णोरमृतत्वं न चान्यथा ।। इति च ।

यज्ञाध्ययनदानैस्तु गृही स्यात् सोमलोकगः ।
यतयस्तपसा सूर्यं चत्वारोऽपि विशेषतः ।।

गच्छन्ति तपसैवर्षीन् वनस्था ब्रह्मचारिणः ।
नैष्ठिका वालखिल्यांश्च गुरुशुश्रुषयैव तु ।।

यदि पश्यन्त्येत एव साक्षादेव जनार्दनम् ।
अमृतत्वं तदा यान्ति नान्यथा तु कथञ्चन ।। इति च ।

न च संन्यासमात्रेणामृतत्वम् । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतेः । 'विद्यैव तु निर्धारणात्' इति च भगवद्वचनम् ।

न रोधयति मां धर्मो न साङ्ख्यं योग उद्धव ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ।। इत्यादि च ।

'न च संन्यसनादेव सिद्धिं समधिगच्छति' इति च । 'तस्य पुत्रा दायमुपयन्ति' इत्यादेर्गृहस्थादीनामपि ज्ञानिनां मोक्षः प्रतीयते ।

सर्ववर्णाश्रमाणां च ज्ञानान्मोक्षो विनिश्चितः ।
अन्त्यानां स्थावराणां वा तथापि यतिरुत्तमः ।।
ज्ञानद्वारो यतो न्यासो विशेषेण भविष्यति ।। इति च ।

'वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः' । इति च ।। २३ ।।

स्वर्गमोक्षमार्गे प्राप्तविघ्नपरिहारोपायनिरूपणम्

उप.– ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवन९ रुद्राणां माध्यन्दिन९ सवनमादित्यानां विश्वेषां देवानां च तृतीयसवनं

क तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यादथ विद्वान् कुर्यात् ।। १ ।।

### वसुस्थभगवद्रूपप्रार्थना

पुरा प्रातरनुवाकस्योपकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳ रा ३३३३३ हु३म् आ३३ज्या३ यो३ आ३२१११ इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ सम्प्रयच्छन्ति ।। २ ।। २४ ।।

### रुद्रस्थभगवद्रूपप्रार्थना

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयं विरा ३३३३३ हु३म् आ३३ज्या३ यो३ आ३२१११ इत्यथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्मत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ सम्प्रयच्छन्ति ।। २५ ।।

### आदित्यविश्वेदेवस्थभगवद्रूपप्रार्थना

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३

पश्येम त्वा वयं ९ स्वारा ३३३३३ हु३म् आ३३ज्या३ यो३ आ३२१११ इत्यादित्यमथ वैश्वदेवं लो३कद्वारमपा३वा३वार्णू३३ पश्येम त्वा वय९ साम्रा ३३३३ हू आ ३म् ३३ ज्या ३यो ३ आ३२१११ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवन९ सम्प्रयच्छन्ति एष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ।। २६ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि द्वितीयोऽध्यायः ।।

भा.– वसुरुद्रादितेयेषु विश्वेषु स्थितमीश्वरम् ।
तन्नामानं हरिं मन्त्रैर्लोकद्वारादिभिः प्रभुम् ।।

प्रार्थयित्वा दिवं त्वज्ञो ज्ञो मोक्षं प्राप्नुयात् तथा ।
यजमानो नान्यथा तु लोकोऽस्य प्राप्यते वरः ।।

राजनं पृथिवीलोके राज्यमित्युच्यते बुधैः ।
विराज्यमन्तरिक्षे तु स्वाराज्यं स्वर्गगं भवेत् ।।

एतेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम् ।
श्वेतद्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः ।।
अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु ।। इति च ।

वस्वादिनाम्नां भगवत्परत्ववर्णनम्

'यो देवानां नामधा एक एव' इति श्रुतेश्च भगवत एव वस्वादिनामानि । 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते'

इति वचनाच्च भगवानेव प्राध्यर्थः । भगवत्स्वरूपस्य सम्यगपरिज्ञाना-द्रागाच्च तेषामन्तवत् फलवत्वम् ।

'न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते' ।

'गतागतं कामकामा लभन्ते' इति वचनात् ।

सर्वोत्तमत्वस्याज्ञानाद्विष्णोरन्धन्तमो भवेत् ।
तद्वेषात् किमु वक्तव्यं ब्रह्मादिद्वेषतोऽपि वा ।।

तारतम्यापरिज्ञानादनुत्थानं तमो भवेत् ।
अपराधकृतस्तेषां निरयं त्वेव गच्छति ।।

पूजाया अकृतेस्तेषां न वर्णेषु जनिर्भवेत् ।
सम्यक्कर्माननुष्ठानात् स्वर्गं नैवोपगच्छति ।।
अपरोक्षदृशेरौन्यान्मोक्षं नैवोपगच्छति ।। इति च ।

पूर्वपूर्वगुणैर्दोषानशक्ता उत्तरोत्तराः ।
स्थानद्वयोत्तरे शक्ता मोक्षो नानपरोक्षिणः ।।

विरुद्धरागिणां नैव ह्यपरोक्षदृशिर्भवेत् ।
यावद्रागविनाशः स्याद्विरक्तो भक्तिसंयुतः ।।

सर्वदैवाप्रमत्तश्च पश्येदेव हरिं परम् ।
अविस्मृतिस्सदा विष्णोरन्यथाज्ञानवर्जनम् ।।

शास्त्राभ्यासः सदोद्योगाच्छ्रवणाच्च विचारतः ।
निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदा ।।

अप्रमाद इति प्रोक्तः शास्त्रं वेदास्तु पञ्च च ।
भारतं पञ्चरात्रं च मूलरामायणं तथा ।।
पुराणं भागवतं चैव पञ्चमो वेद उच्यते ।। इति च ।।

त्रिलोकप्राप्तिपरिघास्त्रयः सन्ति सदातनाः ।
तेषामग्न्यादिगो विष्णुरपहन्ता स्मृतो भवेत् ।।

मृतः सन्सुखभोगाय यत्र गच्छति तत्र ह ।
एकैकः परिघोऽग्रे स्याद्धते तस्मिंस्तु विष्णुना ।।
यजमानः पृथिव्यादिलोकान् भोगाय याति हि ।। इति च ।

यस्त्राति यज्ञमातारं यज्ञमात्रा हरिस्तु सः ।
तमेवं वेत्ति यो भक्तो याति स्वर्मुक्तिमेव वा ।।
इति च ।। २४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये द्वितीयोऽध्यायः ।।

## अथ तृतीयोऽध्यायः

### मधुविद्यानिरूपणम्

उप.– ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीन-वंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ।। १ ।।

भा.– य आदित्यगतो विष्णुः स एव मधुनामकः ।
मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते ।।

अ इत्याधिक्यमुद्दिष्टं मद् ज्ञानततिरुच्यते ।
तद्धत्ता ततिरुद्दिष्टा तेनानुभव ईरितः ।।

अधिकोऽनुभवो यस्य सर्वस्मादीप्सितादपि ।
सोऽयं मद इति प्रोक्तः सर्वं हि सुखसाधनम् ।।

तत्पूर्णो मधुनामा स्यात् तृतीयोऽतिशयार्थकः ।
देवानामुपजीव्यत्वात् स देवमधुनामकः ।।

आदित्वादाततत्वाच्च ज्ञानरूपत्वतस्तथा ।
आदित्य इति सम्प्रोक्तः प्रसिद्धमधुवच्च सः ।।

तिरोवंशादिसंयुक्तो द्युनाम्नी च द्युसंस्थिता ।
प्रकाशादिगुणैः श्रीस्तु वायोराश्रयरूपतः ।।

तिरोवंश इतिप्रोक्तो मध्वपूपस्तु मारुतः ।
तस्मिन् सन्निहितो विष्णुर्विशेषेण यतः सदा ।।

सोऽन्तरिक्षमितिप्रोक्तः स्वान्तस्सम्यग्घरीक्षणात् ।
अन्तरिक्षस्थितश्चासौ वस्वाद्या मधुकारिणः ।।

तत्पुत्रास्तु मरीच्याद्यास्सूर्यरश्मिषु संस्थिताः ।
तिर्यक् स्थित्वा वशे कुर्याद्यस्माद्देवी रमा हरिम् ।।

भक्त्यैवातस्तिरोवंशस्तिर्यक्त्वं प्रणतिः स्मृता ।
तिर्यक्स्थित्वा स्वसंस्थं तु वशीकुर्याद्यतस्ततः ।।

वंशस्तिरश्चीनोऽन्योऽपि यस्मिन्नाप्यमुपस्थितम् ।
सोऽपूप आप्यो भगवान् मध्वाज्यादिप्रसिद्धगम् ।।

### मधुनामकवासुदेवोपासना

उप.– तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ।। २ ।।

एतमृग्वेदमभ्यतप९ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य९ँ रसोऽजायत ।। ३ ।।

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य रोहित९ँ रूपम् ।। ४ ।। १ ।।

रश्मिमधुनाड्यादिपदानामर्थकथनम्

भा.– प्राच्यरश्मिषु संस्थस्तु रतिशंमानरूपतः ।
प्राच्यरश्मिरिति प्रोक्तो वासुदेवाभिधो हरिः ।।

एतद्विद्या नालमिति नाडीत्यंश उदाहृतः ।
स्वरूपांशैर्विना प्राप्तुं नालं हि प्रापितांशिनम् ।।

ऋग्वेदमानिनश्चैव वह्न्याद्या वसवस्त्वृचः ।
अर्च्यत्वात् प्रथमं चैव विशेषाद्यज्ञदेवताः ।।

मधुनामकसङ्कर्षणोपासना

उप.– अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजू९ँष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ।।१।।

तानि वा एतानि यजू९ँष्येतं यजुर्वेदमभ्यतप९ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य९ँ रसोऽजायत ।। २ ।।

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तदा एतद्यदेतदादित्यस्य शुक्ल९ँ रूपम् ।। ३ ।। २ ।।

भा.– इन्द्राद्या यजुरुद्दिष्टा रुद्रा इन्द्रसहायतः ।
इन्द्रशब्दोदितो वायुः स याज्यः सोमभुक्पुरः ।।

भा.– स हि शंकरपूर्वाणां रुद्राणां मुख्य एव च ।

मधुनामकप्रद्युम्नोपासना

उप.– अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ।।१।।

तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ।। २ ।।

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ।। ३ ।। ३ ।।

भा.– सामनामान आदित्या मासशः समभोगतः ।।
इन्द्रो वरुण उद्दिष्टो यज्ञेषु व्रियते यतः ।
आदित्यानामधिपतिः स हि विष्णुनियोजितः ।।
विष्णुस्तूपास्यरूपत्वान्नोपासकगणे युतः ।

मधुनामकानिरुद्धोपासना

उप.– अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः।।१।।

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीयमन्नाद्यꣳ रसोऽजायत ।। २ ।।

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ।। ३ ।। ४ ।।

भा.– इतिहासपुराणानां सोमाद्या अभिमानिनः ।।

अथर्वाङ्गिरसां चैवाप्यथर्वाङ्गिरनामकाः ।
अधरं वर्तयेयुस्ते वृष्टिमङ्गरसास्तथा ।।
मानस्त्वात् प्राणरूपत्वादथर्वाङ्गिरसस्ततः ।

मधुनामकनारायणोपासना

उप.– अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ।। १ ।।

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतप९ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य९ँ रसोऽजायत ।। २ ।।

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ।। ३ ।।

ते वा एते रसाना९ँरसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ।। ४ ।।५।।

भा.– गुह्यादेशा ब्रह्मपदे ये योग्या ब्रह्मणा सह ।।
सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते ।
ब्रह्मेति सर्वदेवानां नामानन्तत्त्वतः स्मृतम् ।।

ऋग्वेदादींस्तु ते देवा अग्न्याद्याः संव्यचारयन् ।
मधु ब्रह्मव्यक्तिकृत्वात् ते वै मधुकृतः स्मृताः ।।

ज्ञानपोषकरत्वात् तु वेदाः पुष्पाभिधाः स्मृताः ।
अन्यत्र मधुकृत् पोषन्नित्यत्वादमृताश्च ताः ।।

वेदवाचः सुरैः पेया भोग्यत्वादाप ईरिताः ।
वेदपानं विचारश्च श्रवणं पाठ एव च ।।

देवैर्विचारितेभ्यश्च वेदेभ्यो व्यक्ततां गतः ।
ज्ञानानन्दस्वरूपत्वाद् यशस्तेजस्वरूपकः ॥

इन्द्रियं परमैश्वर्याद्वीर्यरूपश्च सर्वदा ।
सर्वानुग्रहशक्तित्वादन्नाद्यो बलरूपतः ॥

रसनामा च भगवान् संस्थितः सूर्यमण्डले ।
व्यक्षरद्धर्ममोक्षादीन् देवानां भगवान् हरिः ॥

ऋक्प्रोक्तो लोहिताकारो वासुदेवः परः पुमान् ।
स एव सूर्यलोहित्ये प्राच्यरश्मिषु संस्थितः ॥

सङ्कर्षणः शुक्लवर्णो यजुर्वेदोदितः प्रभुः ।
शुक्ले वर्णे च सूर्यस्य दक्षरश्मिषु संस्थितः ॥

प्रद्युम्नः श्यामवर्णस्तु सामवेदोदितः प्रभुः ।
प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेऽपि च स्थितः ॥

अनिरुद्धः सुनीलश्च इतिहासपुराणयोः ।
अथर्ववेदे चोक्तस्सन्नुदग्रश्मिषु संस्थितः ॥

सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः ।
ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसप्रभः ॥

महामरीचिपुञ्जेन चलतीवाचलोऽपि सन् ।
स वाच्यः सर्ववेदानामेवं पञ्चात्मको हरिः ॥

वेदानां सारभूतोऽसौ वेदानां नित्यताप्रदः ।
अतोऽमृतानाममृतो रसानां रस एव च ॥

इति सामसंहितायाम् ॥

भगवत एव मधुविद्याप्रतिपाद्यता नाचेतनस्य

न चाचेतनमात्रमुपासितं पुरुषार्थप्रदानशक्तम् । 'ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्' इति वाक्यशेषाच्चैतदवगम्यते । 'य एतामेवं ब्रह्मोपनिषदं वेद' इति च । कथं चाचेतनोपासनं ब्रह्मादिपदप्रदं भवति । 'न वै तत्र न निम्लोचः नोदियाय कदाचन । सकृदिव हैवास्मै भवति' इत्यादि च मुक्तस्यैव मुख्यतो युज्यते । यशस्तेजइन्द्रियवीर्यान्नाद्यरसत्वं च भगवन्तं विना कस्य मुख्यतो युज्यते । 'तस्य नाम महद्यशः' ।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

'रसो वै रसः'

'सुखात्मकं षड्गुणविग्रहं परं हृदि स्थितं ब्रह्म निरञ्जनं स्वरुक् ।
ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रिया पूर्णमहं प्रपद्ये ॥'

'अहं तत्तेजोरश्मीन्नारायणं पुरुषम्' इत्यादेश्च । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इति च । न चाचेतनस्यैश्वर्यादिरूपत्वं युज्यते । ज्ञानात्मको भगवानैश्वर्यात्मको भगवान् शक्त्यात्मको भगवान्' इति च श्रुतिः । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति सर्ववेदप्रतिपाद्यत्वं भगवत उक्तं भगवता । 'स सर्वनामा स च विश्वरूपः प्रसीदतां ब्रह्म महाविभूतिः' इति च । 'सर्वे वेदा यत्पदमामनन्ति' 'ता वा एताः सर्वा ऋचः सर्वे वेदा सर्वे घोषा एकैव व्याहृतिः प्राण एव' ।

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥

'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इत्यादेश्च । उपनिषत्वाच्च विशेषतो न यत्किञ्चिदुच्यत इति वक्तुं युक्तम् ।

विष्णुरुक्तः सर्ववेदैर्मन्त्रेषु च विशेषतः ।
आरण्यके विशेषेण नैवान्यत् किञ्चिदुच्यते ।।

कर्मार्थं च ब्राह्मणं स्यादमुख्यार्थविवक्षया ।
मुख्यतो विष्णुरेवैको ब्राह्मणेष्वपि कथ्यते ।।

आरण्यकेष्वृते विष्णुं नैवान्यत् किञ्चिदुच्यते ।
सूत्रात्मा तूच्यते विष्णोस्तद्विशिष्टत्ववित्तये ।।

कुत्रचित् तदुपास्तिश्च तस्याध्यर्धतनुत्वतः ।
तस्मिन् विष्णोरुपास्त्यर्थं नान्यथा किञ्चिदुच्यते ।।

इति ब्रह्माण्डे ।

'यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधमस्य ।
लीलावतारैरधितकर्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ।।'

'वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी'

'यन्न व्रजन्त्यघभिदो रचनानुवादाः
शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तवीर्यास्तांस्तान्
क्षिपन्त्यशरणेषु तमस्सु हन्त ।। इत्यादिभगवद्वचनाच्च ।

'सर्वासु शाखास्वारणमावर्तयेदारणकमावर्तयेदुपनिषदमावर्तयेद् उपनिषदमावर्तयेत्' इत्युपनिषदभ्यासस्य सतात्पर्यं विहितत्वादभगवद्विषयस्य निन्दितत्वाच्च नोपनिषत्स्वन्यदुच्यते ।

अभ्यसेदधियज्ञं चाप्यधिदैवं विशेषतः ।
अध्यात्मं तु विशेषेण यस्माद् विष्णुस्त्रिषूदितः ।। इति स्कान्दे ।

मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ।।

इत्यादेश्च भगवदुपासना एव सर्वत्रोक्ताः ।। ५ ।।

मधुनामकवासुदेवोपासनाफलम्

उप.– तद्यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।

त एतदेव रूपमभिसंविशत्येतस्माद्रूपादुद्यन्ति ।। २ ।।

स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ।।३।।

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता ।। ४ ।। ६ ।।

भा.– प्रथमामृतस्य द्रष्टारो वसवस्त्वग्निपूर्वकाः ।
यावत् पश्यन्ति तं विष्णुं तावत् ते नान्यभोगिनः ।।

एतदेव विशन्त्यद्धा मोक्षे ते तत एव च ।
स्वेच्छयैव समुद्यन्ति मुक्ताः सन्तो बहिस्तथा ।।

मधुनामकसङ्कर्षणोपासनाफलम्

उप.– अथ यद्द्वितीयममृतं तद्रुद्राः उपजीवन्तीन्द्रेण मुखेन । न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।

त एतदेव रूपमभिसंविशत्येतस्माद्रूपादुद्यन्ति ।। २ ।।

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ।।३।।

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता ।। ४ ।। ७ ।।

भा.– एवं द्वितीयरूपं तु शिवाद्या वायुसंश्रिताः ।
वायोर्हिरण्यगर्भत्वात् पदद्वयमुदाहृतम् ।।

रुद्राणामाश्रयत्वं च साध्यानामपि सर्वशः ।
अतो यजुर्विचारश्च सर्ववेदात्मनस्तथा ।।

वायोरेव विचारः स्याद् ब्रह्मणोऽपि विशेषतः ।
उभयाश्रयः स मोक्षोऽपि वायुरेव हि सर्वदा ।।

मधुनामकप्रद्युम्नोपासनाफलम्

उप.– अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।

त एतदेव रूपमभिसंविशत्येतस्माद्रूपादुद्यन्ति ।। २ ।।

स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ।। ३ ।।

स यावदादित्यो दक्षिणतः उदेतात्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ८ ॥

भा.– द्रष्टारोऽथ तृतीयस्य शक्रमुख्यादितेः सुताः ।

मधुनामकानिरुद्धोपासनाफलम्

उप.– अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशत्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥

स यावदादित्यः पश्चादुतेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥४॥९॥

भा.– चतुर्थस्य तु सोमाद्या मरुतः ..................

मधुनामकनारायणोपासनाफलम्

उप.– अथ यत्पञ्चमममृतं तत्साध्याः उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥

त एतदेव रूपमभिसंविशत्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वं उदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ।। ४ ।। १० ।।

भा.– ....... ...... .......... पञ्चमस्य च ।।

ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च ।
सरस्वती सुपर्णी च वारुणी साध्यनामकाः ।।

अन्योन्यमुखता मुक्तौ ब्रह्मणा समता तथा ।
वाक्शेषादेर्मुखं ब्रह्मा मुक्तावपि विशेषतः ।।

द्रष्टोभयस्यापि शिवो द्वितीयस्यान्तगस्य च ।
मोक्षे त्वन्यत्र चैकस्य परतः शेषभावतः ।।

ये चैतत्पदयोग्यास्स्युर्देवाः पञ्च महागणाः ।
तेषामपि यदोपासा निच्छिद्रा मधुनामके ।।

तदा वस्वादितां प्राप्य मुक्तिमेष्यन्त्यसंशयम् ।

वस्वाद्याधिपत्यसम्बन्धिदेशकालनिरूपणम्

उदेत्यास्तमयं यावद्याति भानुस्तु पर्वते ।।

उदयास्ताद्रिमध्यस्य वसवः पतयः स्मृताः ।
ततश्चास्तमयाद्यावदर्धरात्रं दिवाकरः ।।

दक्षिणादुत्तरं याति किञ्चित् पूर्वसमन्वितम् ।
तद्देशकालयोरीशा रुद्रा वायुपुरःसराः ।।

वसुभोज्यदर्धकालमर्धदेशस्तथैव च ।
रुद्रभोज्योऽर्धरात्रात्तु याम आदित्यदैवतः ।।

पश्चिमात् पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः ।
ततः परोऽर्धयामस्तु सौम्याद् दक्षिणमार्गकः ।।

मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः ।
पश्चात्पश्चादुदेत्येव पूर्वतोऽस्तमुपैति च ।।

ततस्तदर्धकालेन चोत्तरादुदितस्तथा ।
अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः ।।

उदेत्यैन्द्रपुरे चोर्ध्वमर्वागुदयपर्वते ।
अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः ।।

वस्वादिदेवताकालव्यवस्था

एकत्रिंशत्तु घटिकाः साधिका वसुदैवताः ।
तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः ।।
तदर्धा मारुता ब्राह्मास्तदर्धा देशतस्तथा ।। इति च ।

रौद्रो द्विगुणीभूतो वसुकालो यावांस्तावान् भवतीति द्विस्तावत् । अर्ध इत्यर्थः । ब्राह्मे मुहूर्त इत्युषःकालस्य प्रसिद्धेश्च । रौद्रः काल इति पूर्वरात्रस्य प्रसिद्धेः । अपररात्रस्य सौम्यकालत्वाच्च तस्मिन् काले शीतमुत्पद्यते । मारुतकालत्वाद् वायुश्च वाति । आग्नेयकालत्वादेवाह्नि सैकघटिकं होमकर्माणि विशेषतः प्रवर्तन्ते ।

वस्वादिकालव्यवस्थायाः प्रामाणिकत्वनिरूपणम्

अहः सर्वं वसूनां तु परेषां रात्रिरेव च ।
प्रदत्ता विष्णुना पूर्वं नालमित्यब्रुवन् परे ।।

पुनर्विशेषतो दत्तं रुद्राणां मरुतां तथा ।
माध्यन्दिनं तृतीयं चाप्यादित्यानां प्रदत्तवान् ।।
विश्वेषामपि देवानां सामान्याद् वसुनामहः ।। इति च ।

सर्वस्याधिपतिर्ब्रह्मा रुद्राद्यास्तु द्वयोर्द्वयोः ।
वसवस्त्वह्न एवेशाः सामान्यान्न विशेषतः ।। इति च ।

माध्यन्दिने तृतीये च रुद्रादे राज्यमिष्यते ।
तद्भृत्यत्वात् वसूनां तु प्रातःकाले विशेषतः ।।
तत्रापि वाय्वधीनत्वमग्न्यादीनां प्रकीर्तितम् ।

देशव्यवस्था

एवं पृथिव्यां रुद्राणामन्तरिक्षं प्रकीर्तितम् ।।

मरुतां च द्विलोकेशा आदित्याः परिकीर्तिताः ।
सर्वेषामधिपो ब्रह्मा युवाधीशस्तु मारुतः ।।
त्रिलोकाधिपतिश्चेन्द्रस्तेषामप्यधिपो हरिः ।। इति च ।

परमतविमर्शः

स्वाराज्यं भोगः । स्वरञ्जनात् ।

न त्विन्द्राद्यमो द्विगुणकालं तिष्ठति तस्माद्वरुणस्तस्माद् सोम इत्यत्र किञ्चिन्मानम् । न च सोमाद् द्विगुणमेव ब्रह्मा तिष्ठति । द्विपरार्धं हि तस्य कालः । इन्द्रादयो हि मन्वन्तरमात्रं तिष्ठन्ति । न च वसूनां पूर्वोदेशो रुद्राणां दक्षिण आदित्यानां पश्चिमो मरुतामुत्तर एव । नान्यत्रेत्यत्र प्रमाणमस्ति । तत्पक्षे रुद्रैः सहेन्द्रस्य दक्षिणत्वप्राप्तेश्च । न चेन्द्रशब्देन वायुस्तैर्गृहीतः । अत इन्द्रादेवेन्द्रस्य द्विगुणकालत्वमिति

विरोधः । इन्द्रादिपुरीणामुद्वासत्वेनैवमङ्गीकारे तत् षोडशगुणत्वाद् ऊर्ध्वोदयस्यैकेन्द्रात् परतोऽनिन्द्रत्वमेव स्यात् । अथ तं त ऊर्ध्वं उदेत्येति तत्पक्षे पश्चादप्यादित्यभावात् कल्पान्तलयो न स्यादित्याद्यनन्तदोषदुष्टत्वेऽपि ग्रन्थाल्पत्वायैवोपरम्यते ।।

वस्वादीनां तु सर्वेषां सर्वदिक्षु पुराण्यपि ।
सन्त्येवमपि धीवृत्यै प्रत्येकं दिक्षुकथ्यते ।। इति च ।

ऐन्द्रया उद्वासे रुद्राणामेवोदयाभाव इति च दोषः । अतो यत्किञ्चिदेतत् ।

उदेति पूर्वतः सूर्यो निम्लोचति च पश्चिमे ।
एवं नियम उद्दिष्टो ब्रह्मणा विष्णुचोदनात् ।।

द्विगुणं द्विगुणं कालमुदित्वा दक्षिणादिषु ।
मध्ये चावस्थितिः पश्चाद् ब्रह्माणं याचिता पुरा ।।

हिरण्यकेन सूर्यस्य हिरण्याक्षेण वै पुनः ।
तदासुराणां देवत्वं ब्रह्मा तत्प्रददौ तयोः ।।

तच्छ्रुत्वेन्द्रादिभिः प्रोक्तः कथं प्रादा वराविमौ ।
देवता हि विनश्येयुरेवं दत्ते वरे त्वया ।।

इत्युक्तो देवतैः प्राह ब्रह्मा लोकपितामहः ।
न मया स वरो दत्तो दैतेयानां सुराः क्वचित् ।।

येन युष्मद्विनाशः स्यात् ततो व्यैतु च वो भयम् ।
दक्षिणाद्युदयो यस्तु स हि दैनन्दिनो मया ।।

अभिप्रेतो नैव चायं कालान्तरगतः क्वचित् ।
अर्धनाड्युत्तरा नाडीः सकाष्ठा नित्यशो रविः ।।

पश्चादशोत्तरां गच्छेत् पूर्वं रात्रे तु दक्षिणात् ।
तदर्धं पश्चिमात् पूर्वं तदर्धं चोत्तरादपि ॥

दक्षिणां च तदर्धं स ऊर्ध्वादर्वाक्च गच्छति ।
दक्षिणाद्युदयस्त्वेष न तु कालान्तरे क्वचित् ॥

यदोत्तरस्मात् द्विगुणः पूर्वो भवति वै सुराः ।
तदापि द्विगुणत्वं स्यात् तन्मयाऽत्र विवक्षितम् ॥

अहःसाम्येऽपि क्रमश आतपस्याल्पकालतः ।
गिर्यावृत्तेः क्षिप्रमन्येषूदयास्तमयाविव ॥

कालान्तरे भाविनं तु दक्षिणाद्युदयं पुनः ।
अपेक्ष्यैव वरो दत्तो द्वितीयो देवता मया ॥

समयश्च कृतो नित्यो मया सूर्यस्य चानघाः ।
पूर्वस्मादुदयो नित्यं पश्चिमेऽस्तमयस्तथा ॥

नियमो नान्यथाऽयं स्यात् कदाचित् केनचित् क्वचित् ।
तस्मान्न वो भयं क्वापि प्रोक्ता इत्थं सुरास्तदा ॥
विशोका अभवन् सर्वे ययुः स्वं स्वं निकेतनम् ॥ इति च ।

एतदेव मोक्षधर्मेषु बलिवासवसंवाद उक्तम् । देवान् प्रति ब्रह्मणो वचनं रहस्यत्वादविज्ञाय बलिना दक्षिणाद्युदय उक्तः । इन्द्रेण तु ब्रह्मवचनं जानता दक्षिणाद्युदयो नास्तीत्युक्तम् ।

दैतेययोर्वरं ज्ञात्वा त्वविज्ञाय सुरान् प्रति ।
ब्रह्मणोक्तं हि बलिना वासवं प्रत्युदीरितम् ॥

दक्षिणाद्युदयान्ते तु त्वां जेष्यामि पुरन्दर ।
इत्युक्तस्तमुवाचेन्द्रो न कदाचन तद्भवेत् ॥

ब्रह्मणा नियमो यस्मात् कृतः प्रागुदयो रवेः ।
इत्युक्त्वा तु जगामेन्द्रो दिवमैरावतस्थितः ।।
इति च ।। ६-१० ।।

प्रलये भगवत उदयास्ताभावसमर्थनम्

उप.– अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ।। १ ।।

न वै तत्र न निम्लोचो नोदियाय कदाचन ।
देवास्तेनाह॰ सत्येन मा विराधिषि ब्रह्मणा ।। इति ।। २ ।।

भा.– अथ सूर्यस्थितो विष्णुरादित्यस्त्वादिमूलतः ।
आदानाद्वापि देवानामूर्ध्वं गच्छति मण्डलात् ।।

प्राप्य वैकुण्ठलोकं च नोदेत्यस्तं न चैति सः ।
एकलः प्रलये स्थाता देवता नात्र संशयः ।।

तेन सत्येन न व्यृद्धिमाप्नुयां ब्रह्मणा क्वचित् ।
इत्युवाच पुरा ब्रह्मा देवेभ्यः स चतुर्मुखः ।।

उप.– न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति च एतामेवं ब्रह्मोपनिषदं वेद ।। ३ ।।

भा.– एतां विद्यां तु यो वेद नित्यमस्य दिवा भवेत् ।
वैकुण्ठधामसंस्थस्य मुक्तस्यानुदयास्तकम् ।।

उप.– तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ।।४।।

इदं वा व तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने ।। ५ ।।

नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ।। ६ ।। ११ ।।

भा.– तदेतद्भगवान् विष्णुः प्रादाज्ज्ञानं विरिञ्चये ।
विरिञ्चिर्मनवे प्राह प्रजाभ्यो मनुरेव च ।।

पूरयित्वा तु पृथिवीं रत्नैः सप्तसमुद्रिणीम् ।
दत्वापि गुरवे नैव पूर्यते गुरुदक्षिणा ।।

देवास्तूपासनायोग्या एकैकस्यामृतस्य हि ।
सर्वस्योपासने ब्रह्मा तदन्ये ज्ञानमात्रके ।।
उपासने नैव योग्यास्तद्योग्या हि सुरा यतः ।। इति देवश्रुतौ ।

ब्रह्मणा परेण मा विराधिषि । भगवत्प्रसादादवृद्धिं न प्राप्नुयामित्यर्थः ।। ११ ।।

गायत्रीप्रतिपाद्यसूर्यान्तर्गतभगवदुपास्तिः

उप.– गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ।। १ ।।

हयग्रीवमत्स्यादिरूपवाग्रूपानामुपासनम्

भा.– यदिदं किञ्च भूतं प्रभूतं परिपूर्णं तत्सर्वं गायत्री भगवानेव । भू बहाविति धातोः । बहुः पूर्णतायामिति च ।

यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् ।
तदिदं भगवान् विष्णुस्सर्वान्तःस्थित एव च ।।

तन्निःसृतत्वाद् वेदानां गायकस्त्राति चाखिलम् ।
अतो गायत्रिनामासौ वासुदेवः परः पुमान् ।।

भूमा भूतमिति प्रोक्तः पूर्णत्वात् पुरुषोत्तमः ।
अनन्यापेक्षमुद्रिक्तं सर्वस्य च नियामकम् ।।

यद्यत्तत्तद्विष्णुरेव नान्यदेतादृशं क्वचित् ।
स एव भगवान् विष्णुर्वाङ्नामा वाचि संस्थितः ।।
वचनाद्धयशीर्षाख्यो गायत्र्यां च स आस्थितः ।

पृथिव्याख्यतुरीयभगवद्रूपोपासना

उप.– या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या२ँ हीद२ँ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयन्ते ।। २ ।।

भा.– स एव पृथिवीनामा पृथिव्यामपि संस्थितः ।।

विष्णौ हि पृथिवीसंस्थे जगत्सर्वं प्रतिष्ठितम् ।
नातिशेते च तं कश्चित् स हि सर्वाधिको हरिः ।।
पृथुत्वात् पृथिवीनामा ........ ..........

शरीराख्यपञ्चमभगवद्रूपोपासना

उप.– या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीर्यन्ते ।। ३ ।।

भा.– ........ .......... स एवान्तःशरीरगः ।
शरित्वादीरणाच्चैव शरीरं भगवानजः ।।
पुरुषो जीव उद्दिष्टस्तस्मिन्नेव स्थितो विभुः ।

हृदयाख्यषष्ठभगवद्रूपोपासना

उप.– यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ।।४।।

भा.– योऽसौ जीवे स्थितो विष्णुः शरीरमिति नामकः ।।

शंत्वाच्च रतिरूपत्वादीरणाच्च स एव तु ।
जीवचैतन्यरूपस्य हृदयेऽपि व्यवस्थितः ।।

अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः ।

उप.– सैषा चतुष्पदा षड्विधा गायत्री ।

भा.– गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यसप्रभः ।।

द्वितीयश्चैव मत्स्यादिर्भूतनामावतारगः ।
तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः ।।

चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः ।
जीवस्यान्तर्गतो व्याप्य शरीरमितिनामकः ।।

पञ्चमस्तद्धृदिस्थस्तु षष्ठो हृदयनामकः ।
गायत्रीनामको विष्णुरेवं षड्विध उच्यते ।।

त्रिभिः स्वरूपपादैश्च भिन्नेनैकेन चैव हि ।
गायत्रीनामको विष्णुश्चतुष्पात् सम्प्रकीर्तितः ।।

भगवतः पादचतुष्टयविवृतिः

उप.– तदेतदृचाभ्यनूक्तं–

तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ।। ६ ।।

भा.– भिन्नपादः सर्वजीवास्तस्य सादृश्यमात्रतः ।
स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ।।

नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ।
अनन्तशयनं चैव तथाऽनन्तासनं हरेः ।।

बहुलक्षोच्छ्रिते नित्ये विमाने संस्थिते यतः ।
चित्प्रकृत्यात्मनि ततो दिवीति कथितं श्रुतौ ।।

लोकत्रयविवक्षायां परतो लक्षयोजनम् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिविसंस्थिताः ।।

दिवः परश्च भगवान् सप्तलोकविवक्षया ।

प्रकारान्तरेण भगवतः पादचतुष्टयविवृतिः

उप.– यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ।। ७ ।।

अयं वाव स योयमन्तः पुरुष आकाशो यो वै सोन्तः पुरुष आकाशः ।। ८ ।।

अयं वाव स योऽयमन्तर्हृदय आकाशो यो वै सोऽन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीᳬ श्रियं लभेत य एवं वेद ।। ९ ।। १२ ।।

भा.– परंब्रह्मेति भगवान् सर्वगः सम्प्रकीर्तितः ।।

स एव जीवस्य बहिर्हृदयाकाश आस्थितः ।
योऽयं हृदयगः सोऽथ जीवान्तर्व्याप्य संस्थितः ।।

व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः ।
एवं चापि चतुष्पात्त्वं वासुदेवस्य कीर्तितम् ।।

स एव पूर्णो भगवानप्रवर्त्यस्तथाऽखिलैः ।
अन्यैः प्रवर्त्यते योऽसौ स प्रवर्तीति गीयते ।।

अप्रवर्त्यो हरिर्नित्यस्वतन्त्रत्वात् सदैव च ।
अस्य प्रवृत्तिर्नास्तीति सोऽप्रवर्तीति कीर्तितः ।।

पूर्णा स्वतन्त्रा श्रीश्चास्य वेत्तुर्भवति शाश्वती ।
साक्षाद्गायत्र्युपासायां योग्य एकश्चतुर्मुखः ।।

तस्मादनन्यतन्त्राऽस्य श्रीर्भवेन्नान्यथा क्वचित् ।
विष्णुतन्त्रत्वमस्य स्यात् परेषां तस्य तन्त्रता ।
यथाक्रमेण तन्त्रत्वं योग्यताक्रमतो भवेत् ।। इति सत्तत्त्वे ।

ब्रह्मशब्दाच्च भगवानित्यवसीयते । पूर्णाप्रवृत्तित्वं च तस्मिन्नेव मुख्यम् । तावानस्य महिमेति मन्त्राच्च । पादोऽस्य विश्वा भूतानीति जीवानां चतुष्पादान्तर्भावात् । भूतं यदिदं किञ्चेति षड्विधान्तर्भूतं भूतं मत्स्याद्यवताररूपमेव ।

द्वाविंशेष्ववतारेषु जीवोऽप्युक्तो यथा पृथुः ।
तथा पादेषु चतुर्षु सान्निध्याज्जीव ईरितः ।।

यथा कालः पुमान् व्यक्तं प्रकृतिश्च परस्य तु ।
विष्णो रूपाणि गण्यन्ते पररूपेण वै सह ।।

एवं भूतानि गण्यन्ते भिन्नान्यपि पदैः सह ।
मूर्तामूर्ते यथा रूपे ब्रह्मणस्तु तथैव च ।।
भिन्नान्यपि तु भूतानि पदानि स्वपदैः सह ।। इति प्राथम्ये ।

'सुदर्शनाख्यं स्वास्त्रं तु प्रायुङ्क्त दयितं त्रिपात्' इति श्रीभागवते प्रयोगाच्च न जीवो भगवत्स्वरूपम् ।

सुवर्चला यथा सूर्यपत्न्यंशः समुदाहृता ।
एवं जीवा भगवतो वस्तुभेदेऽपि सर्वदा ।। इति च ।।१२।।

(हृदयनामकपरमात्मनो द्वारपालकाः)

पूर्वद्वारपालकः सूर्यः

उप.– तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत् तेजोऽन्नाद्य-मित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ।। १ ।।

दक्षिणद्वारपालकश्चन्द्रः

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदे-तच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ।।२।।

पश्चिमद्वारपालको वह्निः

अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्म-वर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ।।३।।

उत्तरद्वारपालकः इन्द्रः

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेत् कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ।।४।।

ऊर्ध्वद्वारपालकः प्रधानवायुः

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ।। ५ ।।

द्वारपालकोपासनायाः फलम्

ते वा एते पञ्चब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ।। ६ ।।

अस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ।

भा.– प्राणाभिमानी चक्षुश्च सूर्य एव ह्युदाहृतः ।
तेजोऽन्नाद्यभिमानी च प्राग्द्वाराधिपतिर्हरिः ।।

दक्षिणाधिपतिस्सोमो व्यानः श्रोत्राभिमानवान् ।
यशोलावण्यरूपश्च पश्चिमद्वारपस्तथा ।।

वागपानात्मको वह्निर्ब्रह्मतेजोऽन्नदेवता ।
उत्तरद्वारपस्त्विन्द्रः समानो मनआत्मकः ।।

कीर्त्यैश्वर्यात्मको नित्यमूर्ध्वद्वारप एव च ।
प्रधानवायुराकाशः सर्वज्ञादुन्नतेस्तथा ।।

उदान ऊर्जितत्वात् स ओजः पूर्णत्वतो महः ।
परस्य ब्रह्मणस्त्वेते पुरुषाः पञ्च कीर्तिताः ।।

द्वारपा हृदये चैव विष्णुलोके च सर्वदा ।
आन्तरद्वारपा ह्येते जयाद्या बाह्यतः स्मृताः ।।

एवमेतानुपास्यैव तद्गुणांशांशभाग् भवेत् ।
विष्णुलोकं तथा गच्छेद् भवेदपि सुसन्ततिः ।।

उप.– अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ।। ७ ।।

यत्रैतदस्मिंच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ।। ८, १३ ।।

भा.– योऽसौ वैकुण्ठगो विष्णुः सप्तलोकोपरिस्थितः ।
स एव सर्वलोकेषु विश्वतो ब्रह्मणस्तथा ।।

उच्चेषूत्तमलोकेषु तथा प्रत्यवरेषु च ।
पुरुषेषु च सर्वेषु स एकः संव्यवस्थितः ।।

प्राणसंस्थस्स वै विष्णुः प्राणोऽग्नौ संव्यवस्थितः ।
स्पर्शेन दृश्यते चाग्निस्तद्दृष्टिरिव सा ततः ।।

स प्राणः स्तौति तं विष्णुं सा स्तुतिः श्रूयते सदा ।
कर्णौ पिधाय तद्विद्वान् दिव्यचक्षुः सुकीर्तिमान् ।।
मुक्तो भूत्वा भवेद्यस्मादुपासीतैव सन्ततम् ।। इति संस्तत्त्वे ।

'दिक्षु यानाद्यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति शब्दनिर्णये । सर्वतः पृष्ठेषु सर्वत उच्चेषु वैकुण्ठक्षीरसागरानन्तासनादिषु विश्वतो ब्रह्मणोऽप्युच्चेषु । तत उत्तमोऽन्यो नास्तीत्यनुत्तमाः सर्वतः स्वयमुत्तमाः ।

पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरेः ।।

व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।
पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।।

दिवीन्द्रसदनं चैव तत्परे तु दिवः परे ।
पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।।

तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परः ।। इति सत्तत्वे ।

'निनदः समुद्रघोषः स्यान्नदथुर्मेघसम्भवः' इति सत्तत्वे ।

'चक्षुष्यश्चक्षुषि ब्रह्मण्येष यातीत्युपासकः' इति च ।। १३ ।।

हर्युपासना

उप.– सर्वं खल्विदं ब्रह्म । तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ।। १ ।।

मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाश आत्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ।।२।।

भा.– इदं ब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः ।
तच्च ब्रह्मजलान् साक्षाद्योऽसौ विष्णुर्जलेऽनिति ।।

आनीदवातमिति यं वेदवागवदत् स्फुटम् ।
अप्रकेते तु सलिले ब्रह्म नारायणोऽपि सः ।।

इति शान्त उपासीत यस्माज्ज्ञानमयः पुमान् ।
क्रतुस्तु निश्चितं ज्ञानं तद्वशः पुरुषो मृतौ ।।

तस्माद्विनिश्चितं ज्ञानं कुर्याद्विष्णौ महद्गुणे ।
महाज्ञानात्मकत्वात् तु प्रोक्तो विष्णुर्मनोमयः ।।

यस्माद्बलशरीरोऽसावतः प्राणशरीरकः ।
आसमन्तात् प्रकाशात् स आकाशात्मा प्रकीर्तितः ।।

सर्वगन्धादिरूपश्च भोक्ता चैषां सदैव हि ।
इति निश्चयकृद्याति तमेव पुरुषोत्तमम् ।। इति सद्गुणे ।

भगवान् अणोरणीयान् महतो महीयांश्च

उप.– एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामकतण्डुलाद्वा एष मे आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः।।३।।

भगवत्तत्वज्ञानिनो लभ्यफलम्

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ।। ४ ।। १४ ।।

भा.– एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्व-मुच्यते । अन्यत्र तद्भोक्तृत्वम् ।। १४ ।।

विश्वाश्रयस्य हरेः शरीरम्

उप.– अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन् विश्व-मिदꣳ श्रितम् ।। १ ।।

भा.– क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता ।
आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः ।।

तस्योदरेऽन्तरिक्षं च पृथिवी पादबुध्नयोः ।
शिरोविवरगा द्यौश्च दिशो बाहुषु संस्थिताः ।।

अजरोऽयं महाविष्णुर्वसवो देवतागणाः ।
तेषां निधानं भगवांस्तस्मिन् सर्वमिदं श्रितम् ।।

दिशामाश्रयस्य भगवतो बाहवः

उप.– तस्य प्राची दिक् जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोद९ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोद९ रुदम् ।। २ ।।

भा.– प्राचीदिक्संस्थितस्तस्य बाहुर्दक्षिण ऊर्ध्वगः ।
जुहूः स होमकर्तृत्वाद् भुङ्क्ते ह्येतेन केशवः ।।

दक्षिणस्त्वधरो बाहुर्दक्षिणादिक् स्थितो विभोः ।
सहमानेति स प्रोक्तो मानं वेदात्मकं यतः ।।

शङ्खो वेदात्मकः शङ्खसहितो दक्षिणाधरः ।
बाहुर्जुहोति चक्रेण शत्रूनित्यथवा जुहूः ।।

प्रतीचीदिक्स्थितस्तस्य वामबाहुस्तथोत्तरः ।
राजीयुक्तगदायुक्तो राज्ञीनामा प्रकीर्तितः ।।

अधरो वामबाहुर्य उत्तरादिक्स्थितो विभोः ।
श्रिय आधारपद्मित्वात् सुभूतानामकः स्मृतः ।।

दिङ्नामानश्च ते प्रोक्ता धर्मज्ञानादिदेशनात् ।
तेभ्यो जातो महावायुर्दिशां वत्सस्ततः स्मृतः ॥

धर्मज्ञानादिरूपेण विष्णोर्बाहुचतुष्टयात् ।
जातं वायुं विदित्वैव पुत्रो भूत्वा न रोदिति ॥

न जायते न म्रियते मुक्तो भूत्वा सुखी भवेत् ।
वायुं हरेः सुतं ज्ञात्वा नाहं पुत्रतयाऽरुदम् ॥

हरेः प्रसादसामर्थ्यादजरा चामरा ह्यहम् ।
अनादिकालसम्बन्धादित्युवाच परा रमा ॥

हरेर्बाहूपासनया रमया लब्धफलनिरूपणम्

उप.– अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इद९ सर्वं भूतं यदिदं किश्च तमेव तत्प्रापत्सि ॥ ४ ॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥

अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येतदवोचं तदवोचम् ॥ ७ ॥ १५ ॥

भा.– अविनष्टं परानन्दकामं विष्णुं सदा ह्यहम् ।
प्रपद्ये तत्प्रसादेन केवलं नात्मशक्तितः ।।

प्राणं सर्वप्रणेतारं प्रपद्ये केशवं सदा ।
प्रभूतं यदिदं किञ्चित् प्रादुर्भावात्मकं हरेः ।।

मत्स्याद्यं तत्प्राण एव विष्णुर्नास्त्यत्र संशयः ।
तस्मान्मत्स्यादिरूपं तं विष्णुमेव प्रपद्यथ ।।

हे जना इत्यवोचत् सा लक्ष्मीः सर्वाः प्रजाः प्रति ।
प्राणनामा वासुदेवो मोक्षं स्वान् प्रणयेद्यतः ।।

सङ्कर्षणस्तु भूर्नामा भूषयेज्ज्ञानतो यतः ।
स पृथ्व्यां पृथिवीनामा स्वात्मानं प्रथयेद्यतः ।।

अन्तरिक्षेऽन्तरिक्षाख्यो यतः साध्वन्तरीक्षते ।
दिवि द्युनामा स विभुः सर्वक्रीडाकरत्वतः ।।

प्रद्युम्नश्च भुवोनामा सृष्ट्या यद्भावयेज्जगत् ।
सोऽग्निनामा परो वह्नावत्ति सर्वं यतो हुतम् ।।

वायुनामा स वायुस्थो वात्यायुश्च यतोऽस्य तत् ।
आदित्याख्यः स आदित्ये आददात्यायुरस्य यत् ।।

स्वर्नामा त्वनिरुद्धोऽसौ परानन्दप्रदत्वतः ।
ऋग्वेदाख्यः स ऋग्वेदे ज्ञानं वेदयते यतः ।।

यजुर्वेदो यजुर्वेदे यज्ञं वेदयते यतः ।
सामवेदः सामवेदे साम्यं वेदयते ह्ययम् ।।

एवं चतुर्विधं तत्त्वं तदवोचमहं हरेः ।
इत्युवाचेन्दिरा देवी स्तुवन्ती परमं हरिम् ।। इति च ।
'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यदि' इति च ।।१५।।

जीवनं यज्ञात्मकम् – तत्र प्रातःसवनम्

उप.– पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीद९ सर्वं वासयन्ति ।। १ ।।

तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिन९ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ।। २ ।।

माध्यन्दिनसवनम्

अथ यानि चतुश्चत्वारिंद्वर्षाणि तन्माध्यन्दिन९सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं मान्धन्दिन९ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीद९ सर्वं रोदयन्ति ।। ३ ।।

तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिन९ सवनं तृतीयं सवनमनुसन्तनुतेति माहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ।।४।।

सायंसवनम्

अथ यान्यष्टाचत्वारि९शद्वर्षाणि तत् तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वाव आदित्या एते हीद९ सर्वमाददते ।। ५ ।।

तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माहं प्राणानां आदित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ।। ६ ।।

भा.– विष्णुपूजार्थयज्ञोऽहमित्युपासनमादरात् ।
कुर्वीत पुरुषो नित्यं तस्य यत्षोडशोत्तरम् ।।

शतमायुस्तत्सवनत्रयमीरितमुत्तमम् ।
चतुर्विंशत्तु यत्पूर्वं प्रातःसवनमेव तत् ।।

प्रार्थयित्वा वसूंस्तद्वं पुमान् मृत्युमपानुदेत् ।
मध्ये चतुश्चत्वारिंशन्मध्यमं सवनं स्मृतम् ।।

रुद्राणां प्रार्थनेनात्र पुमान् मृत्युमपानुदेत् ।
ततोऽष्टचत्वारिंशत् तु तृतीयं सवनं स्मृतम् ।।
आदित्यानां प्रार्थनेन तद्वं मृत्युमपानुदेत् ।। इति सर्वयज्ञे ।

पुरुषयज्ञोपासनायाः फलम्

उप.– एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्राह षोडशं वर्षशतं जीवति य एवं वेद ।। ७ ।। १६ ।।

महिदासकृष्णकपिलाख्यजीवानां चरितम्

भा.– महिदासोऽन्यः । कृष्णश्चान्यः एव ।

महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः ।
कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरा नराः ।।

सङ्गत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने ।
मातुः स्वस्य च नामैक्यं विष्णुना स्यादिति ह्युभौ ।।

स्वात्मशिष्यप्रशिष्याणां नामैक्यं कपिलस्तथा ।
एवमेव च वेदोक्ता भवेमेति त्वतन्द्रिताः ।।

तान् वरान् प्रददौ तेषां ब्रह्मा लोकपितामहः ।
तस्मात् तन्नामिनश्चासंस्त्रयस्ते मुनयोऽपि हि ।।

महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः ।
साक्षात् स भगवान् विष्णुस्तन्नामैको मुनिर्ह्यभूत् ।।

कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलम् ।
तन्नामा देवकीपुत्रस्त्वन्योऽप्यभवदञ्जसा ।।

कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः ।
तन्नामा कपिलोऽन्यस्तु शिष्यनाम्ना सहाभवत् ।।

स षोडशशतञ्जीवी महिदासोऽपरस्त्वृषिः ।
घोरशिष्यस्तथा कृष्णः कपिलश्च कुशास्त्रकृत् ।।

त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः ।
कृतकृत्याः प्रमुमुदुस्तन्नामानश्च तेऽभवन् ।।

इति कालकीये ।। १६ ।।

पुरुषयज्ञस्य दीक्षोपसदादीनां विचारः

उप.– स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ।। १ ।।

अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ।। २ ।।

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ।।३।।

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ।। ४ ।।

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्याव-भृथः ।। ५ ।।

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राण-शꣳसितमसीति ।

भा.– स्वरूपभूतयज्ञस्य क्षुत्पिपासाऽरतिस्तथा ।
दीक्षा भोजनपाने च रतिश्चोपसदः स्मृताः ।।

व्यवायहासभक्षास्तु स्तुतशस्त्रात्मकाः स्मृताः ।
तपो दानार्जवाहिंसाः सत्यमप्यस्य दक्षिणाः ।।

सोष्यत्यसोष्टेति ततो यज्ञवत्पुत्रजन्मनि ।
आहुर्हि पुनरुत्पत्तिं प्रसवः प्रथमा पितुः ।।

यज्ञस्नानं तु मरणं तदा ध्यायेत् त्रयं पुमान् ।
भगवन्नक्षयोऽसि त्वमच्युतोऽसि गुणैः सदा ।।
प्राणाच्च सुखितो नित्यमाधिक्येनेति चिन्तयेत् ।। इति सत्तत्त्वे ।

भगवदुपासनया अपरोक्षज्ञानम्, भगवत्प्राप्तिश्च

उप.– तत्रैते द्वे ऋचौ भवतः ।। ६ ।।

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते दिवा ।।

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।। इत्यगन्म ज्योतिरुत्तममिति ।। ७ ।। १७ ।।

भा.– आदित् तस्मादेव तत्प्रसादादेव । प्रत्नस्य पुरातनस्यानादेर्भगवतो रेतसः रतिरूपस्य ज्योतिः पश्यन्ति । वासेन रमयतीति वासरम् । दिवःपरतो वैकुण्ठे यदिध्यते । ऋद्धतममेव सर्वदा । 'अथ यदत परः' इत्युक्तत्वाच्च । न चादित्यमण्डलं दिवः परतः । उत्तरं ज्योतिः पश्यन्तः स्वरानन्दरूपं परिपश्यन्तो वयं तमस उदगन्म । उत्तरं ज्योतिः पश्यन्तस्तदेवोत्तरं स्वश्च पश्यन्तः । द्विरुक्तिस्तात्पर्यार्था । उदाख्यं ज्योतिरुत्तमं तमसः सकाशादगन्म प्राप्ताः स्मेत्यर्थः । 'तस्योदितिनाम' इति श्रुतेः । देवत्रादेवं देवविषयेऽपि देवं देवानां देवमित्यर्थः । सूरिभिः प्राप्यत्वात् सूर्यम् ।

रतिरूपं परं ज्योतिरनादेः केशवस्य यत् ।
तत्प्रसादेन पश्यन्ति हृदि वासाद्रतिप्रदम् ।।

यत्पूर्णं सर्वदा भाति वैकुण्ठे परतो दिवः ।
तदुदाख्यं प्रपश्यन्तो निर्गत्य तमसो वयम् ।।

ज्योतिरानन्दसद्रूपमुत्तमोत्तमसूत्तमम् ।
देवानां दैवतं साक्षात्सूरिप्राप्यं परं पदम् ।।
प्राप्ताः स्म वासुदेवाख्यमिति मन्त्रदृगब्रवीत् ।।

इति नारायणीये ।। १७ ।।

अध्यात्माधिदैवतयोः भगवदुपासना

उप.– मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ।। १ ।।

अध्यात्माधिदैवतयोर्हरे रूपचतुष्टयम्

तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुःपादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशो पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चाधिदैवतं च ।। २ ।।

वागिन्द्रिये वासुदेवः

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।। ३ ।।

प्राणेन्द्रिये सङ्कर्षणः

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।।४।।

चक्षुरिन्द्रिये प्रद्युम्नः

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।।५।।

श्रोत्रेऽनिरुद्धः

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ।। ६ ।। १८ ।।

भा.– मनःसंस्थस्तु यो देवः साक्षान्नारायणः प्रभुः ।
स एवाकाशसंस्थश्च मन आकाशनामकः ।।

मननान्मन आकाश आसमन्तात् प्रकाशनात् ।
वासुदेवादिभेदेन स वागादिषु संस्थितः ।।

अग्न्यादिषु च तन्नामा वागादिस्थः स एव तु ।
अग्न्यादिस्थैः सहैवेशो भाति दृष्टांस्तपत्यथ ।।

एवं विद्वांस्तमीशेशं यशोज्ञानसुखात्मताम् ।
कीर्तिं च ब्रह्मसम्प्राप्त्या वरतां मुक्तिगामपि ।।
प्राप्य भाति तपत्यद्धा स्वाज्ञानादिकमेव च ।। इति च ।।१८।।

## आदित्ये भगवदुपासना

उप.– आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ।। १ ।।

तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रोऽथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि च सर्वे च कामास्तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ।। ३ ।।

स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ।। ४ ।। १९ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि तृतीयोऽध्यायः ।।

भा.– अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम् ।
प्रलये वासुदेवाख्यं गम्यं सदभवद्विदाम् ।।

तत्प्रकृत्या समभवत् तत आण्डमजायत ।
तस्मिन्नादित्यनामासावभवत् सूर्यमण्डले ।।

नियन्तैव च सूर्यस्य भगवान् पुरुषोत्तमः ।
तस्मिन्नादित्यनामानमादित्यस्थं जनार्दनम् ।।
ब्रह्मोपासीत परमं सर्ववेदज्ञता ततः ।। इति ब्रह्मतत्त्वे ।

उलूलव उरूरव । अतिमहान्तो गायत्र्यादिघोषाः उप च निम्रेडेरन् । मुक्ते तस्मिन्नेव वसेयुः ।

सूर्यबिम्बस्थिते विष्णौ जायमाने परात्मनि ।
गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्यास्समुपस्थिताः ।।

उपतिष्ठन्त्यतो नित्यं गायत्र्यादिभिरञ्जसा ।
तद्विद्वान् मुक्त आवासो वेदानां सर्वदा भवेत् ।।
इति च ।। १९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये तृतीयोऽध्यायः ।।

मननान्मन आकाश आसमन्तात् प्रकाशनात् ।
वासुदेवादिभेदेन स वागादिषु संस्थितः ।।

अग्न्यादिषु च तन्नामा वागादिस्थः स एव तु ।
अग्न्यादिस्थैः सहैवेशो भाति दुष्टांस्तपत्यथ ।।

एवं विद्वांस्तमीशेशं यशोज्ञानसुखात्मताम् ।
कीर्तिं च ब्रह्मसम्प्राप्त्या वरतां मुक्तिगामपि ।।
प्राप्य भाति तपत्यद्धा स्वाज्ञानादिकमेव च ।। इति च ।।१८।।

## आदित्ये भगवदुपासना

उप.– आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ।। १ ।।

तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेधो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रोऽथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि च सर्वे च कामास्तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ।। ३ ।।

स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ।। ४ ।। १९ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि तृतीयोऽध्यायः ।।

भा.– अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम् ।
प्रलये वासुदेवाख्यं गम्यं सदभवद्विदाम् ।।

तत्प्रकृत्या समभवत् तत आण्डमजायत ।
तस्मिन्नादित्यनामासावभवत् सूर्यमण्डले ।।

नियन्तैव च सूर्यस्य भगवान् पुरुषोत्तमः ।
तस्मिन्नादित्यनामानमादित्यस्थं जनार्दनम् ।।
ब्रह्मोपासीत परमं सर्ववेदज्ञता ततः ।। इति ब्रह्मतत्त्वे ।

उलूलव उरूरव । अतिमहान्तो गायत्र्यादिघोषाः उप च निम्रेडेरन् । मुक्ते तस्मिन्नेव वसेयुः ।

सूर्यबिम्बस्थिते विष्णौ जायमाने परात्मनि ।
गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्यास्समुपस्थिताः ।।

उपतिष्ठन्त्यतो नित्यं गायत्र्यादिभिरञ्जसा ।
तद्विद्वान् मुक्त आवासो वेदानां सर्वदा भवेत् ।।

इति च ।। १९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये तृतीयोऽध्यायः ।।

## अथ चतुर्थोऽध्यायः

### जानश्रुतेरुपाख्यानम्

उप.– जानश्रुतिर्हि पौत्रायणः श्रद्धादेयो बहुदायी बहुवाक्य आस । स ह सर्वत आवसथान् मापयाश्चक्रे सर्वत एव मेऽत्स्यन्तीति ।।१।।

अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ।। २ ।।

भा.– भल्लाक्ष मन्दाक्ष ।

उप.– तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ।। ३ ।।

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ।। ४ ।।

भा.–यथा कृते जिते त्रेतादिजयफलं च तस्यैव भवति । एवमन्येषां पुण्यफलं प्राधान्येन तस्यैव भवति ।

### रैक्वमुनेरन्वेषणम्

उप.– तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ।। ५ ।।

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति

यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स सर्वं मयैतदुक्त इति ।। ६ ।।

भा.–अरे अङ्ग इष्ट । सयुग्वा रैक्वो ज्ञातव्यः ।

उप.– स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येया तꣳ स होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छेति ।। ८ ।।

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा३ इति ह प्रति जज्ञे स ह क्षत्ताऽन्विष्याविदमिति प्रत्येयाय ।। ८ ।। १ ।।

भा.–अहं ह्यरा३ इति प्लुतिः पामकषणभावेन ।। १ ।।

रैक्वस्य वैराग्यम्

उप.– तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ।। १ ।।

रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ।। २ ।।

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ।। ३ ।।

तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ।। ४ ।।

तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ।। ५ ।। २ ।।

शूद्रशब्दव्याख्यानम्

भा.– शुचाऽऽद्रवणाच्छूद्रः ।

राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः ।
प्राणविद्यामवाप्यास्मात् परं धर्ममवाप्तवान् ।। इति पाद्मे ।।२।।

रैक्वोपदिष्टसंवर्गविद्या

उप.– वायुर्वाव संवर्गो यदा वा महाप्रलये अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ।। १ ।।

यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् ।। २ ।।

अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणꣳ चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ।। ३ ।।

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ।। ४ ।।

भा.– संवृङ्क्ते सर्वदेवान् यद्वायुः संवर्ग ईरितः ।

वायुरेव संवर्गः अस्मिन् विषये ऐतिह्यम्

उप.– अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ।। ५ ।।

स होवाच महात्मनश्चतुरो देव एकः कः सो जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ।। ६ ।।

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजाना९ हिरण्यद९ष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहु-रनद्यमानो यदन्नमत्तीति वै वयं ब्रह्मचारिन्निदमुपास्महे दत्तास्मै भिक्षामिति ।। ७ ।।

तस्मा उ ह ददुस्ते वा एते पश्चान्ये पश्चान्ये दश सन्तस्तत्कृतं तस्मात् सर्वासु दिक्ष्वन्नमेव दश कृत९ सैषा विराडन्नादी तयेद९ सर्वं दृष्ट९ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ।। ८ ।। ३ ।।

भा.– महिमाऽस्य महानेष यदनाद्योऽत्ति देवताः ।। इति प्रभञ्जने ।

'दशेति वै सर्वम्' इति श्रुतेः । कृतस्य च पूर्णात्मकत्वा-दध्यात्माधिदैवतभेदेन पञ्चदेवता दशभूताः कृतम् । तस्माद्वायुना सह दशसङ्ख्यापूरणात् सर्वदिक्षु स्थिता देवता वायुना सहान्नमेव । अन्नादी देवता विराड् विष्णुरेव । अनद्यमान इत्यन्यैरनद्यमानः ।

वायुस्तु सर्वदेवात्ता वायोरत्ता जनार्दनः ।<br>न तस्य कश्चिदत्तास्ति स विराडधिराजनात् ।। इति च ।।३।।

## जावालसत्यकामोपाख्यानम्

उप.– सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ।। १ ।।

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जवाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जावालो ब्रुवीथा इति ।। २ ।।

स ह हारिद्रुमन्तं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ।। ३ ।।

त॰ होवाच किं गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातर॰ सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जवाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोह॰ सत्यकामो जावालोऽस्मि भो इति ।। ४ ।।

त॰ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिध॰ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशतं गा निराकृत्योवाचेमाः सोम्यानु संव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति स ह वर्षगणं प्रोवाच ता यदा सहस्र॰ सम्पेदुः ।। ५ ।। ४ ।।

भा.– आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः ।

गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ।।
इति सामसंहितायाम् ।। ४ ।।

ऋषभरूपिवायुना वासुदेवाख्यरूपोपदेशः

उप.– अथ हैनमृषभोऽभ्युवाद सत्यकामा ३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ।। १ ।।

ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ।। २ ।।

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिꣳल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳ श्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ।। ३ ।।५।।

अग्निना सङ्कर्षणाख्यभगवद्रूपोपदेशः

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ।। १ ।।

तमग्निरभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ।।२।।

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ।। ३ ।।

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते अनन्तवानस्मिꣳल्लोके भवति अनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४, ६ ॥

हंसरूपिणा चतुर्मुखब्रह्मणा प्रद्युम्नाख्यभगवद्रूपोपदेशः

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिꣳल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥ ७ ॥

मद्गुरूपिवरुणेनानिरुद्धोपदेशः

मद्गुः ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

मद्गुरुपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव
॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो आयतनवान्नाम ॥ ३ ॥

स य एतमेवं विद्वा९ँश्चतुष्कलं पादं ब्रह्मणः आयतनवानित्युपास्ते आयतनवानस्मि९ँल्लोके भवति आयतनवतो ह लोकाञ्जयति य एतमेवं विद्वा९ँश्चतुष्कलं पादं ब्रह्मणः आयतनवानित्युपास्ते
॥ ४ ॥ ८ ॥

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयात् ॥ २ ॥

श्रुत९ँ ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति
॥ ३ ॥ ९ ॥

भा.– वायुर्वृषभरूपः सन्नग्निर्हंसश्चतुर्मुखः ।
मद्गुरूपश्च वरुणः सत्यकामाय होचिरे ॥

प्रकाशानन्ततेजोवत्स्थानवत्सञ्ज्ञिका हरेः ।
वासुदेवादिका मूर्तीः प्रत्येकं चतुरात्मनः ॥

दिगादिषु स्थितास्तेषामधिपाश्च तदाख्यकाः ।
नाचार्यबुध्या तैरुक्तमतोऽनुज्ञां गुरोरगात् ।।

उत्तमाचार्यसम्प्राप्त्यै नावराचार्यतः क्वचित् ।
इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत् ततः ।।

ऋषिभ्यस्तूत्तमा देवा देवेभ्यो वायुरुत्तमः ।
वायोश्च भगवान् विष्णुर्न तस्मादुत्तमो गुरुः ।।
इत्याचार्यसंहितायाम् ।

अत्र ह न किञ्चन वीयाय । देवेभ्यः श्रुत्वा न च ते काचिद्धा-निरभवदित्यर्थः ।। ५-९ ।।

उपकोसलोपाख्यानम्

उप.– उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्य-मुवास तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार स ह स्मा अन्या-नन्तेवासिनः समावर्तय९स्त९ ह स्मैव न समावर्तयति ।।१।।

तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीन् मा त्वाऽग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे
।। २ ।।

अग्निभिः कृतः मुख्यप्राणपरब्रह्मोपदेशः

स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामीति ।। ३ ।।

अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ।। ४ ।।

प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेवं खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः
।। ५ ।। १० ।।

भा.–प्राणो ब्रह्म बलरूपं ब्रह्म । कमानन्दरूपं खं ज्ञानरूपम् ।।

अपरं ब्रह्म स प्राणः साक्षाद्यो बलदेवता ।
ज्ञानानन्दात्मकं पूर्णं परंब्रह्म स्वयं हरिः ।।

नैजानन्दबलोद्रेकः कमित्युक्तो मनीषिभिः ।
बलज्ञानसमाहारः पूर्णः खमितिशब्दितः ।।

तदात्मकः परो विष्णुराकाश इति कीर्तितः ।
एवं प्राणस्तथाऽऽकाशो ब्रह्मणी द्वे प्रकीर्तिते ।। इति च ।

प्राणशब्दस्य वायुरर्थः प्रसिद्धः । कखयोर्भिन्नार्थत्वाशङ्कया कं च खं च न विजानामीत्याह । अत एवैक्याभिप्रायेण यद्वाव कं तदेव खं यदेव खं तदेव कमित्यूचुः ।। १० ।।

गार्हपत्याग्निना पृथिव्यादिस्थभगवदुपदेशः

उप.– अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ।।१।।

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायु-

रेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽ-
स्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ।। २, ११ ।।

अन्वाहार्यपचनाग्निना जलादिस्थभगवदुपदेशः

अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ।।१।।

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व-
मायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जा-
मोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ।। २, १२।।

आहवनीयाग्निना प्राणादिस्थ भगवदुपदेशः

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ।। १ ।।

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व-
मायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जा-
मोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ।। २, १३।।

भा.– पृथुत्वात् पृथिवी विष्णुरग्निश्चाप्यङ्गनेतृतः ।
अन्नमत्तृत्वतो नित्यमादित्यश्चादिरूपतः ।।

आप आपालनाच्चैव देशनाद्दिश एव च ।
अनन्यराजो नक्षत्रमानन्दत्वाच्च चन्द्रमाः ।।

प्राणोऽसौ बलरूपत्वादाकाशः पूर्तिहेतुतः ।
द्यौः प्रकाशस्वरूपत्वाद् वेदनाद्विद्युदेव च ।।

यः सोमसूर्यविद्युत्सु तत्तन्नामा हरिः परः ।
अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः ।।

इति तत्त्वसंहितायाम् ।

"सोऽहमस्मि" इति वाक्यस्य जीवब्रह्मैक्यपरत्वनिरासः

जीवैक्यपक्षे 'आदित्ये पुरुषं चन्द्रमसि विद्युतीति' भेदव्यपदेशो न युज्यते । "पृथिव्यग्निरन्नमादित्यः," "आदित्ये पुरुषः" इत्यादिना आदित्यादिशब्दवाच्यौ प्रथमार्थः सप्तम्यर्थश्च द्वौ प्रतीयेते । अतो नैक्यमुच्यते । स एवाहमस्मीत्यन्तर्यामिणोः सर्वविशेषाभावज्ञापनार्थम् । पूर्वं सोऽहमस्मीत्यभेदे तात्पर्याधिक्यज्ञापनाय ।

अहमस्म्यादिकाः शब्दा अन्तर्यामिणि मुख्यतः ।
तत्सम्बन्धाज्जीवगाश्च तस्माद्भेदगता हरौ ।।

अस्मच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः ।
अग्नयो द्विविधं विष्णुमवोचन्नुपकोसले ।।

इति सामसंहितायाम् ।

नास्यावरपुरुषाः क्षीयन्ते भृत्यवानेव भवति । लोकी भगवल्लोकी भवति ।। १३ ।।

उपकोसलमुखे ब्रह्मवर्चः

उप.– ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसला ३ इति ।। १ ।।

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को

नु त्वानुशशासेति को नु माऽनुशिष्याद्धो इतीहावेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ।। २ ।।

चक्षुरन्तःस्थभगवदुपासनम्

इदमिति ह प्रतिजज्ञे ................ ....................

भा.– इह च अव च इहावे । इहेति मनुष्यलोकस्था उच्यन्ते अवेति पातालस्थाः । मानुषासुरौ भगवन्तं निह्नुत एव न वक्तुं समर्थौ । अतो देवा एव मामनुशासुरित्यर्थः । ईदृशा इति वर्णतो ज्वालावर्णा इति । अन्यादृशाश्च करशिरश्चरणादिमन्तः । चन्द्रादिसर्वनामवत्वात् । 'यो देवानां नामधा एक एव' इति श्रुतेर्विष्णोरेव सर्वनामानि ।। १४ ।।

उप.– ............. लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ।। ३ ।। १४ ।।

चक्षुरन्तःस्थभगवद्विद्या

य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मैतस्मिन्न किञ्चन श्लिष्यति तद्यदस्मिन् सर्पिवोदकं वा सिञ्चति वर्त्मनी एव गच्छति ।। १ ।।

भा.– असङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यते ।
यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुषु ।
तस्मै नमो भगवते वामनाय परात्मने ।। इति च महाकौर्मे ।

चक्षुरन्तःस्थभगवन्नामानि

उप.– एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभि-संयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ।। २ ।।

एष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ।। ३ ।।

एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ।। ४ ।।

अर्चिरादिमार्गः

अथ यदु चैवास्मिंच्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भव-न्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाꣳस्तान् मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्यात् चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमय-त्येष देवपथो ब्रह्मपथ एतेन खलु प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ।। ५ ।। १५ ।।

भा.– इमं मानवमावर्तं नावर्तन्ते । मानवा यत्रावर्तन्ते स मानवा-वर्तः । तं मानवावर्तं प्रति नावर्तन्ते ।

चक्षुस्थं वामनं वेद स पुनर्नैव जायते ।<br>मुक्तो दुस्तरसंसाराद्वामनं प्राप्नुतेऽचिरात् ।। इति च ।।१५।।

यज्ञनामकवायुदेवस्य पादपूजा

उप.– एष ह वै यज्ञो योऽयं पवत एष यन्निदꣳ सर्वं पुनाति यदेष

यन्निद९ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी ।। १ ।।

तयोरन्यतरां मनसा स९स्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतरा९स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यपवदति ।। २ ।।

अन्यतरामेव वर्तनी९ संस्कुर्वन्ति हीयतेऽन्यतरा स यथैकपाद् व्रजन्रथो वै केन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञ९ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान् भवति ।।३।।

अथ यत्रोपाकृते प्रातरनुवाकेन पुरा परिधानीयाया ब्रह्मा व्यवदत्युभे एव वर्तनी स९स्कुर्वन्ति न हीयतेऽन्यतरा ।। ४ ।।

स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ।। ५ ।। १६ ।।

भा.– यज्ञाभिमानी यज्ञाख्यो वायुर्यज्ञे प्रतिष्ठितः ।
ज्ञ शुद्धभात्र इत्यस्माद्यन्नयं पावयेद्यतः ।।

अतो वायुर्यज्ञनामा तत्पादौ वाङ्मनःस्थितौ ।
दक्षिणोऽस्य मनःसंस्थो ब्रह्मर्त्विक्तस्य पूजकः ।।

होत्राद्या वाचि संस्थश्च वामपादस्य पूजकाः ।
तस्मात् प्रातरनूवाकपरिधान्योर्यदन्तरा ।।

ब्रह्मा चेदुत्सृजेद्वाचं यज्ञपाल्लोपकृद्भवेत् ।
वाङ्मनःपादयज्ञाख्यप्रतिमो वायुरीरितः ।।
ध्यायन् वायुं हरिं चैव ततो ब्रह्मा मुनिर्भवेत् ।। १६ ।।

### व्याहृतित्रयस्य महिमा

उप.– प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानाꣳ रसान् प्रावृहद्ग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ।। १ ।।

स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानाꣳ रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूꣳषि सामान्यादित्यात् ।। २ ।।

स एतां त्रयीं विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्रावृहद्भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यः ।। ३ ।।

भा.– अग्निर्नासिक्यवायुश्च सूर्यो लोकरसाह्वयः ।
अग्रे रसस्तु ऋग्वेदमानी ब्रह्मा प्रकीर्तितः ।।

नासिक्यवायोस्तु रसो यजुर्वेदात्मको हरः ।
सामवेदाभिमानी तु वायुः सूर्यरसः स्मृतः ।।
वराहसिंहकपिलास्तेषां भूरादिनामकाः ।

### ऋत्विजां कर्मभङ्गे व्याहृतिहोमः प्रायश्चित्तम्

उप.– तद्यद्धदृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयाद् ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टिꣳ सन्दधाति ।। ४ ।।

अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद् यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टिꣳ सन्दधाति ।। ५ ।।

अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टिꣳ सन्दधाति ।।६।।

तद्यथा लवणेन सुवर्णꣳ सन्दध्यात् सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ।। ७ ।।

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टिꣳ सन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ।। ८ ।।

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवंविदꣳ ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद्गच्छति ।।

मानवो ब्रह्मैवैकर्त्विक् कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वाꣳश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ।। १० ।। १७ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि चतुर्थोऽध्यायः ।।

भा.– व्याहृतीभिस्ततो जुह्वन् ब्रह्मैवंविद्विरिष्टितः ।
सर्वान् स ऋत्विजो रक्षेद् ब्रह्मैवंवित् ततो भवेत् ।। इति च ।

उदक्प्रवण ऊर्ध्वप्रवणः ऊर्ध्वलोकानुसारी । यज्ञस्य दुरिष्ट्या यतो यतः स्थानादावर्तते तत्तत्स्थानमेवंविदा ब्रह्मणा गच्छति । तद्ब्रह्मैवैकर्त्विक् । कुरून् कर्तॄन् यजमानादीनभिरक्षति । अश्वा आशुज्ञानी । वा गतिगन्धनयोरिति धातोः । गतिशब्दश्चावगतौ भवति । 'दीर्घबिन्दुविसर्गादीनां लोपो वा' इति सूत्रादाशुवैवाश्वा ।। १७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये चतुर्थोऽध्यायः ।।

## अथ पञ्चमोऽध्यायः

### इन्द्रियाभिमानिनां मुख्यप्राणाधीनत्वनिरूपणम्

उप.– यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ।। १ ।।

यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ।। २ ।।

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ।। ३ ।।

यो ह वै सम्पदं वेद सर्वꣳ हास्मै कामाः सम्पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ।। ४ ।।

यो ह वा आयतनं वेदायतनꣳ ह स्वानां भवति मनो ह वा आयतनम् ।। ५ ।।

भा.– यः श्रेष्ठं ज्येष्ठमखिलदेवानां वायुमञ्जसा ।
वेद स स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः ।।

समीपे वसतां श्रेष्ठो वसिष्ठस्यैव वेदनात् ।
एकस्थाने स्थितिस्तु स्यात् प्रतिष्ठाज्ञस्य चेच्छतः ।।
सम्पद्वेत्तुस्सम्पदः स्युर्गृहं चायतनं विदः ।

उप.– अथ ह प्राणा अहꣳ श्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति ।। ६ ।।

ते ह प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्त इद९ शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ।। ७ ।।

सा च वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा अकला अवदन्तो प्राणन्तः प्राणेन पश्यन्तः चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ।। ८ ।।

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा अन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ।। ९ ।।

श्रोत्र९ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिराः अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ।। १० ।।

मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ।।११।।

अथ ह प्राणः उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् सङ्खिदेदेवमितरान् प्राणान् समाखिदत् त९ ह अभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ।। १२ ।।

अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति ।। १३ ।।

अथ हैनꣳ श्रोत्रमुवाच यदहꣳ संपदस्मि त्वं तत्सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ।।१४।।

न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ।। १५ ।। १ ।।

भा.– ज्येष्ठः श्रेष्ठो वसिष्ठश्च सम्पदायतनं तथा ।।
वायुरेव महांस्तस्य प्रसादादग्निरेव तु ।
उपचारतो वसिष्ठः स्यात् प्रतिष्ठैवं रविस्ततः ।।
सम्पदिन्द्रस्तथैवोक्तो रुद्र आयतनं तथा ।। इति प्रभावे ।।

सर्वेन्द्रियाणां व्यापारान् प्राण एव करोत्ययम् ।
इन्द्रियस्थः पृथक्चासौ शक्तोऽपि स्वयमेव तु ।।

इन्द्रियनियामकतया मुख्यप्राणस्यावश्यकता

षण्मासात् पूर्वबालानां केवलप्राणतो भवेत् ।
व्यापार्यं मनसा सर्वमतः पश्चादसंस्मृतिः ।।

तुरीयायामवस्थायां प्राणादेव विबोधनम् ।
तथापि संस्मृतिस्तत्र प्राणवश्यतया भवेत् ।।

प्राणस्य वश्यतानाम तद्भक्त्या स्यात् तत्प्रसादतः ।
प्राणे वश्ये मनो वश्यमिन्द्रियाणि च सर्वशः ।। इति च ।

अस्माभिरद्यमानं सर्वं मुख्यप्राणस्यान्नसमर्पणमेव

उप.– स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदं आश्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ।। १ ।।

भा.– अक्षेषु प्रति प्रति स्थितत्वादनः प्रत्यक्षम् ।

रुद्रस्यैव मुख्यतया सर्वभोक्तृत्ववर्णनम्

प्राणविज्ञानयोग्यस्तु रुद्रो मुख्यतया स्मृतः ।
तस्मात् स सर्वभोक्ता स्यात् तदन्येषां स्वयोग्यतः ।। इति च ।

भोजनपूर्वोत्तरयोरापोशनं प्राणदेवस्य वस्त्रसमर्पणम्

उप.– स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ।। २ ।।

भा.– सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतः सदा ।
स्वार्थं समर्पयेद्विष्णौ यथा प्राणे सुराः पुरा ।।
इति कर्मानुपूर्व्याम् ।

प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् ।
स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ।। इति प्रभञ्जने ।

प्राणतत्वज्ञानस्य मोक्षसाधनत्वनिरूपणम्

उप.– तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ।। ३ ।।

भा.– योग्यस्य प्राणविद्यायां स्थाणोरपि हि तच्छ्रुतेः ।
पलाशाद्यं भवेदत्र परतो मुक्तिरेव च ।।
विष्णोर्ज्ञानमनुप्राप्य भवेन्नास्त्यत्र संशयः ।।
इति प्राणसंहितायाम् ।

मन्थहोमेन महत्वप्राप्तिकथनम्

उप.– अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्या९ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।। ४ ।।

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमनयेदायतनाय स्वाहेत्यग्नावाज्यास्य हुत्वा मन्थे सम्पातमवनयेत् ।। ५ ।।

भा.– ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च ।
ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ।। इति च ।

उप.– अथ प्रतिसृप्याजलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिद९ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ९ श्रैष्ठ९ राज्यमाधिपत्यं गमयत्यहमेवेद९ सर्वमसानीति ।। ६ ।।

अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठ९ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य क९सं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ।। ७ ।।

तदेष श्लोकः–

> यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेऽभिपश्यति ।
> समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने
> तस्मिन् स्वप्न निदर्शन इति ।। ८ ।।

भा.–सवितुर्जगत्प्रसवितुर्विष्णोः सकाशाद्वयं भोजनं रक्षां सर्वभोगांश्च वृणीमहे । भगस्य समग्रैश्वर्यादिसर्वगुणस्वरूपस्य विष्णोः । पुरुषं तुरं वायुं श्रेष्ठं सर्वधातॄणां उत्तमं च धीमहि ।

> नारायणीयं तं वायुं चिन्तयित्वोत्तमोत्तमम् ।
> जगत्प्रसवितुर्विष्णोः सकाशाद्भोगमाप्नुमः ।। इति च ।। १-२ ।।

## देवयानपितृयाणनिरूपणम्

उप.– श्वेतकेतुर्ह आरुणेयः पश्चालानाꣳ समितिमेयाय तꣳ ह प्रवाहणो जैबलिरुवाच कुमारानु त्वाऽशिषत् पितेत्यनु हि भगव इति ।। १ ।।

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति । वेत्थ यथा पुनरावर्तन्ता३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ।। २ ।।

वेत्थ यथाऽसौ लोको न सम्पूर्यता३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति नैव भगव इति ।।३।।

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रवीतेति स हाऽऽयस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ।।४।।

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकञ्च नाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्च न वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ।। ५ ।।

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवान् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ।। ६ ।।

स ह कृच्छ्री बभूव तꣳ ह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ।। ७ ।। ३ ।।

पञ्चाग्निविद्या

असौ वाव लोको गौतमाग्निः तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ।। २ ।। ४ ।।

पर्जन्यो वा गौतमाग्निः तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरश-निरङ्गारा ह्रादुनयो विष्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेः वर्षः सम्भवति ।। २ ।। ५ ।।

पृथिवी वाव गौतमाग्निः तस्य संवत्सर एव समित् आकाशो धूमो रात्रिरर्चिर्दिशो अङ्गारा अवान्तरदिशो विष्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेः अन्नꣳ सम्भवति ।। २ ।। ६ ।।

पुरुषो वाव गौतमाग्निः तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुतेः रेतः सम्भवति ।। २ ।। ७ ।।

योषा वाव गौतमाग्निः तस्या उपस्थ एव समित् । यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेः गर्भः सम्भवति ।। २ ।। ८ ।।

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते ।। १ ।।

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ।। २ ।। ९ ।।

नारायणादिपञ्चभगवद्रूपाण्येव पञ्चाग्नयः

भा.– नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः ।
अदनादङ्गनेतृत्वान्नितरामचलत्वतः ।।

समेधनात् समिद्विष्णुर्द्धूत्काराद्धूम उच्यते ।
अरञ्चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि ।।

विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः ।
पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान् ।।

आदित्यस्स तथाऽऽदानाद् रश्मिः स रतिरूपतः ।
तमसाऽहननीयत्वादहश्चन्द्रः परं सुखम् ।।

अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः ।
अभ्रमभ्भरणाद्विष्णुर्विद्युद्विद्योतनादपि ।।

अशनादशनिश्चैव निर्ह्रादाद् ह्रादुनिस्तथा ।
संवत्सरो वासनाच्च स आकाशः प्रकाशनात् ।।

रात्रिश्च रतिदानात् स दिशतीति दिशः स्मृतः ।
अवान्तरं दिशेद्यस्मादवान्तरदिगुच्यते ।।

वचनाद् वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते ।
दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः ।।

उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः ।
योनिर्युनक्ति यस्मात् स सर्वान्तःकृच्च नन्दनः ।।

असौ लोकः प्रकाशत्वात् प्राणस्थत्वाच्च केशवः ।
पर्जन्यो जनको यस्मात् पृथिवी प्रथितत्वतः ।।
पुरुषः पुरु यस्मात् स योषा जोष्यो यतोऽखिलैः ।।
इति सामसंहितायाम् ।

ज्ञानिनां देवयानेन ब्रह्मप्राप्तिः

उप.– तद्य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते तेऽर्चिष-मभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ् एति मासाꣳ स्तान् ।। १ ।।

मासेभ्यः संवत्सरꣳ संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयति एष देवयानः पन्था इति ।। २ ।।

काम्यकर्मिणां पितृयाणेन स्वर्गप्राप्तिः

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमात् रात्रिꣳ रात्रेः परपक्षपक्षमपरपक्षाद्यान् षड् दक्षिणैति मासाꣳ स्तान्नैते संवत्सरमभिप्राप्नुवन्ति ।। ३ ।।

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ।। ४ ।।

तस्मिन् यावत् सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथे-तमाकाशं आकाशाद्वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ।। ५ ।।

अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । ततो वै खलु दुर्निष्प्रप-तनं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ।।६।।

भा.– अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः ।
अभ्रादिमानिरूपं तु ज्ञानप्राप्यं यतो भवेत् ।। इति च ।

उप.– तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूरचरणाः अभ्याशो ह एते कपूयां योनिमापद्येरंच्छ्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ।। ७ ।।

अथैतयोः पथोर्नैकतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेषश्लोकः ।। ८ ।।

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा च ।
एते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तु तैरिति ।। ९ ।।

अथ ह य एतानेवं पञ्चाग्नीन् वेद न स ह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यश्लोको भवति य एवं वेद य एवं वेद
।। १० ।। ३-१० ।।

भा.–परमस्य जन्यमिति पर्जन्यः ।

पञ्च पञ्च स्वरूपेण सूर्यादौ संस्थितो हरिः ।
स्वर्गादौ चापि तन्नामा तद्योगान्नामिनः परे ।।
इति च ।। ३-१० ।।

वैश्वानरविद्याज्ञातारो दुर्लभाः

उप.– प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः को न आत्मा किं तद्ब्रह्मेति ।।१।।

भा.– प्रत्यब्दयज्ञकृत्सम्यङ्महाशालः प्रकीर्तितः ।
वेदवेदार्थवित् सम्यङ्महाश्रोत्रिय उच्यते ।।

उप.– ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति त९ हन्ताभ्यागच्छामेति त९ हाभ्याजग्मुः ।। २ ।।

स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रिया-स्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ।।३।।

तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति त९ हन्ताभ्यागच्छामेति त९ हाभ्याजग्मुः ।।४।।

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्ना-विद्वान् न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ।। ५ ।।

ते होचुर्येन हैवार्थेन पुरुषश्चरेत् त९हैव वदेदात्मानमेवेमं वैश्वानर९ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ।। ६ ।।

तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ।। ७ ।। ११ ।।

वैश्वानरस्य शिरो द्युनामकमिति निरूपणम्

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति

होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ।। १ ।।

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ।। २, १२ ।।

भा.– क्रीडात्मकत्वाद्याख्यं च सुतेजाश्चातितेजसा ।
स्वर्गाधारं शिरो विष्णोः .................

वैश्वानरस्य चक्षुरादित्यनामकमिति निरूपणम्

उप.– अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले दृश्यते ।। १ ।।

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो यद्यन्मां नागमिष्यतः इति ।। २, १३ ।।

भा.– ................. सर्वरूपातिदार्शनात् ।।
चक्षुस्तु विश्वरूपाख्यमादानादयुषामपि ।
आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् ।।

वैश्वानरस्य प्राणो वायुनामक इति निरूपणम्

उप.– अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वां पृथग्वलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ।। १ ।।

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ।। २, १४ ।।

भा.– वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरेर्यतः ।
प्राणस्तेन पृथग्वर्त्मा वायुर्ज्ञानायुरूपतः ।।
वायोरप्याश्रयो नित्यं ..................

वैश्वानरस्य शरीरमध्यभाग आकाशनामक इति निरूपणम्

उप.– अथ होवाच जनꣳ शार्कराक्ष्यꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुलं आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ।। १ ।।

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्दोहस्त्वेष आत्मन इति होवाच सन्दोहस्त व्यशीर्यद्यन्मां नागमिष्य इति ।।२, १५।।

भा.– .................. वहुत्वाद्बहुलः स्मृतः ।
आकाशनामा चादीप्तेर्मध्यदेहो रमापतेः ।।

वैश्वानरस्य कटिप्रदेशोऽन्नामक इति निरूपणम्

उप.– अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं रयिमान् पुष्टिमानसि ।। १ ।।

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेनमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ।। २, १६ ।।

भा.– व्याप्तत्वादाप इत्युक्तो रयी रतिकरत्वतः ।
वस्तिराकाशवायोश्च तावाधारौ प्रकीर्तितौ ।।

वैश्वानरपदयोः पृथिवीनामकत्वकथनम्

उप.– अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ।। १ ।।

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ।।२,१७।।

भा.– प्रथनात् पृथिवीनामा प्रतिष्ठा च प्रतिष्ठितेः ।
पादौ भगवतो विष्णोः पृथिव्याश्रय एव च ।।

उत्तमानां हि पादेन सर्वं रूपं हि कथ्यते ।
विष्णोः पदमिति ह्यस्मात् प्रथितिर्वैदिकी स्मृता ।।

हृत्कमले वैश्वानरः

उप.– तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ।। १ ।।

तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धेव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्मात्मा सन्दोहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ।। २ ।। १८ ।।

'प्राणायस्वाहा' इत्याहुतेः फलनिरूपणम्

तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणः तृप्यति ।। १ ।।

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यति आदित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।। १९ ।।

भा.– प्राणश्चक्षुस्तथादित्य इत्येका देवता स्मृता ।
पूर्वद्वारपतिर्विष्णोः ....................

'व्यानायस्वाहा' इत्याहुतेः फलनिरूपणम्

उप.– अथ यां द्वितीयां जुहुयात् तां जुहुयाद् व्यानाय स्वाहेति व्यानस्तृप्यति ।। १ ।।

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २, २० ।।

भा.– ................. व्यानः श्रोत्रं च चन्द्रमाः ।।

दक्षिणद्वारपस्त्वेकः ..........................

'अपानाय स्वाहा' इत्याहुतेः फलनिरूपणम्

उप.– अथ यां तृतीयां जुहुयात् तां जुहुयादपानाय स्वाहेति अपानस्तृप्यति ।। १ ।।

अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यां अग्निस्तृप्यति अग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २, २१ ।।

भा.– ................. वागपानोऽग्निरेव च ।

पश्चिमद्वारपोऽप्येकः .................

'समानाय स्वाहा' इत्याहुतेः फलनिरूपणम्

उप.– अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ।। १ ।।

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतः तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २,२२ ।।

भा.– ................. समानो मन एव च ।।

इन्द्र इत्येक एवोक्त उत्तरद्वाररक्षकः ।

'उदानाय स्वाहा' इत्याहुतेः फलनिरूपणम्

अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहेति उदानस्तृप्यति ।। १ ।।

उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यति आकाशस्तृप्यति आकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतः तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २, २३ ।।

भा.– उदानो वायुरित्येक ऊर्ध्वद्वाराधिपश्च सः ।।

स एवाकाशनामा च लक्ष्म्याविष्टो विशेषतः ।
पृथिवीनामिका श्रीस्तु द्यौर्दिशो विद्युदेव च ।।

वायुपत्नी समुद्दिष्टा तत्तद्वाराधिपाश्च ते ।
अधितिष्ठन्ति ते सर्वे नारायणमनामयम् ।।

यद्विष्णुर्ज्ञानरूपत्वात् किमानन्दस्वरूपतः ।
एतेषु तृप्तेषु हरिस्तृप्यत्येषां प्रियो ह्यसौ ।।

वैश्वनरोपासकानां नानावर्गनिरूपणम्

सूर्यप्रसादात्तु नराः पूर्वद्वारेण केशवम् ।
प्राप्नुवन्त्यथ सोमस्य प्रसादात् पितरस्तथा ।।

द्वारेण दक्षिणेनैव गन्धर्वाः पश्चिमेन तु ।
अग्निप्रसादादृषय उत्तरेणेन्द्रसंश्रयात् ।।

शिवाद्या वायुमाश्रित्य यान्त्यूर्ध्वेण हरिं सुराः ।
वैश्वानराख्यविष्णोस्तु सम्यग्ज्ञानेन सर्वशः ।।

ज्ञानपूर्वककर्मणः फलप्रदत्वनिरूपणम्

उप.– स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ।। १ ।।

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ।। २ ।।

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैव९ हास्य सर्वे पाप्मनः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ।। ३ ।।

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरो हुत९ स्यादिति तदेष श्लोकः ।। ४ ।।

यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतान्याग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत ।।
इति ।। ५ ।। ११-२४ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि पञ्चमोऽध्यायः ।।

भा.– वैश्वानरज्ञानयोग्याः साक्षादेव सुराः स्मृताः ।
तस्मात् तेषां फलं सर्वमन्येषां तु स्वयोग्यतः ।।
इति वैश्वानरविद्यायाम् ।

## वैश्वानरो विष्णुरेव

'को न आत्मा किं ब्रह्म' ''सोयमात्मा चतुष्पाद्' 'स्थूलभुग्वैश्वानरः प्रथमः पादः' 'ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ' 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इत्यादेश्च वैश्वानरो विष्णुरिति सिद्धम् । 'स वायुः स आकाशः वायुश्चाकाशश्चाधितिष्ठतः' इति वचनाद्वायो रूपमन्याधिष्ठितमाकाशाख्यं वायोः स्वरूपमिति विज्ञायते ।

आकाशनामा विघ्नेशो वायुश्चाकाशकः स्मृतः ।
आकाश इति लक्ष्मीश्च तथाऽऽकाशो हरिः स्वयम् ।।
इति शब्दनिर्णये ।

सुतेजोविश्वरूपादिभेदेनाङ्गानि मापतेः ।
अभिन्नान्यपि कथ्यन्ते लोकदृष्टिविभेदतः ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये पञ्चमोऽध्यायः ।।

# अथ षष्ठोऽध्यायः

## श्वेतकेतुवृत्तान्तः

उप.– ॐ श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ।। १ ।।

श्वेतकेतोरहङ्कारपरिहारः

स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय त१ँ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥ २ ॥

येनाश्रुत१ँ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

भा.– अधीत्यब्दद्वादशत्वाद् द्वादशाब्द इतीरितः ।
श्वेतकेतुर्भारते तु नोत्पत्तिद्वादशत्वतः ॥ इति वाक्यनिर्णये ।

भगवति विज्ञाते सर्वं विज्ञातप्रायमिति निरूपणम्

उप.– यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञात१ँ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञात१ँ स्याद्वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् ॥ ५ ॥

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञात१ँ स्याद्वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमेव१ँ सोम्य स आदेशो भवतीति ॥ ६ ॥

न वै नूनं भगवंस्तस्य एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवा१ँस्त्वेव मे तद्ब्रवीत्विति यथा सोम्येति होवाच ॥ ७ ॥ १ ॥

### मृत्पिण्डादिदृष्टान्तानां प्रयोजनकथनम्

भा.– यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ।।

यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ।।

अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् ।।

किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।
अनन्याधीनविज्ञानादन्याधीनं तथैव च ।।

मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा ।
इत्यादिसामसंहितायाम् ।

'स्वर्णं लोहमणिश्चैव पुरटं चाभिधीयते' इति शब्दनिर्णये ।

### मृत्पिण्डादिनिदर्शनानि नाद्वैतस्यानुकूलानि

विकारत्वविवक्षायामेकपिण्डमणिशब्दा व्यर्थाः स्युः । मृत्तिकेति लोहमणिरिति कृष्णायसमित्यत्रेतिशब्दा नामधेयशब्दाश्च व्यर्थाः स्युः । विकारमिथ्यात्विवक्षायां मृत्तिकैव सत्यं लोह एव सत्यं कार्ष्णायसमेव सत्यमित्येव स्यात् । न तु नामधेयादिशब्दाः । न च वाचारम्भण-मात्रमिति मात्रशब्दोऽस्ति । न चारम्भस्यारम्भणमिति युज्यते शब्दः । क्रिया ह्यारम्भणम् ।

### अनादिः संस्कृतभाषा इतरास्तु पश्चादागता इति निरूपणम्

अतो वाचा नाम्नारम्भणं विकारो विविधाकारो विक्रियमाणः ।

सत्यं नामधेयं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्यादय इत्यर्थः । सत्त्वेन कालतस्ततं ज्ञायते विद्वद्भिरिति नित्यत्वेन प्रसिद्धमेव सत्यमित्यत्र विवक्षितम् । सङ्केतेन क्रियमाणानि ह्यन्यानि नामानि । अतो विकार-रूपाणि । विकारशब्दस्य नियतपुल्लिङ्गत्वादारम्भणं विकार इति वेदाः प्रमाणमितिवद्युज्यते ।

संस्कृतभाषातः इतरभाषणां जननक्रमनिरूपणम्

न च मृत्तिकादिनामविकारः साङ्केतिकं नाम । प्राधान्यमेवात्र मृत्तिकादिनामवद्भगवतो विवक्षितम् । सृष्टिश्च प्राधान्यार्थमेवात्रोच्यते ।। १ ।।

एकमेवाद्वितीयं ब्रह्म

उप.–सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरस-देवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति ।।१।।

कुतस्तु खलु सोम्यैव९ स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।। २ ।।

भा.– एकमेवाद्वितीयं स्वगतभेदवर्जितं समानवर्जितं च ।

एकमेवाद्वितीयं तत्समाभ्यधिकवर्जनात् ।
स्वगतायां च भेदानामभावाद् ब्रह्म शाश्वतम् ।। इति प्रवृत्ते ।

भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ।
समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा ।।

भेदाभेदेऽप्येकशब्दो यतोऽवयविनि स्थितः ।
एकमेवेत्यतः प्राह नारायणमियं श्रुतिः ।।

समे द्वितीयशब्दः स्यादद्वितीयोऽसमत्वतः ।
साधिकः कुत एव स्यादित्याह परमा श्रुतिः ।।
इति सामसंहितायाम् ।

### अद्वितीयशब्दो नाद्वैतसाधकः

न च विजातीयभेदवर्जनं नाम कुत्रचित् प्रसिद्धम् । तत्प्रमाणाभावाच्च । 'एक एवाद्वितीयो भगवांस्तत्सदृशपरो नास्ति' इति च । एक एव भगवान् तत्सदृशपरौ न स्तः इति च । विजातीयाभावे येनाश्रुतं श्रुतं भवतीत्यादि विशेषणं च व्यर्थम् । यस्य कस्यचिज्ज्ञानं तज्ज्ञानमेव भवतीति । अज्ञानमपि ज्ञानमेव भवति । भेदाभावात् । न च मिथ्या सत्यमिति भेदः । तस्यैव विजातीयत्वप्राप्तेः । तद्भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वप्रसङ्गाच्च । मिथ्यासत्ययोरैक्ये इदं मिथ्या इदं सत्यमिति भेदाभावाज्जीवेशभेदादेरपि सत्यत्वप्रसङ्गः । अतः परमार्थं ब्रह्मान्यन्मिथ्येत्यपि न युज्यते । अतः सजातीयस्वगतभेदोऽधिकाख्यं विजातीयं चात्र निषिध्यते ।

### भगवतः सकाशादादिसृष्टिकथनम्

उप.– तदैक्षत वहु स्यां प्रजायेय इति तत् तेजोऽसृजत तत् तेज ऐक्षत वहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ।। ३ ।।

भा.– सर्वोत्तमत्वात् सन्नामा हरिर्नारायणः प्रभुः ।
सोऽसृजत् प्रथमं देवीं तेज आख्यां श्रियं सतीम् ।।

ततं स्थितेन रूपेण साऽजैव हि यतः सदा ।
तेज इत्युच्यते तस्माज्जनेत्री तत एव तु ।।

यदस्याः सृष्टिकृद्रूपं विद्याख्यं जायते हरेः ।
मन्वाख्यः प्राण एवास्या अन्नामा जायतेऽथ च ।।
ब्राह्मणादिचतुर्वर्णः.........................।

उप.– ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदन्नाद्यं जायते ।। ४, २ ।।

भा.– ........ ............ ...ततश्चान्नभिधो हरः ।
तेजःसंस्था च सा देवी प्राणोऽप्सु स्थित एव च ।।

ततस्तेजस एवापो जायन्तेऽन्नस्थितो हरः ।
जायतेऽतोऽद्भ्य एवान्नं पृथिवी त्वन्नरूपिणी ।। २ ।।

नामरूपात्मकप्रपञ्चस्य सृष्टिकथनम्

उप.– तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ।। १ ।।

सेयं देवतैक्षत हन्ताहमिममास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ।। २ ।।

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ।। ३ ।। ३ ।।

भा.– सृष्टेष्वेतेषु भगवानीक्षाञ्चक्रे स केशवः ।
जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः ।।

तेन रूपेण लक्ष्म्यादीन् प्रविष्टो रूपनामनी ।
करिष्ये त्रिवृतश्चैतानेकैकं करवाणि च ।।

इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि ।
नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः ।।
कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन् विदधे पुनः ।। ३ ।।

सृष्टेः लक्ष्मीप्राणद्वारा भगवदधीनत्वनिरूपणम्

उप.– यदग्ने रोहित९ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापगादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। १ ।।

यदादित्यस्य रोहित९ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापगादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। २ ।।

यच्चन्द्रमसो रोहित९ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापगाच्चन्द्रात् चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। ३ ।।

यद्विद्युतो रोहित९ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद् विद्युतो विद्युत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। ४ ।।

एतद्ध स्म वै तद्विद्वा१ँस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः ॥ ५ ॥

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विद्वाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपा१ँ रूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥ ६ ॥

यद्वविज्ञातमिवाभूदित्येतासामेव देवाना१ँ समास इति तद्विदाञ्चक्रुर्यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७, ४ ॥

भा.– अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवम् ।
यच्छुक्लं वायुजं विद्यात् कृष्णं चैव शिवोद्भवम् ॥

तस्मादग्नेर्यदत्तृत्वमग्निनामप्रवर्तकम् ।
लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निना ततः ॥

मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम् ।
अत आदित्यनामैषां नैवादित्यस्य मुख्यतः ॥

यच्चन्द्राह्लादकत्वं च तत्तेषां चन्द्रता तथा ।
विद्युद्विद्योतनं चैषां ततस्ते सर्वनामिनः ॥

तथैव सर्वरूपं च तद्रूपप्रतिबिम्बितम् ।
सर्वरूपाश्च ते तस्माल्लोहितादिक्रमेण तु ॥

अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः ।
साङ्केत्येन विकारः स्यात् त्रयाणामेव नित्यता ॥

यथा लक्ष्म्यादिकानां च नाम सङ्केततोऽन्यगम् ।
वाचारम्भणहेतोस्तद्विकारो नैव मुख्यतः ।।

मुख्यं नाम त्रिरूपाणीत्याद्यं वेदोदितं परम् ।
अतस्तदेव सत्योक्तं मुख्यं सत्यमितीर्यते ।।

इन्द्रादिनामरूपाणि यथैव त्रिषु मुख्यतः ।
तदधीनत्वतस्तेषामेषामुच्चबलत्वतः ।।

शिवनामानि रूपाणि तथा वायोस्तु मुख्यतः ।
तदीयानि तथा लक्ष्म्यास्तदीयानि हरेस्तथा ।।

तस्मात् स एव सर्वेशः सर्वरूपः स एव च ।
सर्वनामा स एवैकः सर्वशक्तिस्तथैव च ।।
अन्येषां यच्च रूपाद्यं तत्तस्मात् प्रतिबिम्बितम् ।

सर्वस्य भगवदधीनत्वान्नाहङ्कृतिः कार्या

एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः ।।

मुख्यत्वादेव सन्नामा सत्ततिज्ञानरूपतः ।
सत्यमित्युच्यते विष्णुस्स त्वं नासि कथञ्चन ।।

अतोऽनूचानमानी त्वं स्तब्धोऽसि कुत एव तु ।
त्वत्तोऽधिका अपीन्द्राद्यास्तदुच्चाश्च श्रियादयः ।।

सर्वोच्चो भगवान् विष्णुर्न स्तम्भोऽस्यापि हि क्वचित् ।
अतो न विद्वन्मानी स्या महानस्मीति वा मनः ।।

न ते स्यान्नैव च स्तम्भो ज्ञात्वा विष्णोः परं बलम् ।
न हि विष्णोर्बलं ज्ञात्वा स्तम्भहेतुः कथञ्चन ।।
इत्यादि सामसंहितायाम् ।। ४ ।।

लक्ष्मीप्राणरुद्राः तेजोऽप्पृथिव्यश्च अन्योन्यांशसंयुक्ता इति निरूपणम्

उप.– अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा॰ऽसं योऽणिष्ठस्तन्मनः ।। १ ।।

आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ।। २ ।।

तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ।। ३ ।।

अन्नमय॰ऽ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।।४।।५।।

मांसादिशब्दैरभिमानिदेवता एव विवक्षिताः

भा.– देवता एव मांसादिशब्दवाच्याः । तत्र प्रवेशात् । अश्यमानाश्चोपजीव्यत्वात् । न च दुःखं तासाम् । ऐश्वर्यात् । तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृत् इति प्रस्तुतत्वात् ।

उपनिषदुक्तो जीवः परमात्मैव

'जीव इति भगवतोऽनिरुद्धस्याख्या' इति च श्रुतिः । 'प्राणस्य प्राणश्चक्षुषश्चक्षुर्जीवस्य जीवः प्रधानस्य प्रधानं भगवांश्चतुर्मूर्तिः' इति च ।

प्राणाधारो हरेर्नान्यो जीवशब्दस्ततो हरौ ।
संसारिणो जीवता तु जननाद्वानतस्तथा ।। इति च ।

जीवशब्देन संसारिविवक्षायां तत्तेज ऐक्षतेत्यादिना तेषामेव चेतनत्वावगतेर्नामरूपव्याकरणे जीवान्तरानुप्रवेशो नापेक्षितः ।

प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ।
त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ।। इति ।

यावद्बलिं तेज हराम काले यथा वयं चान्नमदाम यत्र ।
यथोभयेषां त इमेह लोका वलिं हरन्तोऽन्नमदन्त्यमूढाः ।।
त्वं न स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण ।।

इति तत्त्वानां प्रार्थनानन्तरं भगवत एव तेषु प्रवेशोक्तेर्भागवते । यतश्च स एव जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठतीति भगवत्येव जीवशब्दः प्रयुज्यते । न ह्यचेतनस्य मोदमानत्वमस्ति । अतोऽन्तर्यामिरूप एव जीवशब्दः ।

भोक्तुस्तु सुखदुःखानामन्तःस्थो जीवनामकः ।
बहिःस्थितस्तु सन्नामा भगवान् पुरुषोत्तमः ।।
इति तत्त्वविवेके ।

अग्नेरग्निरिति नाम मुख्यतो नास्ति । अग्निनामानि त्रीणि रूपाणीति नामधेयं सत्यमित्यादि ।। ५-७ ।।

वाक्प्राणमनांसि लक्ष्मीप्राणरुद्रायत्तानि

उप.– दध्नः सोम्यः मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ।। १ ।।

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ।। २ ।।

अपाᳫ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ।। ३ ।।

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवति ।। ४ ।।

अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति यथा सोम्येति होवाच ।। ५, ६।।

'अन्नाभिमानिदेवतायत्तं मनः'' इत्येतदनुभववेद्यम्

षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यत इति ।। १ ।।

स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ।। २ ।।

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् तयैतर्हि वेदान्नानुभवस्याशानाथ मे विज्ञास्यसीति ।। ३ ।।

स हाशाथ हैनमुपससाद तꣳ ह यत्किञ्च पप्रच्छ सर्वꣳ ह प्रतिपेदे ।। ४ ।।

तꣳ ह होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वलयेत् तेन ततोऽपि बहु दहेत् ।।५।।

एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवस्यन्नमयꣳ

हि सोम्य मन आपोमयः प्राणस्तेजोमयो वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ।। ६ ।। ७ ।।

सुषुप्तिजाग्रदवस्थयोर्जीवः परमात्माधीन इति निरूपणम्

उद्दालको हाऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ।। १ ।।

स यथा शकुनिः सूत्रेण प्रबद्धः दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ।। २ ।।

भा.– स्वप्नान्तः सुषुप्तिः ।

स्वातन्त्र्यात् स्व इति प्रोक्तो विष्णुः सर्वेश्वरेश्वरः ।
तं प्राप्नोति मनोनामा संसारी स्वपितीत्यतः ।। इति च ।

मननान्मनोनामा संसारी ।

जागृदवस्थायां जीवः परमात्माधीन इति निरूपणम्

उप.– अशनायापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ।। ३ ।।

तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गे-नापोमूलमन्विच्छद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदाय-तनाः सत्प्रतिष्ठाः ।। ४ ।।

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ।।५।।

तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भ्यः सोम्य शुङ्गेन तेजोमूल-मन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ।। ६ ।।

### परमात्मनो जगत्कर्तृत्वमेव, न तदुपादानत्वम्

भा.– शुङ्गमित्यङ्कुरं प्रोक्तं तन्मूलं भगवान् हरिः ।
जगतो मूलमप्येष निमित्तं न विकारवान् ।।

बीजजीवो यथा मूलमङ्कुरस्याविकारतः ।
यथा पिता पुत्रतन्वस्तद्देहो हि विकारवान् ।।
एवं हरिर्मूलमपि न विकारः कथञ्चन । इति च ।

प्राथम्याच्च तेजआद्या लक्ष्म्यादय इति सिद्धम् ।

तेजोभिमानिनी लक्ष्मीः प्राणस्त्वबभिमानवान् ।
अन्नाभिमानी रुद्रश्च तिस्रस्ता देवताः पुरा ।।

इति च ब्रह्माण्डे ।

'यत्रैतत्पुरुषः स्वपितिनाम सता सोम्य तदा सम्पन्नो भवति' इति संसारिणो ब्रह्मप्राप्तिमुक्त्वा 'स यथा शकुनिः सूत्रेण प्रबद्धः' इति तस्योपपादनान्मनोनामा पुरुषः । प्राणनामा भगवान् । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इत्युपसंहारात् । प्रजाशब्दश्च चेतनेष्वेव प्रसिद्धः ।

'प्रजानां सुखदुःखेन राजाप्नोति शुभाशुभम्' । इत्यादेश्च ।

शरीरधातुकृत्त्वेन लक्ष्म्याद्याश्च मुमुक्षुणा ।
ध्येयस्तदीशितृत्वेन भगवान् पुरुषोत्तमः ।।

इति वचनादनुसन्धानकर्तव्यताज्ञापनार्थं तदुक्तं पुरस्तादित्युक्तम् ।

मुक्तौ मरणावस्थायां च देवतानां लयक्रमकथनम्

मुक्तावुमा तु वागाख्या रुद्रं याति मनोऽभिधम् ।
वायुं याति शिवश्चापि वायुस्तेजोऽभिधां श्रियम् ।।

वायुमादाय सा देवी याति विष्णुं परात् परम् ।
द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दनः ।।
मृतिकाले च मुक्तौ च पुरुषा वाचमाप्नुयुः ।। इति सत्तत्त्वे ।

अतत्त्वमसिवाक्यार्थः

उप.– स य एषोऽणिमैतदात्म्यमिद९ सर्वं तत्सत्यं स आत्मा(ऽ)

तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ७, ८ ।।

भा.– योऽसौ नियमनाद्विष्णुः सारत्वात् स इति स्मृतः ।
अणिमा सूक्ष्मतो गम्य ऐतदात्म्यं च तद्वशम् ।।

परानन्दत्वतः सत्य आत्मा पूर्णगुणत्वतः ।
सत्यतो नासि तत्वं हि माभूत् ते स्तब्धता ततः ।।

असुराः स्तब्धतां याता ब्रह्माहमिति मानिनः ।
असत्यं जगदित्याहुः सिद्धोऽहं बलवानिति ।।

अनीश्वरं जगच्चाहुरप्रतिष्ठं तथैव च ।
चेतनैकत्वविषयान् वेदानाहुश्च सर्वशः ।।

कुतर्कपरमा नित्यं न सहन्ते गुणान् हरेः ।
शास्त्रतत्त्वमविज्ञाय ब्रूयुर्देवेषु चैकताम् ।।

यान्ति चैव तमो घोरं परमात्मविनिन्दकाः ।
आलम्ब्य तन्मतं न त्वमेकत्वं विद्धि विष्णुना ।।

एकत्वाभावतो नैव भवेथाश्च महामनाः ।
तन्निष्ठा हि प्रजा यस्मात् तत्प्रतिष्ठाश्च मोक्षगाः ।।
तन्मूलाश्च यतस्तासां तद्भावः कुत एव तु ।। ८ ।।

जीवब्रह्मभेदविषये पुष्परसदृष्टान्तः

उप.– यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ।। १ ।।

ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति ।। २ ।।

त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यत् भवन्ति तत्तदा भवन्ति ।।३।।

स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा(ऽ) तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ४ ।। ९ ।।

भा.– यदि स्वतोऽन्यः परमो देहेऽस्मिन्संव्यवस्थितः ।।
न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः ।
अङ्गैरदृश्यमानोपि न भेदो नास्ति पुत्रक ।।

यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः ।
अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ।।

इति पित्रोपदिष्टः सन् पुनः पप्रच्छ तं पुनः ।
चेतनानामविज्ञानं कथमित्येव चिन्तयन् ।।
तं प्रत्याह ........... ........... ।। ९ ।।

जीवब्रह्मभेदविषये नदीसमुद्रदृष्टान्तः

उप.– इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति । स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ।। १ ।।

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ।। २ ।।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ३ ।। १० ।।

भा.– ....... यथा नद्यश्चेतनाश्च समुद्रगाः ।
स्वं वारि नैव जानन्ति प्रजास्तद्वत् प्रजालये ।।
स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम् ।
इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता ।। १० ।।

''जीवोऽस्वतन्त्रः'' इत्यस्मिन् विषये वृक्षदृष्टान्तः

उप.– अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ।। १ ।।

अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ।। २ ।।

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते इति स य एषोऽणि-मैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो

ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति ।। २ ।।

त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यत् भवन्ति तत्तदा भवन्ति ।।३।।

स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा(ऽ) तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ४ ।। ९ ।।

भा.– यदि स्वतोऽन्यः परमो देहेऽस्मिन्संव्यवस्थितः ।।
न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः ।
अज्ञैरदृश्यमानोपि न भेदो नास्ति पुत्रक ।।

यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः ।
अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ।।

इति पित्रोपदिष्टः सन् पुनः पप्रच्छ तं पुनः ।
चेतनानामविज्ञानं कथमित्येव चिन्तयन् ।।
तं प्रत्याह ........... ........... ।। ९ ।।

जीवब्रह्मभेदविषये नदीसमुद्रदृष्टान्तः

उप.– इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति । स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ।। १ ।।

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ।। २ ।।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ३ ।। १० ।।

भा.– ....... यथा नद्यश्चेतनाश्च समुद्रगाः ।
स्वं वारि नैव जानन्ति प्रजास्तद्वत् प्रजालये ।।
स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम् ।
इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता ।। १० ।।

"जीवोऽस्वतन्त्रः" इत्यस्मिन् विषये वृक्षदृष्टान्तः

उप.– अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ।। १ ।।

अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ।। २ ।।

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो

इति भूय एव मा भगवान् विज्ञापयत्विति यथा सोम्येति होवाच ।। ३, ११ ।।

भा.– अभिमानिनोऽस्वतन्त्रत्वाद्भेदेन ज्ञायते तरौ ।
हरिः किमु मनुष्येषु शोषो ह्यस्यास्वतन्त्रतः ।। ११ ।।

परमात्मनोऽप्रत्यक्षत्वविषये वटवीजदृष्टान्तः

उप.– न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इव इमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ।। १ ।।

तꣳ होवाच यं वै सौम्य एतमणिमानं न निभालयसे एतस्य वै सोम्यैषोऽणिम्नः एवं महान् न्यग्रोधस्तिष्ठति श्रद्धस्व सोम्येति ।।२।।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ३, १२ ।।

भा.– ज्ञायते न कथं स्वस्मिन् सूक्ष्मे ज्ञाते परो हरिः ।
तत्रस्थ इति पृष्ट संस्तमाहोद्दालकः सुतम् ।।

वटवीजे यथा सूक्ष्मे महान्न्यग्रोधभावयुक् ।
न दृश्यतेऽभिमानी स एवं जीवगतो हरिः ।। १२ ।।

''परमात्मनः कार्यं प्रत्यक्षम्'' इति विषये लवणोदकदृष्टान्तः

उप.– लवणमेतदुदकेऽवधाय मा प्रातरुपसीदथा इति तद्ध तथा

चकार तᳬ होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ।। १ ।।

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमिति अन्त्यादाचामेति कथमिति लवणमिति अभिप्रास्यैतदथ मा उपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते । तᳬ होवाचात्र वाव किल स सोम्येतमणिमानं न निभालयसे अत्रैव किलेति ।। २ ।।

स य एषोऽणिमैतदात्म्यमिदᳬ सर्वं तत्सत्यᳬ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ३ ।। १३ ।।

भा.– कथं दृश्येत तच्छक्तिः पृथक्तस्य ह्यदर्शने ।
इति भावयुतं प्राह पुत्रमुद्दालकः पुनः ।।

यथाप्सु लवणं व्याप्तं रसदृष्टौ न दृश्यते ।
एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते ।। १३ ।।

गुरूपदेशादेव भगवत्प्राप्तिः

उप.– यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रध्मायीताऽभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ।। १ ।।

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोप-सम्पद्येतैवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत इति ।। २ ।।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ३ ।। १४ ।।

भा.– कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत् ।
यथैवान्योपदेशेन बद्धाक्षः स्वगृहं व्रजेत् ।।
तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत् पुमान् ।। १४ ।।

मनुष्यस्यास्वातन्त्र्यविषये मरणावस्थानिदर्शनम्

उप.– पुरुषꣳ सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ।। १ ।।

अथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ।। २ ।।

स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।। ३ ।। १५ ।।

भा.– यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान् ।
इत्युक्त आह ज्ञाने हि दृष्टैवास्यास्वतन्त्रता ।। १५ ।।

अभेदज्ञानस्यानर्थकारित्वे चोरदृष्टान्तः

उप.– पुरुषं सोम्योत हस्तगृहीतमानयन्ति अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत

एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ।। १ ।।

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ।। २ ।।

स यथा तत्र नादाह्येतैतदात्म्यमिद९ सर्वं तत्सत्य९ स आत्माऽतत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति तद्धास्य विजज्ञाविति ।। ३ ।। १६ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि षष्ठोऽध्यायः ।।

भा.– अभेदज्ञानिनां दोषः कीदृशः स्यादितीर्यते ।
प्राह यस्मात् परस्वानां हर्ता राज्ञा निहन्यते ।।

किमु राज्ञोऽपहर्तैवं ब्रह्मस्तेनो निहन्यते ।
सर्वेषां शास्तृ यद्ब्रह्म तत्स्वरूपतया स्मरन् ।।

ब्रह्मस्तेनो निहन्येत तमस्यन्धे सदैव हि ।
दोषा ह्यज्ञानपूर्वास्तु बध्वा पुरुषमीशितुः ।।

विष्णोर्हर्तेति बाधन्ते चाभिमानकृतास्पदम् ।
ततो विचारयन्त्येनं देवता हरिणा सह ।।

नाहं विष्णुर्न स्वतन्त्रो न च पूर्णगुणोऽस्म्यहम् ।
मम स्वामी हरिर्नित्यं स्वतन्त्रः पूर्णसद्गुणः ।।

एवं दार्ढ्यं शपथवद्यदा कुर्यादयं तदा ।
जानन्नेवं न तापी स्यादन्तरानन्दभोगतः ।।

तदा तेभ्यो मोचयित्वा हत्वा मिथ्याभिशंसिनः ।
स्वकीयं कुरुते विष्णुरन्यथा तैस्सह प्रभुः ।।

तमस्यन्धे पातयति महाकारागृहोपमे ।
महान्धे वा पातयति हस्तच्छेदादिसंमिते ।।

ततोऽधरे वा तद्योग्यं दृढाभेदं वधोपमे ।
तस्मादाचार्यतो ज्ञात्वा विष्णोर्भेदेन पूर्णताम् ।।
उपासीत ततो मुक्तिं याति नास्त्यत्र संशयः ।।

इत्यादि सामसंहितायाम् ।

"स्वमपीतोभवति" इति श्रुतेरभेदपरत्वनिरासः

'स्वयम्भूरिति विष्णुजत्वाद्विरिञ्च उच्यते' । न हि विरिञ्चादेव विरिञ्चो जातः । 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादि श्रुतेः । आत्मा भगवान् । ततो भूतत्वादात्मभूः । 'दत्तं दुर्वाससं सोममात्मेश-ब्रह्मसम्भवान्' इति वचनात् । अ इति विष्णुस्तज्जातत्वादजः 'अ इति ब्रह्म' इत्यादि श्रुतेः । 'वासुदेवात् परो नैव ब्रह्मशब्दोदितो भवेत्' इत्यादेश्च । अतः स्वशब्दो विष्णावेव प्रसिद्धः । ततः स्वमपीतो भवतीति युज्यते । अप्ययो नामाविज्ञेयत्वेन प्रवेशः ।

अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते ।
यथा नद्यः समुद्रे तु यथा विष्णुं लये प्रजाः ।। इति शब्दनिर्णये ।

न च जीवस्य तद्भावोऽस्ति । उत्थितस्य सुप्तिसंसारयोः परामर्श-दर्शनात् । 'अहं विश्वं भुवनमभ्यभवाम्' 'आजन्ममरणं स्मृत्वा मुक्ता

हर्षमवाप्नुयुः' इति तद्भावस्यापरामर्शाच्च । 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इत्यादिश्रुतेश्च । 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति च भगवद्वचनम् ।

नवदृष्टान्ता अपि भेदपरा एव

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' । 'सति सम्पद्य न विदुः सति सम्पत्स्यामहे इति' । 'सत आगम्य न विदुः सत आगच्छामहे इति' । 'स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' । 'अण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति' । 'लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्भावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति । मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमिति' । 'अत्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति' । 'एतां दिशं गन्धारा एतां दिशं व्रजेति' । 'तेजः परस्यां देवतायां तावन्न जानाति' । 'अपहार्षीत् स्तेनमकार्षीत्' । इत्यादि नवकृत्वो भिन्नस्य वस्तुनो भेदापरिज्ञानादनर्थं सूक्ष्मत्वाद्भेदस्य दुर्ज्ञेयत्वं च सदृष्टान्तं तात्पर्येणाह ।

नैकोऽपि दृष्टान्तोऽभेदपरः

न चाभेदे कश्चिद् दृष्टान्त उक्तः । न हि शकुनिसूत्रयोर्नानावृक्षरसानां नदीसमुद्रयोः वृक्षपरमात्मनोः धानापरमात्मनोः लवणोदकयोः पुरुषगन्धारयोर्नियतज्ञानानियतज्ञानयोः चोरापह्रियमाणयोश्चाभेदोऽस्ति ।

विष्णुसर्वोत्तमत्वं सकलशास्त्राणां मुख्यतात्पर्यम्

महातात्पर्यविरोधश्चाभेदे । विष्णोः परमोत्कर्षे हि सर्वप्रमाणानां महातात्पर्यं भगवताऽभिहितम् ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।

यस्माद् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ।।

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।। इति ।

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।।

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।।

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ।।

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ।।

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।।

'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्' ।।

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ।।

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ।।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ।।

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ।।

ये मां ज्ञात्वा गुणैः पूर्णं न चलन्ति ततः क्वचित् ।
तैरेवाप्यो न चैवान्यैरहं सर्वेश्वरेश्वरः ।।

ये तु मद्गुणसम्पूर्तौ ज्ञानस्नेहस्थिरात्मकाः ।
तेषां हस्तगतो मोक्षो मामेव स्मरतां सदा ।।
'ये मन्यन्ते गुणापूर्तिं तमस्तेषां परायणम्'

न च तेभ्यो प्रियो मह्यं यश्च स्याद्गुणपूर्तिवित् ।
स मामाप्नोति नियतं न च तस्मात् प्रियो मम ।।

प्रमाणान्यखिलान्येव तर्काश्चैतत्पराः सदा ।
एतद्विरुद्धं यन्मानं तर्कश्चाभास एव तु ।। इत्यादौ ।।

'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः' ।

भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।
तस्माद् भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ।।

असुन्वन्तं समं जहि दूणाशं यो न मे मयः ।
अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ।।

'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' । 'एतावानस्य महिमा अतो ज्यायांश्च पूरुषः' । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' ।

सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च कथ्यन्ते यस्योत्कर्षप्रसिद्धये ।।

यस्योत्कर्षप्रसिद्ध्यर्थं सर्वे वेदाश्च युक्तयः ।
ज्ञात्वैव च यदुत्कर्षं मुच्यन्ते स हरिः परः ।।

'अद्यातमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा' इत्यादिश्रुतिश्च विष्णोरुत्कर्षे महातात्पर्यं कथयति ।

महातत्परता विष्णोरुत्कर्षेऽवान्तरा ततः ।
अन्यत्र सर्ववाक्यानां युक्तीनां च विशेषतः ।। इति ब्रह्माण्डे ।

'ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' 'ओं ब्रह्मदृष्टिरुत्कर्षात्' इत्यादि च निर्णयात्मकं भगवद्वचनम् ।

जीवब्रह्मैक्यस्य न शास्त्रतात्पर्यविषयता

न च शारीरपराभेदे तात्पर्यमित्यत्र किञ्चिन्मानम् । अतत्त्वमसीति भेदस्य नवकृत्वोऽभ्यासाच्च । 'ओं भेदव्यपदेशात्' 'ओं भेदव्यपदेशाच्चान्यः' 'ओम् अनुपपत्तेस्तु न शरीरः' 'ओं शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'ओं पृथगुपदेशात्' इत्यादिना सर्वत्र भेदस्यैव भगवता निर्णीतत्वाच्च । 'पुरुष एवेदं सर्वमिति च पुरुषेणेदं सर्वं व्याप्तं यद्भूतं यच्च भव्यम्' । न च भगवान् गोत्वेन मनुष्यत्वेन वा भवति । आ तृणादा करीषात् सर्वं भगवानिति मिथ्यादृष्टिरेषा । दधिसक्तवो घृतौदनमित्यादौ व्याप्तशब्दाभावेऽपि व्याप्तशब्दोऽवगम्यते । 'दधिसिक्ताः सक्तवो घृतसिक्तमोदनम्' इति च श्रुतिः । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' इति । 'पुरुषेण हीदं नेनीयते' इति च । अतः सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्याच्छारीराभेदं वदतां महातात्पर्यविरोधः ।

जीवब्रह्मैक्यं सकलशास्त्रमुख्यतात्पर्यविरुद्धम्

अज्ञानदुःखासम्बन्धाद्यावज्ज्ञानं शरीरिणः ।
सर्वदा ज्ञानकं विष्णुमहमस्मीति ये विदुः ।।

अज्ञानदुःखमन्तारस्ततस्ते नीचतां विदुः ।
विष्णोरुत्कर्षहातॄणां नैव तेषां सुखं क्वचित् ।।

योऽन्यथा सन्तमीशेशं स्वरूपं प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणेशापहारिणा ।।

ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः ।।

कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।।

ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ।।
तेषां तमःशरीराणां तम एव परायणम् ।।

यतः स्वरूपश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।। इति ।

वहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।।

वैशम्पायन उवाच–

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।

बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।।
इति च मोक्षधर्मवचनाच्च ।

अभेदपरत्वेन प्रतीयमानानि वाक्यान्यपि वस्तुतः भेदपराणि

हंनाम हन्यमानत्वाज्जीवस्य समुदाहृतम् ।
जीवादन्यो यतो विष्णुरहंनामा ततः स्मृतः ।।

स्मीति जीवः समुद्दिष्टः स्मीत्यल्पं सुमितत्वतः ।
पूर्णत्वादस्मिनामाऽसौ पूर्णपूर्णत्वहेतुतः ।।

ब्रह्मास्मीत्युच्यते विष्णुर्बृहत्पूर्णो यतः सदा ।
असौ सूर्यगतो विष्णुर्दूरस्थत्वात् प्रकीर्तितः ।।
अहंनामा जीवगतो नित्याहेयत्वहेतुतः ।। इति ब्रह्माण्डे ।

मोक्षेऽपि विद्यमानजीवब्रह्मभेदो नातात्त्विकः

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' 'स उत्तमपुरुषः' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' ।

यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।।

'एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमा९ल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते' । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत्सृजते' । 'ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति

देवाः' । 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' ।

नानात्वेनाभिसम्बद्धास्तदा तत्कालभाविना ।
प्रकृतौ करणातीताः स्वात्मन्येव व्यवस्थिताः ।।

संयोगः प्रकृतेर्नैषां मुक्तानां तत्त्वदर्शनात् ।
पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते ।।
प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते ।।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।

'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' इत्यादिश्रुतिस्मृतिषु सतात्पर्यं मुक्तानां विष्णोर्भेदस्यैवोक्तेः ।

### अस्मिन्नेव प्रकरणे जीवब्रह्मभेदप्रतिपादकवाक्यानि विपुलानि सन्तीति प्रदर्शनम्

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सति सम्पद्य न विदुः' इत्यादौ भेद एव ह्यत्र सतात्पर्यं प्रतिपादितः । ता नद्यः समुद्रादागत्य समुद्रं प्रविशन्ति । स समुद्र एव भवति । न नदीभावं प्राप्नोति । स एव च समुद्रो भवति । समुद्र एव समुद्रो भवति न नद्य इति भेदस्यैवावधारणं क्रियते ।

### नानुकूलश्चेरदृष्टान्तोऽभेदस्य

न च स्वकीयस्य ब्रह्मभावस्याज्ञोऽपहर्ता भवति । किं त्वविद्यमान-ब्रह्मभावाभिमन्तैवपहर्ता । न हि स्वकीयवित्तपरित्याग्यपहर्ता भवति । किन्तु परस्वहर्तैव । तस्मादविद्यमानब्रह्मभावाभिमन्तैवापहार्षीत् स्तेय-

मकार्षीदिति दृष्टान्तपूर्वकमुच्यते । अदुःखित्वपूर्णज्ञानानन्द-स्वातन्त्र्यादिब्रह्मस्वभावाननुभवं स्वात्मनो ज्ञात्वैव तद्भावाभिमतेः स्तैन्यम् । परकीयाभिमतेरपहारः ।

परस्वभावाभिमतेरपहर्ता स्ववञ्चनात् ।
स्तेनश्चाभेदवेत्ता तु ब्रह्मणो हन्यते सदा ।। इति तत्त्वविवेके ।

न च दार्ढ्यमात्रे दृष्टान्तोऽयम् । स यदि तस्य कर्ता भवति स यदि तस्य कर्ता न भवतीति हतिमुक्त्योरपहारानपहारैकहेतुकत्वश्रुतेः । अन्यथा यदि दृढो भवति यद्यदृढो भवतीत्युच्येत । न च सत्या-सत्यमात्रम् । तदा सत्यानृतवाग्दृष्टान्तेन पूर्वेरपहारदृष्टान्तो न स्यात् । तस्मादभेदज्ञानेन महान्तं विनाशं प्रदर्श्य भेदज्ञानान्मुक्तिपरमेवैतद्वाक्यम् ।

भेदाभेदोऽपि शास्त्रमहातात्पर्यविरोधी

भिन्नस्यैवोत्कर्षो भवतीति । अभिन्नस्य कुत उत्कर्षः स्यात् । अज्ञानदुःखयुक्तत्वाच्च । न हि तत्पक्षे परमार्थदुःखिनो भ्रान्त्या दुःखिनश्च तत्काले कश्चिद्विशेषः । अस्वातन्त्र्यं च भ्रान्तस्य निश्चित-मेव । न हि भ्रमः स्वेच्छया युज्यते ।

स्वात्मानं परमं विष्णुं विदित्वाऽपि स राघवः ।
दैत्यानां मोहनार्थाय दर्शयामास मूढताम् ।। इति पाद्मे ।

'ओं जगद्व्यापारवर्जम्' 'ओं प्रकरणात्' इत्यादिनैश्वर्यमर्यादया मुक्तानां ब्रह्मणश्च भेदस्यैव निर्णीतत्वाच्च भगवता ।

ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव च ।
योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा ।।
इति च ब्रह्मवैवर्ते ।

चोरदृष्टान्ततो यस्य ह्यभेदज्ञानतस्तमः ।
भेदेनोत्कर्षवेत्तुस्तु मुक्तिरेव ह्यचोरवत् ।। इति च ।

सारत्वात् स इति प्रोक्तो ज्ञानत्वाद्य इतीरितः ।
सर्वस्येष्ट इति ह्येष मानानामणकोऽणिमा ।।

तत्तन्त्रत्वादैतदात्म्यं स सत्यः साधुरूपतः ।
तत्ततेः पूर्णतश्चात्मा सादनात् स इतीरितः ।।

अतत्त्वमसि पुत्रेति य उक्तो गौतमेन तु ।
नवकृत्वः सदृष्टान्तं सर्वभेदेन केशवः ।।
तस्मै नमो भगवते चिदचित्परमाय ते ।
पुरुषोत्तमाय देवाय पूर्णानन्दैकरूपिणे ।। इति सामसंहितायाम् ।

अतः सर्वचिदचिद्विलक्षणः सर्वोत्तमः सर्वगुणपरिपूर्णो भगवान् पुरुषोत्तम इति सिद्धम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये षष्ठोऽध्यायः ।।

## अथ सप्तमोऽध्यायः

### सनत्कुमारसविधे नारदागमनम्

उप.– अधीहि भगव इति होपससाद सनत्कुमारं नारदस्त९ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ।।१।।

भा.– यद्वेत्थ तेन तदुक्त्वा मामुपसीद ।

नारदाधीतशास्त्रवर्णनम्

उप.– ऋग्वेदं यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामे-तद्भगवोऽध्येमि ।। २ ।।

भा.– पितृलक्षणं तु पित्र्यं स्याद्राशिः स्यात् पूगलक्षणम् ।
देवतालक्षणं दैवं निधिश्च निधिलक्षणम् ।।

वाकोवाक्यं मूलवेदो वेदसारोपसंहृतिः ।
एकायनमितिप्रोक्तं देवविद्या त्वमानुषी ।।

देवज्ञेयैव या विद्या ब्रह्मविद्या तथाऽऽरणम् ।
भूतविद्या भूतचिह्नं क्षत्रविद्या तु नीतिका ।।

नाक्षत्री ज्यौतिषाख्या च सर्पलक्षणमेव च ।
सर्पविद्येति सम्प्रोक्ता या देवपरिचारगा ।।
सा देवजनविद्या स्यादेता वेद स नारदः ।।

इति सामसंहितायाम् ।

उप.– सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तन्मा भगवाञ्छोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किञ्चै-तदध्यगीष्ठा नामैवैतत् ।। ३ ।।

नामाभिमानिन्यामुषोदेव्यां भगवदुपासनम्

नाम वा ऋग्वेदः यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमः वेदानां वेदः पित्र्यो राशिः दैवो निधिः वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्वेति ।। ४ ।।

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाग्वा भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। ५, १ ।।

भा.– विद्यानां निर्णयाज्ञानादविद्वानुच्यते पुमान् ।
सर्वविद्याविदप्यद्धा तस्मान्निर्णयवित्तये ।।
कुमारमैच्छद्देवर्षिर्नारदो ब्रह्मवित्तमम् ।। इति च ।

विष्णोर्नाम यतो विद्याः सर्वनामेत्यतः स्मृताः ।
नामाभिमानिनी चोषा तस्या ब्रह्म परं स्मरेत् ।।

यदेषा न त्वमेया स्यान्मीयते ह्युषसि ध्रुवम् ।
रात्रिमानमजानद्भिस्ततो नामेत्युषा स्मृता ।। १ ।।

नामाभिमान्युषोदेव्याः सकाशाद् वागाभिमानिस्वाहादेव्याः उत्तमत्वकथनम्

उप.– वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेद९ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य९ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं

चाकाशं चापश्च तेजश्च देवा३ंश्च मनुष्या३ंश्च पशू३ंश्च वया३ंसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ।। १ ।।

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।। २ ।।

भा.– तस्यास्तु भूयसी स्वाहा धर्मज्ञानसुखादिभिः ।
सर्वैर्गुणैर्विमुक्तौ च तथा बन्धे च सर्वदा ।।
वाचोभिमानिनी सैव वाङ्नाम्नी चाश्नवनाद्वसोः ।। २ ।।

वागभिमानिस्वाहादेव्याः सकाशान्मनोऽभिमानि
पर्जन्यस्योत्तमत्त्वकथनम्

उप.– मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्रा३ंश्च पशू३ंश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ।। १ ।।

स यो मनो ब्रह्मेत्युपास्ते स यावन्मनसो गतं तत्रास्य यथा-

कामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २, ३ ।।

भा.– एवं तस्या विमुक्तौ च पर्जन्यः सर्वतो वरः ।
मनोभिमानी सम्प्रोक्तो वृष्ट्या निर्माणतो मनः ।। ३ ।।

मनोऽभिमानिपर्जन्यात् सङ्कल्पाभिमानिमित्रस्य श्रैष्ठ्यनिरूपणम्

उप.– सङ्कल्पो वाव मनसो भूयान् यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ।। १ ।।

तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशश्च समकल्पन्तामापश्च तेजश्च तेषां संक्लृप्त्यै वर्ष९ सङ्कल्पते वर्षस्य संक्लृप्त्या अन्न९ सङ्कल्पतेऽन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणाना९ संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणां संक्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणां संक्लृप्त्यै लोकाः सङ्कल्पन्ते लोकानां संक्लृप्त्यै सर्वं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ।। २ ।।

स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति । यावत् सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति सङ्कल्पात् भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। ३ ।। ४ ।।

भा.– तथा तस्माद्वरो मित्रो मुक्तौ सङ्कल्पदेवता ।
अह्नि सङ्कल्पयेद्यस्मात् स्वप्स्यन्ति निशि यत्ततः ।।

सङ्कल्पाभिमानिमित्रात् चित्ताभिमान्यग्नेरुत्तमत्वनिरूपणम्

उप.– चित्तं वाव सङ्कल्पाद् भूयो यदा चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ।। १ ।।

तानि ह वा एतानि चित्तैकायनानि चित्तात्मकानि चित्ते प्रतिष्ठितानि तस्माद् यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैन-माहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पवित् चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तᳪ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ।। २ ।।

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत् चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपा-स्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। ३ ।। ५ ।।

भा.– तथा मित्राद्वरस्त्वग्निर्मुक्तौ चित्तस्य देवता ।
चितत्वाच्चित्तनामा च ..................

चित्ताभिमान्यग्नेर्ध्यानाभिमानिवरुणस्याधिक्यकथनम्

उप.– ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीव द्यौर्ध्या-यतीवान्तरिक्षं ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देव-मनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाᳪशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाᳪशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ।।१।।

स यो ध्यानं ब्रह्मेत्युपास्ते यावत् ध्यानस्य गतं तत्रास्य यथाकाम-चारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद् भूय इति ध्यानात् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।।६।।

भा.– .................तस्माद्वरुण एव च ।।

ध्यानस्य देवता चासौ तन्नामा च निधानतः ।
सत्यानृतविवेकार्थं .................

ध्यानाभिमानिवरुणात् विज्ञानाभिमानिचन्द्रस्य श्रेष्ठत्ववर्णनम्

उप.– विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य९ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवा९श्च मनुष्या९श्च पशू९श्च वया९सि च तृणवनस्पतीन् श्वापदान्याकीटपतङ्ग-पिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ।। १ ।।

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञान-वतोऽभिसिद्ध्यति यावद् विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद् भूय इति विज्ञानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २,७।।

भा.– ..................तथा तस्मान्निशाकरः ।।

विज्ञानदेवता चासौ तन्नामा च विवेचनात् ।

सत्यस्य ................. ..............

विज्ञानाभिमानिचन्द्रात् बलाभिमानिप्रवहस्योत्तमत्वम्

उप.– बलं वाव विज्ञानाद्भूयोऽपीह शतं विज्ञानवतामेको बलवाना-कम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेनापो बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन वै लोकस्तिष्ठति बलमुपा-स्स्वेति ।। १ ।।

स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद् भूय इति बलाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २, ८ ।।

भा.– ......... तस्माच्च तथा वायुर्भूतात्मको वरः ।।

बलात्मकस्तथा ............................

बलाभिमानिप्रवहाद् अन्नाभिमान्यनिरुद्ध उत्तमः

उप.– अन्नं वाव बलाद् भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यदु ह जीवेऽथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्न-स्याशी द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ।। १ ।।

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति यावत् अन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपा-स्तेऽस्ति भगवोऽन्नात् भूय इति अन्नात् वाव भूयोस्तीति तन्मे भगवान् ब्रवीत्विति ।। २, ९ ।।

भा.– ................. तस्मादन्नदेवोऽनिरुद्धकः ।
अन्ननामाऽनुनादित्वात् .................

अन्नाभिमान्यनिरुद्धात् अवभिमान्याहङ्कारिकः प्राण उत्तमः

उप.– आपो वावान्नाद् भूयस्यस्तस्माद्यदा सुवृष्टिर्न भवति व्याधी-यन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वया९ंसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ता अप उपास्स्वेति ।। १ ।।

स योऽपो ब्रह्मेत्युपास्ते आप्नोति सर्वान् कामान् तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपा-स्तेऽस्ति भगवो अद्भ्य भूय इति अद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।। १० ।।

भा.– ................. तैजसाहंभवस्ततः ।।

तथा वरिष्ठः प्राणाख्यो वायुः सोऽपां च देवता ।
अम्नामा देहसंव्याप्तेः .........................

अबभिमान्याहङ्कारिकप्राणाद् तेजोऽभिमानी पुरन्दर उत्तमः

उप.– तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तेज उपास्स्वेति ।। १ ।।

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत् तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवो तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २, ११ ।।

भा.– ................. तथा तस्मात् पुरन्दरः ।।

तेजोभिमानी तन्नामा तेजो ह्योज इतीर्यते ।

तेजोऽभिमानिपुरन्दरादाकाशाभिमान्युमाया उत्तमत्वनिरूपणम्

उप.– आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेन आह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशेन रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ।। १ ।।

स य आकाशं ब्रह्मेत्युपास्ते आकाशवतो हवै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगवो आकाशाद्भूय इति आकाशाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २ ।। १२ ।।

भा.– तथा तस्मादुमा चैव सा चाकाशाभिमानिनी ।।
आकाशनाम्नी दीप्तत्वात् .................

आकाशाभिमान्युमायाः सकाशात् स्मरणाभिमानी रुद्र उत्तमः

उप.– स्मरो वा आकाशाद्भूयाꣳस्तस्माद्यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशूꣳ स्मरमुपास्स्वेति ।। १ ।।

स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवो स्मराद् भूय इति स्मराद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।। २, १३।।

भा.– ................. तस्याश्चैव सदा शिवः ।
स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः ।।

स्मरणाभिमानिरुद्रादाशाभिमानिभारत्याः श्रैष्ठ्यकथनम्

उप.– आशा वाव स्मराद् भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ।। १ ।।

स य आशां ब्रह्मेत्युपास्ते आशायास्य सर्वे कामाः समृध्यन्त्यमोघा हास्याऽऽशिषो भवन्ति यावद् आशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगवो आशाया भूय इति आशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ।।२, ४।।

भा.– मुख्यवायुप्रिया तस्मात् परमैव सरस्वती ।
बन्धमुक्त्योः सर्वगुणैः सर्वदाऽऽशास्वरूपिणी ।।
शमित्यानन्द उद्दिष्ट आशापूर्णसुखत्वतः ।

आशाभिमानिभारत्याः सकाशात् स्वरूपानन्दाभिमानी प्राण उत्तमः

उप.– प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ।। १ ।।

भा.– तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः ।।

प्राणनामा णइत्येव ह्यानन्दः समुदीरितः ।
आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः ।।
प्राण इत्युच्यते वायुः .... ..... ........।

देवतातारतम्यपरिमाणनिरूपणम्

.... .......... ...... सर्वे त्वेते दशोत्तराः ।
पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ।।

द्विगुणा एवानिरुद्धोऽनिलात् पञ्चगुणाधिकः ।
पादोनो वरुणादग्निरध्यर्धोनस्स सोमतः ।।

शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ ।
सङ्ख्यान्यथात्वं यत्र स्यात् तत्रावेशविशेषतः ।।

अवराणां गुणस्यापि परमीयत्वतस्तथा ।
प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः ।।

नित्यमुक्तो नित्यशक्तिर्नित्योद्रिक्तगुणः प्रभुः ।।
इति तत्त्वविवेके ।

'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यादेश्च ।

मोक्षेऽपि देवतातारतम्यस्य प्रामाणिकत्वनिरूपणम्

'अथातः सम्भूतिः परमाद्धिया वियायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवश्शिवाद् बुद्धिः बुद्धेरिन्द्र इन्द्रात् तैजसः प्राणस्तैजसा-दनिरुद्धो अनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमस्सोमाद्वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते तेषां परः परो ज्यायान् गुणैरुत्तरः उत्तरः प्रत्यवरः परस्मात् परस्मादुत्तर उत्तरो मुच्यते स्वं स्वं भावमापद्यते । नैषां पारावर्य-मुच्छिद्यते कदाचन । नैषां पारावर्यमुच्छिद्यते कुतश्चन । पारावर्येणैव ब्रह्मोपयन्ति पारावर्येण मुक्ताः सञ्चरन्ति ।' इत्यादि श्रुतेश्च ।

नामादिब्रह्मोपासना नाम नाभेदोपासना

नामादिमारुतान्तेषु देवेष्वेभ्यश्च भेदतः ।
उपासितो हरिर्मुक्तिं दद्यान्नास्त्यत्र संशयः ।। इति सत्तत्त्वे ।।

उषादिमारुतान्तेषु समः समगुणोऽपि सन् ।
ध्यातः प्रीतिं हरिर्यायादधिकामुत्तरोत्तरे ।।

उत्तमेषूत्तमा प्रीतिस्तस्य तत्र स्मृतस्ततः ।
ध्यातुरप्युत्तमां प्रीतिं यायान्नास्त्यत्र संशयः ।।

तारतम्यपरिज्ञानात् तेषु ध्यातो विमुक्तिदः ।
प्रीतिं न चान्यथा यायादिति शास्त्रस्य निर्णयः ।।
इति तत्त्वविवेके ।

### नामादिषु ब्रह्माभेदो न श्रुत्यभिप्रेतः

नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः ।
तृतीयापञ्चमीषष्ठीचतुर्थ्यर्थाश्च सर्वशः ।।

शब्दास्ते ब्रह्मशब्देन सम्बध्येयुर्यदा तदा ।
ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा ।।

यथा च यूप आदित्य एवमेष प्रकीर्तितः ।
सप्तसु प्रथमा यस्माद् भूयो भूयस्त्वतस्तथा ।।
षट्सुद्वितीया यस्माच्च कारणत्वात् परस्य च ।

### अन्यथोपासानाया अनर्थकरित्ववर्णनम्

न ह्यन्यदन्यदित्येव ध्यातं स्यात् पुरुषार्थदम् ।।

अनर्थश्च भवेत् तस्माद् भृत्ये राजेति बोधवत् ।
राजपूजां यथा भृत्ये कुर्याद्राजा हिनस्ति हि ।।

तद्वशत्वात् तथा भृत्य एवं नामादिकं च यः ।
उपास्ते ब्रह्मरूपेण तं ब्रह्माथेतराणि च ।।
पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा ।।

इति सामसंहितायाम् ।

### अचेतन-अयोग्य-असत्योपासना अनर्थकारिण्यः

अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित् ।
नोपासीत परोऽनर्थः स्यात् तथोपासनाकृतः ।।

दर्भचर्मादयश्चातो देवता ह्यभिमानिनः ।
न ह्यचेतनकं किञ्चित् फलदं स्यात् कथञ्चन ।।

औषधादिषु चैतस्माद्देवा एव वरप्रदाः ।
औषधादिस्थिता देवास्तेऽज्ञे दृष्टफलप्रदाः ॥

ज्ञानिन्यदृष्टदाश्च स्युर्नादैवं किञ्चिदिष्यते ।
यथाऽज्ञस्यापि राज्ञस्तु भोजनं क्लृप्तमिष्यते ॥

न त्वविज्ञाय राजानं ग्रामप्राप्तिस्ततो भवेत् ।
एवं देवा दृष्टफलं दद्युरज्ञस्य चाल्पतः ॥

किञ्चिज्ज्ञानकृतादृष्टात् तच्च नैवान्यथा भवेत् ।
अदृष्टाख्यं फलं यत्तु तज्ज्ञस्यैव न चान्यगम् ॥

तस्मादचेतनोपासां न कुर्यात् क्वापि कश्चन ।
न चासत्यां न चायोग्यां यदीच्छेदुत्तमं फलम् ॥

यदि नेच्छेत् तमो गन्तुं यदि चेच्छेद्धरेः प्रियम् ।
अथ कर्तव्यकारी च मुमुक्षुरथवा भवेत् ॥
सोऽपीच्छेत हरेः प्रीतिं नात्र कार्या विचारणा ॥

इत्युपासनालक्षणे ।

## अचेतनोपासना वृथेति निरूपणम्

'ओम् अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' 'ओं पयोम्बुवच्चेत् तत्रापि' इति भगवद्वचनम् । 'देवेषु चर्मादिनामानि संवादादेः' इति च देवमीमांसायाम् । 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्यया-भ्याम्' इति सङ्कर्षणसूत्रम् । 'ओषधयः संवदन्ते सोमेन सह राज्ञा' । 'प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा' । 'न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' । 'न देवानामतिव्रतं शतात्मा न जीवति' । 'अनेहसो व ऊतयः सु ऊतयो व ऊतयः' ।

द्यावापृथिवी जनयन्नभिव्रताय ओषधीर्वनिनानि यज्ञिया ।
अन्तरिक्षं स्वारापरूतये वशं देवासस्तन्वी३ नि मामृजुः ।।

अचेतनं चेतनेभ्यो दैवतेभ्यश्च चेतनाः ।
देवाः प्राणाच्च स प्राणो विष्णोरेव सदैव तु ।।

स्वभावं च प्रवृत्तिं च विकारं च समाप्नुयुः ।
कश्चिद्भाव ऋते तेषां नैतत्स्याच्च कदाचन ।।

अचेतनप्रवृत्तौ तन्न दृष्टान्तोऽस्ति कश्चन ।
चेतनानां प्रवृत्तेश्च दृष्टत्वादेव सर्वशः ।।

अदृष्टं दृष्टवज्ज्ञेयं यथा दृष्टप्रणेतृकम् ।
विसर्पत् तण्डुलं दृष्ट्वा कल्प्या तत्र पिपीलिका ।।

न तद्दृष्ट्वैव दृष्टानामपिपीलिकसर्पणम् ।
एवं दृष्टानुसारेण चिदधीनमचेतनम् ।
दुर्घटा शक्तिरपि हि पिशाचानां हि दृश्यते ।
देवानां किमु किम्वेव परमस्य हरेः प्रभोः ।।

इत्यादेश्च ब्रह्मतर्के ।

हृदयेत्यादिशब्दानां विवक्षितार्थकथनम्

हृदयज्ञो भगवत्तत्त्वज्ञः । हृययनाद्धृदयम् । 'उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयः' इति श्रुतिः । 'कोलं पूगफलं प्रोक्तं कलं ताम्बूलपत्रकम्' इत्यभिधानम् ।

भूतानां भौतिकानां च मन्त्राहुतिगणस्य च ।
अचेतनगणस्यास्य कल्पको मित्रनामकः ।।

प्राणा भूतानि मन्त्राद्याश्चिदचित्त्वविभेदिनः ।
अचितां कल्पको मित्रश्चितां वाय्वादयः स्मृताः ।।
इति वस्तुतत्त्वे ।

सर्वमचेतनं सङ्कल्प्यते ।

'अस्थिरस्मरणं चित्तं स्थिरसंस्मरणं स्मरः' इति शब्दनिर्णये ।

'वेदनं ज्ञानमात्रं स्याद् विद्वत्त्वं तु विशेषतः' इति च ।

मोक्षे यस्मिन् प्रवेशः स्यात् सा प्रतिष्ठा हि मुख्यतः ।
उपचारतस्त्ववस्थानमिति शब्दविदो विदुः ।। इति च ।

देवा मनुष्यतां प्राप्ता विज्ञेया देवमानुषाः ।
ध्यानं कुर्वन्त इव ते नैव स्युर्बहुभाषिणः ।।
ब्रूयुरर्थवतीं वाचं नानर्थां प्रायशो हि ते ।। इति पाद्मे ।

बलं ज्ञानबलं चैव बाह्यं चेति द्विधा मतम् ।
युक्तिज्ञता ज्ञानबलं सा ज्ञानादधिका मता ।। इति तत्त्वसारे ।

अन्नाद्यचेतनपदार्थेष्वपि तारतम्यनिरूपणम्

अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा ।
ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत् ।।

यद्बाह्यं तु बलं तस्माद् बाह्यमन्नं विशिष्यते ।
आपश्च द्विविधः प्रोक्तास्तृप्तिर्या ज्ञानतो रतेः ।।

ता ज्ञेया आन्तरा आपो बाह्यास्तु द्रवरूपकाः ।
आन्तरान्नादान्तरापो बाह्याद्बाह्यास्तथा वराः ।।

एवं तेजः प्रातिभाख्यं बाह्यं चेति द्विधा मतम् ।
प्रातिभं ज्ञानतृप्तेश्च परमाकाश एव च ।।

स्थिरा तु प्रतिभान्तस्थाः छिद्रमेव तु बाह्यगः ।
स्थिरा हि प्रतिभा श्रेष्ठा चञ्चला या स्मराभिधा ।।

एकधैव स्मृतिः श्रेष्ठाऽऽज्ञाऽपरोक्षदृगात्मकम् ।
श्रेष्ठं सुखं ततो मोक्षे प्राणाख्यं परमं सुखम् ।।

उत्तरोत्तरमेतद्धि वाय्वन्ताभिमतं सदा ।
बाह्याद्भ्यो बाह्यमन्नं च जायतेऽन्यत् तदन्यथा ।।

व्यक्तिरन्तर्गतानां तु विपरीतक्रमाद्भवेत् ।
तथापि मोक्षगं यस्मात् स्वभावो नित्य एव तु ।।

अतस्तस्मादापरोक्ष्यं कादाचित्कं हि जायते ।
दृष्ट्यधीना स्मृतिश्चेयं प्रतिभा स्मृतिसम्भवा ।।

स्थैर्यमालम्ब्य तु चलमन्यथा नैव तिष्ठति ।
प्रतिभातस्य तृप्तिः स्यादतृप्तस्य तु का रतिः ।।
तत एवं क्रमादेवं वरिष्ठः प्राणजो गुणः ।। इति च ।।

योऽसौ प्राणः स प्राणेन परब्रह्मणा याति । स एष भगवान् प्राणं प्रत्यभीष्टं ददाति । प्राणस्य प्राणमिति श्रुतेः । प्राणो वायुः परमात्मानं च ज्ञानेन दर्शयन् ददाति ।

मातापित्रादिषु प्राणोपासना

उप.– स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ।। २ ।।

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषन् दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहा असीति न भ्रातृहा असीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ।। ३ ।।

प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीत्येव ब्रूयान्नापह्नुवीत ।। ४, १५ ।।

भा.– सर्वस्मादतीतमुत्तमं वदतीत्यतिवादी ।। १५ ।।

मुख्यप्राणादपि विष्णुरुत्तमः

उप.– एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ।। १-१६ ।।

भा.– 'एष तु वा अतिवदति' इति तुशब्दोऽर्थान्तरवाची । अस्ति भगवः प्राणाद्भूय इति प्रश्नो व्यतिहार्यः ।

यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
यत्र प्रमाणं वाक्यं वा व्यतिहार्यं न संशयः ।।

'ओं व्यतिहारो विशिंषन्ति हीतरवत्' इति च भगवद्वचनम् ।

अतिवादी प्राणवादी विष्णुवादी विशेषतः ।
स सत्यो भगवान् विष्णुर्यन्निर्दोषो नियामकः ।।

भगवान् सत्यज्ञानादिगुणपरिपूर्णः

उप.– यदा वै विजानात्यथ सत्यं वदति नाविजानन्त्सत्यं वदति

विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ।। १-१७ ।।

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ।।१,१८।।

भा.– विशिष्टज्ञानरूपश्च सामान्यज्ञानरूपकः ।

उप.– यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ।। १-१९ ।।

यदा वै निस्तिष्ठत्यथ श्रद्धधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ।। १-२० ।।

भा.– नित्यश्रद्धास्वरूपश्च तथैव स्थैर्यरूपकः ।।

उप.– यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ।। १-२१ ।।

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ।। १-२२ ।।

भा.– स एव सर्वकर्ता च सुपूर्णानन्दरूपकः ।

पूर्णसुखात्मकत्वं भगवतो लक्षणम्

उप.– यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ।। १-२३ ।।

भा.– स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः ।

स्वातन्त्र्यनित्यमुक्तत्वे अपि भगवल्लक्षणे

उप.– यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ।। १ ।।

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्याय-तनानीति नाहमेव ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ।। २ ।। २४ ।।

भा.– यदधीनं विना नान्यत् किञ्चिदस्ति कुतश्चन ।।
स भूमोक्तोऽतिपूर्णत्वादन्यदल्पमुदीर्यते ।

सर्वत्रव्याप्तत्वमपि भगवल्लक्षणम्

उप.– स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहङ्कारादेश एवाह-मेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽह-मुत्तरतोऽहमेवेदꣳ सर्वमिति ।। १ ।।

अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा

पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्म-मिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवत्यथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ।। २ ।। २५ ।।

भा.– स सर्वगुणसम्पूर्णः सर्वदेशेषु सर्वदा ।।

स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः ।
पूर्णत्वात् सुखरूपोऽसौ सर्वकर्ता सुखत्वतः ।।

कर्तृत्वात् सुस्थिरश्चासौ स्थिरत्वादास्तिकस्तथा ।
आस्तिकत्वाच्च मन्ताऽसौ विज्ञाता च ततो हरिः ।।

विज्ञातृत्वाच्च निर्दोषः सर्वस्यापि नियामकः ।
भूमा नारायणाख्यः स्यात् स एवाहङ्कृतिः स्मृतः ।।

आकार्योऽहमिति ह्येष ततोऽहङ्कार उच्यते ।
जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः ।।

सोऽप्यणुत्वेऽपि संव्यापी परमैश्वर्ययोगतः ।
यथा बालतनौ विष्णौ मार्कण्डेयेन धीमता ।।

प्रविश्य नान्तोऽधिगत एवं व्याप्तो हरिः परः ।
अणुरूपोऽपि भगवान् वासुदेवः परो विभुः ।।
आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचित् ।।
इति परमसारे ।

भूमप्रसादं विना नाल्पे सुखमस्ति । मर्त्यं च पूर्वम् ।

'अल्पापि ह्यमृता देवी श्रीः पूर्णातिप्रियत्वतः' इति च ।

आत्मरतिर्भगवद्रतिः । स्वो भगवान् । सोऽस्य प्रत्यक्षतः आज्ञापयिता भवतीति स्वराट् ।

मुक्तो भगवत्कार्याणि साक्षात् पश्यति

उप.– तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्पः आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतो कर्माण्यात्मत एवेदꣳ सर्वमिति ।।१।।

तदेष श्लोकः ।।

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति ।।

स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ।

शतं च दश चैकं च सहस्राणि च विꣳशतिः ।।

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।।

स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति देवर्षये नारदाय भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ।। २ ।। २६ ।।

इति श्रीमच्छान्दोग्योपनिषदि सप्तमोऽध्यायः ।।

भा.– आत्मतः प्राण आत्मत आशेत्यादि मुक्तः सन् प्राणादीनां सृष्ट्यादिकं पश्यतीत्यर्थः । 'सर्वं हि पश्यः पश्यति' इति वाक्यशेषात् । पश्य इति द्रष्टा । 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतेः ।

भूमोपासनयोग्यस्तु साक्षाद्ब्रह्मैव मुख्यतः ।
स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात् ।।

तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत् ।
तदानन्दः स एवास्य राजा भवति नापरः ।।

पश्येच्च प्राणसृष्ट्याद्यं ये तदन्य उपासकाः ।
ते यथायोग्यमाप्स्यन्ति फलं मुक्तौ न संशयः ।। इति परमतत्त्वे ।

### अहङ्कारशब्दवाच्यो भगवाननिरुद्धः, न जीवः

न च भूमानं भगवो विजिज्ञास इति पृष्टः सन् भूम्नो लक्षणं स एवाधस्तात् स उपरिष्टादित्यादिना पूर्णत्वं भगवतोऽन्यस्याहङ्कारस्योपदिशतीति युज्यते । न चाहङ्कारस्य पूर्णत्वमस्ति । न च मुख्ये पूर्णत्वे युज्यमाने उपचरितं युज्यते । न चाहङ्कारस्य काचित् प्रस्तुतिः । अथशब्दस्तु रूपान्तरापेक्षया युज्यते । अतःशब्दस्तत्प्रसादादिति ।

### ''आत्मरतिः स्वराट्'' इत्यत्र आत्मस्वशब्दौ विष्णुवाचकौ

आत्मरतिः स्वराडित्यादि । यो ब्रह्माणं विदधाति पूर्वमिति ब्रह्मण उत्पत्तिप्रसिद्धेः स्वयम्भूरात्मभूरित्यादिष्वात्मशब्दः स्वयंशब्दश्च यथा विष्णुवाची तद्वदेवात्राप्यात्मशब्दो विष्णुवाच्येव ।

### मुक्तेभ्यः सकाशात् प्राणादिसृष्टिनिराकरणम्

न च मुक्तेभ्यः प्राणादिकमुत्पद्यते । 'ओं जगद्व्यापारवर्जम्' इति

वर्णितत्वाद् भगवता । आत्मत एव प्राणो जायत इत्यवधारणान्न भगवतोऽन्यस्मात् प्राणो जायते ।

आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः ।
तथैव स्व इति प्रोक्तस्तस्माद् ब्रह्माऽऽत्मभूः स्वभूः ।। इति स्कान्दे ।

स एवेदं सर्वं इत्येतत् नाभेदपरम्

इदं नामातिसामीप्यात् सर्वं पूर्णगुणत्वतः ।
भूमाऽहमात्मेति हरिस्त्रिविधोऽपि हि सर्वदा ।। इति विश्वनिर्णये ।

लिङ्गत्रयमपि भगवति युक्तम्

स्त्रीगुणाः पुंगुणाश्चैव नपुंसकगुणा अपि ।
यदधीना व्यत्ययः स्याद् लिङ्गानां तत्र सर्वशः ।।
कः किं कं तत्सर्वमात्माऽदितिर्देवादयस्ततः ।।
इति लिङ्गनिर्णये ।

शास्त्रश्रवणशुद्धिरेवाहारशुद्धिः

गुरोर्विद्याहृतिर्या तु स आहार इति स्मृतः ।
तच्छुद्धौ ज्ञानशुद्धिः स्याज्ज्ञानशुद्धौ स्थिरा स्मृतिः ।।
स्मृतिस्थैर्ये त्वापरोक्ष्यं हरेर्मोक्षस्ततो भवेत् ।।
इति साधननिर्णये ।। २६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये सप्तमोऽध्यायः ।।

## अथ अष्टमोऽध्यायः

### हृदयकमले भगवदुपासना

उप.– ॐ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ।। १ ।।

भा.– यदिदमस्मिन् ब्रह्मपुर इति ब्रह्मपुरशब्देन ब्रह्माख्यं पुरं पूर्णत्वात् पुरमिति परं ब्रह्म ब्रह्मणः पुरमिति शरीरं चोभयं विवक्षितम् ।

प्राप्तोऽवध्यं ब्रह्मपुरं राजेव निवसाम्यहम् ।
अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितम् ।।

यदैतज्जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युः' इत्यादि वाक्यशेषाद्भगवद्वचनाच्च ब्रह्मपुरशब्देन पुरं ब्रह्मोच्यत इत्यवसीयते । 'यत्पुण्डरीकं पुरमध्यसंस्थं यदिदं शरीरं तदेतदाद्यं देवसदनम्' इत्यादेः शरीरं च ।

### हृत्कमलस्थभगवानेव हृत्कमलस्याप्याधार इति निरूपणम्

'यद्वैतद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः । यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति' इत्यादिना परब्रह्मण्येव हृदयं स्थितम् ।

उप.– तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ।। २ ।।

यावान् वा अयमाकाशस्तावनेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्या-चन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ।। ३ ।।

हृदयस्थदहराकाशस्य परब्रह्मत्वाभावनिरूपणम्

भा.– 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् । दहरोस्मिन्नन्तर आकाशः किं तदत्र विद्यते' इत्यत्राकाशशब्देन भूताकाशो विवक्षितः । किं तदत्र विद्यत इत्यस्यायं परिहारः– अस्मिन् भूताकाशे परब्रह्माख्य आकाशो विद्यते । आसमन्तात् काशनादाकाशः । आसमन्तात् कमश्नातीति वा । 'अस्मिन् कामाः समाहिताः' इति वाक्यशेषात् । आसमन्तात् कामानश्नातीति वा । स च यावान् वहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यते गुणतः । पूर्णगुणत्वात् ।

अल्पपरिमाणस्यापि महत्परिमाणत्वं च युज्यते । अचिन्त्यशक्तित्वात् ।

'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनूपूर्व्या' इति वचनात् ।

आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः ।

'आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यते' इत्यभिधानात् ।

अन्यथाऽनिशमित्युक्तिविरोधात् । 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः' इति हृदयस्थस्यैवाणुत्वमहत्वोक्तेश्च ।

गुणाः श्रुताः सुविरुद्धाश्च देवे
सन्त्यश्रुता अपि नैवात्र शङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः
श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ।। इति च श्रुतिः ।

सुविरुद्धा अश्रुताश्च गुणाः सन्त्येव सर्वशः ।
दोषाः केऽपि न सन्त्येव श्रुता अपि तु सर्वशः ।। इति गारुडे ।।

### दहराकाशस्थमहाकाशस्य परब्रह्मत्वकथनम्

किं तदत्र विद्यत इति पृष्टत्वात् हृद्गत आकाशो हृदयशब्देनोच्यते । हृद्ययनात् । तस्मिन् हृदयाख्य आकाशे बहिराकाशो विद्यत इत्यर्थः । अन्यथा कथं भूताकाशस्य दहरस्य ब्रह्माख्य आकाशो विद्यत इत्यर्थः । अन्यथा कथं भूताकाशस्य दहरस्य बहिराकाशसमत्वम् ? दहरोऽस्मिन् अन्तराकाश इति पूर्वोक्ताकाशस्य दहरत्वमुक्तम् । उत्तरस्य तु यावान् वा अयमाकाश इत्यनन्तरपरिमाणत्वम् । अतो ब्रह्माकाश एवोत्तरः । पूर्वोक्तस्याभूताकाशत्वे 'तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यं, सहस्रशीर्षꣳ देवम्' इत्यादि कथं युज्यते? न हि भगवदन्तःस्थितमेवान्यत् किञ्चिद्विजिज्ञास्यम् । तद्वावेत्यवधारणाय । उत्तरस्यापरब्रह्मत्वे च सर्वाधारत्वं 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा' इत्यादि न युज्यते ।

### परब्रह्मस्थप्रपञ्चो न जिज्ञासार्हः

'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्यस्य

य एषोऽन्तर्हृदय आकाश इत्येव परिहारः । न तु 'उभे अस्मिन् द्यावापृथिवी' इत्यादि । तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्य-कथनमेव । न हि द्यावापृथिव्यादेरेव विजिज्ञास्यत्वम् । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इति हि श्रुतिः ।

मुक्तामुक्तसकलदेवानां भगवानेवाश्रयः

उभे अस्मिन् द्यावापृथिवीत्याद्युभयशब्दो मुक्तामुक्तराशिव्यपेक्षया । 'यच्चास्येहास्ति यच्च नास्ति' इति वाक्यशेषात् । अस्येति संसारिणः । न हि संसारिणो मुक्ता उपकारकाः । यद्यस्य नोपकारकं तत्तस्य नास्तीत्युच्यतेऽन्यस्य सत्वेऽपि । यथा वित्तादि ।

अनित्यहृदयस्थोऽपि भगवान् नित्यः

उप.– तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरावाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ।। ४ ।।

स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ।। ५ ।।

भा.– यथायोग्यमेवैनं भगवन्तं प्रजा मुक्ता अन्वाविशन्ति तच्छासनानुसारेण यं यं कामं कामयते तं तस्मादेवोपजीवन्ति ।

उप.– तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो

लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येता९ँश्च सत्यान् कामा९ँ स्तेषा९ँ सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मान-मनुविद्य व्रजन्त्येता९ँश्च सत्यान् कामा९ँ स्तेषा९ँ सर्वेषु लोकेषु कामचारो भवति ।। ६ ।। १ ।।

भा.–तदविदुषां पुण्यानि क्षयिष्णुफलान्येव भवन्ति । एतांश्च सत्यान् कामान् भगवदीयान् ।

बृहत्त्वात् पूर्णकामत्वाद् विष्णुर्ब्रह्मपुराभिधः ।
तस्मिंस्तस्य पुरं देहस्तस्मिन् हृदयमास्थितम् ।।

हृदयाकाशगो विष्णुस्तस्मिन् सर्वमिदं स्थितम् ।
स सत्यकामो भगवान् यदिष्टं तस्य तद्भवेत् ।।

तस्मिन् समाहिताः कामाः सत्याः पुंसामपि ध्रुवम् ।
तस्यैव ह्यनुसारेण सत्यत्वं नान्यथा क्वचित् ।।

मुक्ताकाङ्क्षितं सकलं सुलभ्यमिति निरूपणम्

उप.– स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ।। १ ।।

अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ।। २ ।।

अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ।। ३ ।।

अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ।। ४ ।।

अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ।। ५ ।।

अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ।। ६ ।।

अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतः तेनान्नपानलोकेन सम्पन्नो महीयते ।। ७ ।।

अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतः तेन गीतवादित्रलोकेन सम्पन्नो महीयते ।। ८ ।।

अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ।। ९ ।।

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेवास्य समुत्तिष्ठति तेन सम्पन्नो महीयते ।। १० ।। २ ।।

भा.– यथा विम्वानुसारेण प्रतिविम्वप्रकाशनम् ।

संसारे आकाङ्क्षितं सर्वं कुतो न लभ्यते इत्यत्र कारणवर्णनम्

उप.– त इमे सत्याः कामा अनृतापिधानास्तेषाᳬ सत्यानाᳬ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ।। १ ।।

भा.– तस्माद्ये मुक्तियोग्याः स्युस्तेषां कामाः पुराऽपि तु ।।
सत्याः सन्तस्तदज्ञानान्न दृश्यन्ते तथाऽखिलाः ।
अज्ञानमनृतं प्रोक्तमृगताविति धातुतः ।।

तस्माद् द्रष्टुं यदिष्टं स्यात् तद्दृष्टिनियमो न तु ।
अमुक्तस्य ........ ...... .............

मुक्तिर्नैजसुखानुभूतिरेव

उप.– अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहतमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वा प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ।। २ ।।

स वा एष आत्मा हृदि तस्यैतदेव निरुक्त९ हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति ।। ३ ।।

भा.– ........ हरेर्लोकं मुक्तो गत्वा हि पश्यति ।।
अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम् ।
नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतेः ।।

एवं हृदयनामानं विष्णुं जानन्ति नित्यशः ।
विष्णुलोकगतेः पुण्यमाप्त्वा विष्णुं व्रजेत् तथा ।।

परमात्मनः पूर्णानुग्रहादेव मुक्तिरिति कथनम्

उप.– अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ।।४।।

भा.– यस्य सम्यक् प्रसादोऽस्ति विष्णोरेव स उच्यते ।
सम्प्रसादः स उत्थाय शरीरात् प्राप्य केशवम् ।।

यथास्वरूपस्तु भवेद्यं प्राप्यासौ स्वरूपताम् ।
आप्नोति स परो ह्यात्मा भगवानिन्दिरापतिः ।।
इत्याह सा रमादेवी पश्यन्ती परमं पदम् ।

सत्यशव्दवाच्यो मुक्तामुक्तनियामको भगवान्

उप.– तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति तद्यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित् स्वर्गं लोकमेति ।। ५, ३ ।।

भा.– सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः ।।
तीत्युक्ता मर्त्यधर्माणस्तेषां नियमानाद्धरिः ।
सत्यमित्युच्यते सद्भिः ........ ..........

निर्दुःखभगवत्प्राप्तितो दुःखनाश इति कथनम्

उप.– अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳसेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ।। १ ।।

भा.– ........ ......... सेतुश्चापि विधारणात् ।।
सितमस्मिन् जगत्सर्वमिति सेतुरितीरितः ।

उप.– तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः

सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं ती-र्त्वाऽपि नक्तमहरेवाभिनिष्पद्यतेऽसकृद्विभातो ह्येवैष ब्रह्मलोकः ।।२।।

भा.– एतं सेतुं प्रतिपुमानन्यत्तीर्त्वा ह्यदोषवान् ।।

उप.– तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्म-लोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ।। ३ ।। ४ ।।

भा.– स प्राप्यो ब्रह्मचर्येण मनोवाक्कर्मभिस्तु यत् ।
चरणं ब्रह्मणि परे ब्रह्मचर्यं हि तत्स्मृतम् ।।

तेनैव ब्रह्मचर्येण भवेयुर्ब्रह्मलोकगाः ।
एतेषां ब्रह्मलोकः स्यात् परं ब्रह्मैव लोकनात् ।।
ब्रह्मलोक इति प्रोक्तं तस्य लोकोऽपि कथ्यते ।

### ब्रह्मचर्यस्वरूपकथनम्

उप.– अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ।। १ ।।

अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचार्येमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ।। २ ।।

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ।

अद्भुतं श्वेतद्वीपाख्यं विष्णुधाम

अऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेवतत् । अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीय९ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमित९ हिरण्मयम् ॥ ३ ॥

तद्य एवैतावरं च वै ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषा९ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ ५ ॥

भा.– यज्ञ इष्टं च सत्रं च मौनं चानशनं तथा ॥
परस्य ब्रह्मणो ज्ञानं सर्वमेतदुदीरितम् ।
परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे ॥

अरण्यौ चार्णवौ दिव्यौ चिदानन्दरसात्मकौ ।
यावानुच्चः स्वर्गलोकस्तावानुच्चस्तथा स च ॥

श्वेतद्वीपो दिविष्टोऽतस्तत्र मद्यं सरोवरम् ।
सर्वभोज्यात्मकं दिव्यं तत्राश्वत्थाः सुधास्रवाः ॥

तत्र विष्णोः पुरं दिव्यमपराजितनामकम् ।
विमिताख्यं च पर्यङ्कं विष्णोर्मानेन सम्मितम् ॥

चित्सुवर्णमयं दिव्यं लक्ष्मीस्तत्तत् स्वरूपिणी ।
स श्वेतद्वीपगो विष्णुः पर्यङ्कब्रह्मनामकः ॥

हृदयस्थनाडीषु भगवद्रूपोपासना

उप.– अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ।। १ ।।

भा.– स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः ।
विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु ।।

नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् ।
शुक्लं तु वासुदेवाख्यं नान्दिन्यामग्रतः स्थितम् ।।

पिङ्गलायां पिङ्गलं च रूपं सङ्कर्षणाभिधम् ।
पश्चिमे वज्रिकायां च पीतं प्रद्युम्ननामकम् ।।

इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् ।
सूर्येऽप्येवं पञ्चरूपो भगवान् संव्यवस्थितः ।।
आदित्यनामा चादित्वात् .................

उप.– तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुष्मादादित्यात् प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ताः ।। २ ।।

भा.– ................. तद्व्याप्तं सूर्यमण्डलम् ।
तद्रश्मिभिस्तथा व्याप्ताः समस्ताः सूर्यरश्मयः ।।
तस्मिन्नाडीषु च प्रोक्तास्तथा नाडीस्थरश्मयः ।

उप.– तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ।। ३ ।।

भा.– तन्नीडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यते ।।
तत्तेजसा हि सम्पन्नः सुप्त इत्यभिधीयते ।

उप.– अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ।। ४ ।।

सुषुम्नानाडीत उत्क्रमणं मुक्तेर्द्वारम्

उप.– अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मानस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ।।५।।

उक्तार्थे मन्त्रकथनम्

तदेष श्लोकः

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति उत्क्रमणे भवन्ति ।। ६ ।। ६ ।।

भा.– ओमित्येव वहन्नित्यं वायुरोंवाडितीरितः ।।
तेन वामत्वमायाति मुक्तिकाले ह्युपासकः ।
दिव्यचिद्रूपभावो हि वामभाव उदीरितः ।।

यदैनं नेतुमन्विच्छन्मनः क्षिपति मारुतः ।
आदित्याख्यं तदा विष्णुं याति जीवः स्वविद्यया ।।
इति पर्यङ्कोपासनायाम् ।। १-६ ।।

इन्द्रविरोचनौ प्रति चतुर्मुखब्रह्मकृत उपदेशः

उप.– य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा॰श्च लोकानाप्नोति स सर्वा॰श्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ।। १ ।।

तद्धोभये देवासुराः अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा॰श्च लोकानाप्नोति सर्वा॰श्च कामानितीन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ।। २ ।।

तौ ह द्वात्रि॰शतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तामिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वा॰श्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्ताववास्तमिति ।।३।।

तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येव उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ।। ४ ।। ७ ।।

भा.– इन्द्रो विरोचनश्चैव श्रुत्वा तु ब्रह्मणोऽक्षिगम् ।
विष्णुमानन्दरूपं तं सम्यग्ज्ञानविपर्ययौ ।।

आपतुस्तत्र देवेन्द्रो जानन्नपि विरोचनम् ।
मोहयन्ननुरूपाणि तस्य वाक्यान्युवाच ह ।।

यथा विरोचनो नैव जानीयाद्विष्णुमञ्जसा ।
स्ववाक्यं चानृतं न स्यात् तथा ब्रह्माऽप्युवाच ह ।।

अयोग्या ह्यसुरा ज्ञाने वक्तव्यं नैव चानृतम् ।
मच्छापादासुरो भावो प्रह्लादादेर्न तु स्वतः ।।

अयं त्वासुर एवातो वक्ष्याम्यस्योभयं यथा ।
इन्द्रस्तु शुद्धभावत्वात् पुनरायास्यति ध्रुवम् ।।

इत्यभिप्रायतः प्रोक्तो ब्रह्मणाऽक्षिगतो हरिः ।
अयोग्यत्वात्तु तच्छ्रुत्वा प्रतिरूपं विरोचनः ।।

मत्वाऽप्स्वादर्शके चैव पप्रच्छ कतमस्त्विति ।
तत्रापि तु हरेर्भावं हृदि कृत्वा चतुर्मुखः ।।
दृश्यते ह्येष एवेति तत्त्ववेदिविवक्षया ।। ७ ।।

विरोचनस्य अयथार्थज्ञानमुत्पन्नमिति निरूपणम्

उप.– उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति ।। १ ।।

तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वो-दशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वो-दशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ।।२।।

तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ।।३।।

तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महय्यन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ।। ४ ।।

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत् प्रेतस्य शरीर भिक्षया वसनेनालङ्कारेणेति सꣳ-स्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ।। ५ ।। ८ ।।

भा.– तथापि योग्यतैवात्र भूयसीति निवेदितुम् ।।
दर्शयन् प्रतिरूपस्य दोषानाह प्रजापतिः ।
अलङ्कारादिभिर्युक्तः पश्यस्वेति विवेचयन् ।।

यथा देहगुणे गौण्यं दोषे दोषास्तथैव तु ।
तथाऽप्यशुद्धभावत्वात् प्रतिरूपस्य तद्गुणान् ।।

परस्य ब्रह्मणो जानन्ययौ तुष्टमनाः स्वयम् ।
असुराणामविश्वासनिवृत्त्यर्थं पितामहः ।।

माध्यस्थ्यं ज्ञापयानश्च जानन् वैरोचनं मनः ।
प्राहाज्ञानां पराभाव इत्युच्चैश्च पुनः पुनः ।।

तथाप्यशुद्धभावत्वादजानन्नेव निर्ययौ ।
गत्वा चैव परंब्रह्म प्रतिरूपात्मकं सदा ।।

दिदेश सर्वासुराणां शरीरालङ्कृतेरपि ।
अलङ्कृतिं ब्रह्मणश्च प्रत्यक्षेणोपलम्भिताम् ।।

अतोऽसुरा न दास्यन्ति न यजन्त्यात्मनः परम् ।
स्वभोगेनैव तृप्तिः स्यादिति सर्वेऽपि मेनिरे ।।

तत्संस्कारवशेनैव स्वयं ब्रह्मेतिवेदिनः ।
अभवन्नपतंश्चैव तमोऽन्धे नित्यदुःखिताः ।।

इन्द्रकृतनिरन्तराध्ययनम्

उप.– अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति ।। १ ।।

नाहमत्र भोज्यं पश्यामीति स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोज्यं पश्यामीति ।।२।।

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै स होवाच ।। ३, ९ ।।

भा.–इन्द्रस्तु जानन्नपि तु मोहयन्नसुरं तदा ।
गत्वा निववृते पश्चादिव पश्यन् सदोषताम् ।।

पुनः पुनश्च मोहाय गत्वा गत्वा निवर्तते ।
कथञ्चिदेव विज्ञातं मयेत्यज्ञान् विमोहितुम् ।।

तत्वज्ञानप्राप्तौ योग्यताऽऽवश्यकीति कथनम्

उप.– य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यदपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ।। १ ।।

न वधेनास्य हन्यते नास्य स्रामेण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोज्यं पश्यामीति ।। २ ।।

स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद्यदपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ।। ३ ।।

न वधेनास्य हन्यते नास्य स्रामेण स्रामो घ्नन्ति त्वेवैनं

विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोज्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्या-स्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳ-शतं वर्षाण्युवास तस्मै स होवाच ।। ४ ।। १० ।।

भा.– तद्योग्यान्येव वाक्यानि ब्रह्माप्याह पुनः पुनः ।
गरीयसी योग्यतेति ज्ञापयन्पूर्ववत् पुनः ।।

सन्दिग्धान्येव वाक्यानि प्रोवाचेन्द्राय चात्मभूः ।
स्वप्नं प्रदर्शयन्यस्तु पूज्यते सर्वदैवतैः ।।

स एव विष्णुरित्याह तत्राप्याह पुरन्दरः ।
दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया ।।
घ्नन्तीवैनमदन्तीव तथा च स्यात् परो हरिः ।। १० ।।

एकशतवर्षावधिकः इन्द्रकृतगुरुकुलवासः

उप.– तद्यत्रैतत्सुप्तः समस्तः सन् प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाहं खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यमीति ।। १ ।।

स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्त-हृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच नाहं खल्वय-मेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यमीति ।। २ ।।

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद् वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत् तद्यदाहुरेकशत९ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै स होवाच ।। ३,११।।

भा.– इत्युक्त आह ब्रह्मैव सुप्तिस्थो भगवानिति ।।
यत्र सुप्तो ह्ययं जीव इत्युक्तः प्राह वासवः ।
नाहं जानामि मत्तोऽन्यं सुप्तौ नान्योऽपि दर्शयेत् ।।

अहमस्मीति भूतानि न च पश्यन्ति कानिचित् ।
यदि जीवः परात्मा वाऽप्यन्योन्यस्मिन्नपीतताम् ।।
गतौ तदाऽप्यपीतस्तु शं विनैव भवेदिति ।। ११ ।।

सति शरीराभिमाने दुःखमवर्जनीयम्

उप.– मघवन् मर्त्यं वाव इद९ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ।। १ ।।

भा.– उक्तो ब्रह्माऽब्रवीच्छक्रं ज्ञापयंस्तत्त्वमञ्जसा ।।
योऽयं शरीरसम्बन्धी जीव इत्यवधार्यताम् ।
भूतैष्यद्वर्तमानेषु यस्य नो देहसङ्गतिः ।।

सोऽशरीरः परो विष्णुरमृतो नित्यपूर्तिमान् ।
अधिष्ठाय तथाऽपीमं देहमास्ते स ईश्वरः ।।

जरामृत्युपरीतोऽयं जीवात्मा देहसङ्गतेः ।
परेणेयं सुखं प्रोक्तं प्रियमित्येव पण्डितैः ।।

परेणेयमभद्रं यदप्रियं तदुदीरितम् ।
न जीवस्य तयोर्हानिः कदाचिद्विद्यते क्वचित् ।।
अशरीरं परं ब्रह्म नैव ते स्पृशतः क्वचित् ।

प्राकृतशरीररहितभगवत्सकाशादेव मुक्तिः

उप.– अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथै-तान्यमुष्मादकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ।। २ ।।

एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स यत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोप-जन९ स्मरन्निद९ शरीर९ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ।। ३ ।।

भा.– अभ्रामा भगवान् विष्णुर्व्याप्तत्वात् परमेश्वरः ।।
तेनैव भ्रियमाणत्वाद् ब्रह्माभ्रमिति कीर्तितः ।
वायोः पत्नी विद्युदुक्ता विशेषद्युतिहेतुतः ।।

ब्रह्माणी स्तनयित्नुः स्यात् सर्वशब्दात्मिका यतः ।
एतेषां ज्ञानवैशेष्यान्नातिदेहेन सङ्गतिः ।।

अतः प्रियाप्रिये तेषामपि न ब्रह्मणः किमु ।
विष्ण्वीयं हि सुखं तेषां स्वभर्त्रीयमथापि च ।।

न ह्यन्येयं सुखं तेषामतस्ते प्रियवर्जिताः ।
यथा ते परमाकाशाद्विष्णोरेव समुत्थिताः ।।

तमेव प्राप्य संयान्ति नैजमानन्दमूर्जितम् ।
एवं सम्यक्प्रसादेन विष्णोर्मुक्तोऽपि योऽपरः ।।

यं प्राप्य ते निजानन्दमाप्नुवन्ति स केशवः ।
तं प्राप्य रमते मुक्तः स्त्रीभिर्यानैश्च बन्धुभिः ।।

यथैव सारथिर्याने एवं देहे च मारुतः ।
यथा रथी तथा विष्णुर्जीवोऽन्यरथगो यथा ।।

इन्द्रियेषु भगवदुपासना

उप.– अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद१ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ।। ४ ।।

अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ।।५।।

य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात् तेषा१ सर्वे च लोकाः आत्ताः सर्वे च कामाः सर्वा१श्च लोकानाप्नोति सर्वा१श्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ।। ६, १२ ।।

भा.– यदाश्रितानीन्द्रियाणि प्राणश्चापि यदाश्रयः ।
यदाश्रयोऽप्ययं जीवो यो वेदैषां प्रवर्तनम् ।।

दर्शनं श्रवणं घ्राणं जिह्वां स्पर्शं मनस्तथा ।
तदीयान् विषयांश्चैव यो वेदाखिलमञ्जसा ।।

स विष्णुः परमो ज्ञेयो देवताः करणानि च ।
स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः ।।

स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः ।
भुङ्क्ते तदिन्द्रियैर्भोगाञ्छुरितैरिन्द्रियैः स्वकैः ।।

जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः ।
भुङ्क्ते तत्तद्गुणान् विष्णुर्नैव दोषान् कदाचन ।।

तमेवं देवताः सर्वाः वाय्वाद्याः समुपासते ।
तस्माद्देववशा लोकाः सर्वकामाः सजीवकाः ।।

तमेतं यो यथा ज्ञात्वा पश्येद्विष्णुं सनातनम् ।
आप्नोति सर्वकामांश्च सर्वलोकांश्च कामतः ।।

इति सामसंहितायाम् ।

## विरोचनमतनिरूपणम्

उभौ लोकाववाप्नोति वचनान्न लोकायतिकमतं विरोचनोक्तम् । किन्तु विम्वप्रतिविम्वयोरभिमान्यैक्याभिप्रायेण जीवात्मैव महय्य इति मायावाद एव । न चात्र जीव आत्मशव्दोक्तः । 'तदस्यामृतस्याशरीरस्यात्मनोधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इतीशजीवयोः सतात्पर्यं भेदाभिधानात् । न हि जीवादन्यस्य प्रियाप्रियानुभवोऽस्ति । न च मुक्तस्यापि प्रियाप्रियापहतिरस्ति ।

प्रियाप्रियरहितो भगवानेव, न जीवः

न च विष्णोरत्र विवक्षितं प्रियम् । पराधीनरतिप्राप्तिर्हि प्रियमत्र विवक्षितं न हि तद्भगवतः । मुक्तानां तु भगवदधीनरतित्वात् प्रियमस्त्येव ।

जीवा मुक्ता अमुक्ताश्च पराधीनरतित्वतः ।
न प्रियापहतिः क्वापि स्वातन्त्र्यान्न हरेः प्रियम् ।।

पराधीनरतिर्यस्मात् प्रियमित्युच्यते बुधैः ।
हरेरधीनता तु स्याद्यद्यपि ब्रह्मवायुवोः ।।

तदन्यवशताभावादप्रियाविति तौ श्रुतौ ।
यथा राज्ञः स्वराट्शब्दो रुद्रस्येश्वरता तथा ।।

यथा शक्रस्य चेन्द्रत्वं तद्वदप्रियता तयोः ।
यथा राज्ञ्याः स्वराज्ञीत्वं यथैवोमेश्वरी स्मृता ।।
विद्युतः स्तनयित्नोश्च तथैवाप्रियता श्रुता ।। इति च परमश्रुतौ ।

'स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तस्य तत्प्रसादात् तत्प्राप्त्या निजानन्दानुभवश्रुतेश्च ।

उत्तमपुरुष इति कथितो भगवानेव

स उत्तमः पुरुष इति तस्य जीवादुत्तमत्वश्रुतेश्च । अपरपुरुषापेक्षया ह्युत्तमपुरुषशब्दो भवति । अन्यथोत्तमशब्द एव स्यात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च ।

ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ।।

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' ।

उत्तमपुरुषो न जीवात्मा

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' 'एतमानन्दमयामात्मानमुपसङ्क्रम्येमा९-ल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' 'न यत्र माया किमुतापरे हरे-रनुव्रता यत्र सुरासुरार्चिताः' 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादेश्च । 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' इत्यत्रापि भेदेनावस्थानश्रुतेः । उपशब्दा-दन्तरशब्दाच्च मुक्तस्य परंज्योतिःसमीपावस्थानावगतेश्च ।

जीवोपासनां न चतुरानन उपदिशेत् इति निरूपणम्

न च जीवमात्रं देवा उपासते । 'ऊर्जं पृथिव्या भक्त्वायोरु-गायमुपासते' इति हि श्रुतिः । 'भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा' इत्यादेश्च ।

भगवतः इन्द्रियैर्भोगकथनम्

'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।
भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान् वचांसि मे ।।'

इत्यादौ भगवत एवेन्द्रियैर्भोगोक्तेश्च ।

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' इति च । 'ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति भगवद्वचनं च ।

इदं पश्यामि जिघ्राणीत्यपि जीवा न वै विदुः ।
द्रव्याणामपरिज्ञानाद्वेदासौ पुरुषोत्तमः ।। इति च ।

उत्तमपुरुषत्वेन भगवानेव परामृष्टः

'स उत्तमः पुरुषः' इति भगवत एवायं परामर्शः । 'ॐ अन्यार्थश्च परामर्शः' इति भगवद्वचनात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च । 'ॐ जगद्व्यापारवर्जम्' इत्यल्पैश्वर्यत्वं च मुक्तस्य भगवताऽभिहितम् । अतो यं प्राप्य जीवः स्वेन रूपेणाभिनिष्पद्यते स भगवानुत्तमः पुरुष इति परामर्शः । 'स्वप्ने महीयमानश्चरति यत्रैतत्सुप्तः' इति पुरस्तादपि भेदोक्तेः । न हि महीयमान एव जीवश्चरति । प्रायोग्यः सारथिः । प्रयोगेन यानस्य । 'यन्ता सारथिरानेता प्रायोग्य इति कीर्त्यते' इत्यभिधानात् । 'अन्येभ्यो दीप्यमानत्वाद् दैवं चक्षुर्मनः स्मृतम्' इति च । य एते ब्रह्मलोके तेषु रमते । अनुविद्य । शास्त्राचार्यानुसारेण विदित्वा विजानात्यापरोक्ष्येण । 'वेदनं शास्त्रतो ज्ञानं विज्ञानं ब्रह्मदर्शनम्' इति च ।। ७-१२ ।।

मोक्षप्रार्थना

उप.– श्यामाच्छबलं प्रपद्ये शबलाच्छयामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ।। १३ ।।

भा.– श्यामो हृदिस्थितो विष्णुः शबलो विश्वरूपवान् ।
जीववर्णो जीवगतो लोहितश्चक्षुषि स्थितः ।। इति मानसे ।।

हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु ।
रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः ।।

यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु ।
तान्युक्तरेषां वाक्यानि भविष्याण्यवदद्धरिः ।।
एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा ।।
इति सामसंहितायाम् ।। १३ ।।

यशःप्रार्थना

उप.– आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत९ँ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ।।१,१४।।

भा.– आकाशोऽतिप्रकाशत्वान्नामरूपे ऋते स्थितः ।
ब्रह्माख्यो भगवान् विष्णुस्तद्वेश्म प्राप्नुयामहम् ।।

यशोऽहं सर्ववर्णानां मत्तोऽन्येषां यशो भवेत् ।
सोऽहं मम यशोदातृ यशसां यश उत्तमम् ।।

विष्ण्वाख्यं परमं ब्रह्म श्वेतं श्वसनगं यतः ।
अदत्कमद्यमानं कं स्वानन्दानुभवात्मकम् ।।
लिन्दु तद्गतिदं यस्माद् तदहं प्राप्नुयां सदा ।। १४ ।।

सम्प्रदायप्राप्तशास्त्रश्रवणादितः शाश्वतमोक्षलाभनिरूपणम्

उप.– तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषणाभिसमावृत्य कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहि९ँसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः

स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते ।। १५ ।।

।। इति श्रीमच्छान्दोग्योपनिषदि अष्टमोऽध्यायः ।।

।। इति श्रीमच्छान्दोग्योपनिषत् सम्पूर्णा ।।

भा.– उपदिष्टः परेणैव त्वेवमाह चतुर्मुखः ।
उवाच च मनोर्विद्यां प्रजाभ्यो मनुरेव च ।।

तस्मात् सर्वेन्द्रियाणीशो निधाय पुरुषोत्तमे ।
दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यते ।।
नावर्तेत पुनस्तस्मात् कदाचित् केनचित् क्वचित् ।।
इति च ।। १५ ।।

अन्तिमं मङ्गलाचरणम्

पूर्णानन्दमहोदधिः परतमो विष्णुः परस्मात् सदा
सर्वज्ञः सकलेशिता गुणनिधिर्नित्योत्सवस्तद्विदाम् ।
सर्वस्मादधिकं मम प्रियतमस्त्विष्टादपीष्टोत्तमः
सर्वस्माच्च हितात् सदा हिततमः प्रीतो भवेन्मे हरिः ।।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ।।

यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु ।
तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः ।।
एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा ।।
इति सामसंहितायाम् ।। १३ ।।

यशःप्रार्थना

उप.– आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ।।१,१४।।

भा.– आकाशोऽतिप्रकाशत्वान्नामरूपे ऋते स्थितः ।
ब्रह्माख्यो भगवान् विष्णुस्तद्वेश्म प्राप्नुयामहम् ।।

यशोऽहं सर्ववर्णानां मत्तोऽन्येषां यशो भवेत् ।
सोऽहं मम यशोदातृ यशसां यश उत्तमम् ।।

विष्ण्वाख्यं परमं ब्रह्म श्वेतं श्वसनगं यतः ।
अदत्कमद्यमानं कं स्वानन्दानुभवात्मकम् ।।
लिन्दु तद्गतिदं यस्माद् तदहं प्राप्नुयां सदा ।। १४ ।।

सम्प्रदायप्राप्तशास्त्रश्रवणादितः शाश्वतमोक्षलाभनिरूपणम्

उप.– तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषणाभिसमावृत्य कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः

शिल्पः कश्यपः कश्यपात् नैध्रुवेः कश्यपो नैध्रुविः वाचो वागम्भ्रिण्या अम्भ्रिण्यादादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ।। ३ ।।

समानमा साञ्जीवीपुत्रात् साञ्जीवीपुत्रो माण्डूकायनेः माण्डूकायनिः माण्डव्यान्माण्डव्यः कौत्सात् कौत्सो माहित्थेः माहित्थिः वाम-कक्षायणात् वामकक्षायणः शाण्डिल्यात् शाण्डिल्यो वात्स्यात् वात्स्यः कुश्रेः कुश्रिर्यज्ञवर्चसो राजस्तम्बायनात् यज्ञवर्चा राज-स्तम्बायनस्तुरात् कावषेयात् तुरः कावषेयः प्रजापतेः प्रजापतिः ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ।। ४ ।।

।। इति पञ्चमं ब्राह्मणम् ।।

।। इति बृहदारण्यके अष्टमोऽध्यायः ।।

।। इति बृहदारण्यकोपनिषत् समाप्ता ।।

पञ्चाग्निविद्यया चैव तथैव प्राणविद्यया ।
प्रजातिकर्मणा चैव तथा ज्ञानप्रदानतः ।।

आचार्यवंशविज्ञानाद्यः पूज्यः पुरुषोत्तमः ।
सर्वान्तर्यामिको नित्यो नमस्तस्मै परात्मने ।। इति सद्भावे ।

।। इति वंशब्राह्मणम् ।। ५ ।।

भाष्ये अन्तिमं मङ्गलाचरणम्

नित्यानन्दमनौपमं परमजं सर्वत्रगं सुस्थिरं
सर्वज्ञं प्रतिबोधमात्रममलं पूर्णं गुणैरच्युतैः ।

विश्वोत्पत्तिलयस्थितिप्रमितिसन्मोक्षे परं कारणं
प्रेष्ठं मे सततं प्रियात् प्रियतमं नित्यं सदोपास्महे ।।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो
यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ।।

हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।।

भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृतः ।
ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।।

प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृताः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।।

मध्व आनन्दतीर्थः स्यात् तृतीया मारुतीतनुः ।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।।
यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ।। इति च ।

साधको रामवाक्यानां तत्समीपगतः सदा ।
हनुमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।।

पूतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽनन्दतीर्थनामा प्रकीर्तितः ।।

दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।।

आसमन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं तु जगदेतदनीश्वरम् ।।

वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।
येन विष्णोर्हि वर्पाख्यान् गुणानज्ञासिषुः परान् ।।

ईशानासः सूरयश्च निगूढाभिर्गुणोक्तिभिः ।
त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।।

येषां हि परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयं तु ब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ।। इति च ।।

पूर्णानन्दगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्बृहदारण्यकोपनिषद्भाष्ये अष्टमोऽध्यायः ।।

।। इति वृहदारण्कोपनिषद्भाष्यं समाप्तम् ।।

।। श्रीकृष्णार्पणमस्तु ।।

श्रीमदाचार्यसद्ग्रन्थशिरोमणि सुसङ्ग्रहात् ।
टीकाकृदादिसंस्तुत्यं प्रीयतां श्रीहरिद्वयम् ।।

शिलापालयेन बालेन प्रल्हादार्यसुतेन च ।
गुत्तलाचार्यशिष्येण कृतोऽयं ग्रन्थसङ्ग्रहः ।।

उपाध्यायेन कृष्णेन प्रीयतां कमलापतिः ।
समर्पितोऽयं सद्ग्रन्थः तत्सेवाकृष्ट चेतसा ।
श्रीहरिप्राणपदयोः कृष्णाभिधविपश्चिता ।।

# सर्वमूलग्रन्थाः

**Śri Ânandatirtha (Śri Madhvâchârya) has composed 37 works. These are well planned to present Dvaita Vedânta thoughts.**

i) **दशप्रकरणानि (ten manuals) viz. तत्त्वसङ्ख्यान, तत्त्वविवेक, तत्त्वोद्योत, विष्णुतत्त्वविनिर्णय, प्रमाणलक्षण, कथालक्षण, कर्मनिर्णय, खण्डनत्रय.**

**These introduce the basic terminology and the basic doctrines of Dvaita Vedânta.**

ii) **गीताभाष्य and गीतातात्पर्यनिर्णय. These two explain the dvaita doctrines enshrined in Bhagavadgita viz. विष्णुसर्वोत्तमत्त्व, जगत्सत्यत्व and पञ्चभेद.**

iii) **ब्रह्मसूत्रभाष्य, अणुभाष्य, ब्रह्मसूत्रानुव्याख्यान and न्यायविवरण. These give a critical exposition of Dvaita Vedânta doctrines presented in सूत्रप्रस्थान.**

iv) **महाभारततात्पर्यनिर्णय and भागवततात्पर्यनिर्णय. These constitute इतिहास पुराणप्रस्थान.**

**These are the critical explanation of Mahâbhârata and Bhâgavata.**

v) **ऋग्भाष्य This work gives philosophical import of about 40 hymns of ऋग्वेद.**

vi) **ईश-तलवकार-काठक-प्रश्न-आथर्वण-माण्डूक-तैत्तिरीय-ऐतरेय-बृहदारण्यक-छान्दोग्य- उपनिषद्भाष्याणि - Ten Principle Upaniṣadbhâṣyas.**

vii) **तन्त्रसारसङ्ग्रह – A work on worship and iconography and द्वादशस्तोत्र is a prayer of Supreme God of ten incarnations. यमकभारत is a summary of Mahâbhârata in यमक metre.**

viii) **कृष्णामृतमहार्णव, सदाचारस्मृति, जयन्तीनिर्णय and यतिप्रणवकल्प These two works explain religious practices and code of conduct.**

ix) **नरसिंहनखस्तुति, two verses describing the nails of नरसिंह as a priliminary to हरिवायुस्तुति.**

**These works explains Dvaita Doctrines, Vaiṣṇava religion and ethics in a methodical way. These constitute the primary source of Dvaita Vedânta Philosophy.**